# स्मृतिचन्द्रिका

श्रीयाज्ञिकदेवणभट्टोपाध्यायरचिता

## श्राद्धकाण्डः
## आशौचकाण्डः

# SMRITICHANDRIKA

BY

**DEVANA-BHATTA**

EDITED BY

L. SRINIVASACHARYA
*Pandit, Govt. Oriental Library, Mysore*

## IV. SRADDHAKANDA
## V. ASAUCHA KÂNDA

---




नाग प्रकाशक
११ ए/यू. ए., जवाहर नगर, दिल्ली-७

This Publication has been brought out with the financial r sistance from the Govt. of India, Ministry of Human ource Development.

f any defect is found in this volume, please return the copy /PP for postage to the Publisher for free exchange.)

AG PUBLISHERS

11A/ U.A. Jawahar Nagar, Delhi-110007

8A/3 U.A. Jawaharnagar, Delhi-110007

Jalalpur Mafi (Chunar-Mirzapur) U. P.

ISBN 81-7081-177-5 (Set)

**1988**

PRICE Rs. per set

PRINTED IN INDIA

Published by Nag Sharan Singh for Nag Publishers, 11A/U.A. Jawaharnagar, Delhi-110007 and printed at New Gian Offset Printers, Delhi.

# स्मृतिचन्द्रिकायां श्राद्धकाण्डस्थविषयानुक्रमणिका.

पुटसङ्ख्या

पुटसङ्ख्या

# स्मृतिचन्द्रिका

श्री याज्ञिकदेवणभट्टोपाध्याय विरचिता

## श्राद्धकाण्डः

# SMRITICHANDRIKA

BY

DEVANA BHATTA

## IV. SRADDHAKANDA

श्रीः.

# स्मृतिचन्द्रिका

## श्राद्धकाण्डप्रारम्भः.

उक्तमाह्निके नित्यश्राद्धं, अधुना तत्प्रसङ्गाच्छ्राद्धप्रकरण-
मारभ्यते

तत्रादौ श्राद्धमहिमा । तत्र सुमन्तुः—

श्राद्धात्परतरं नान्यच्छ्रेयस्करमुदाहृतम् ।
तस्मात्सर्वप्रयत्नेन श्राद्धं कुर्याद्विचक्षणः ॥

देवलोऽपि—

अरोगः प्रकृतिस्थश्च चिरायुः पुत्रपौत्रवान् ।
अर्थवानर्थकामी च श्राद्धकामो भवेदिह ॥
परत्र च परां तुष्टिं लोकांश्च विविधान् शुभान् ।
श्राद्धकृत्समवाप्नोति यशश्च विपुलं नरः ॥

याज्ञवल्क्योऽपि —

आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च ।
प्रयच्छन्ति तथा राज्यं प्रीता नृणां पितामहाः ॥

यमोऽपि—

ये यजन्ति पितॄन् देवान् ब्राह्मणान् सहुताशनान् ।
सर्वभूतान्तरात्मानं विष्णुमेव यजन्ति ते ॥

आयुः पुत्रान् यशस्स्वर्गं कीर्तिं पुष्टिं बलं श्रियम् ।
पशून् सुखं धनं धान्यं प्राप्नुयात्पितृपूजनात् ॥

मार्कण्डेयपुराणेऽपि—

पिता पितामहश्चैव तथैव प्रपितामहः ।
पिण्डसम्बन्धिनो ह्येते विज्ञेयाः पुरुषास्त्रयः ॥
लेपसम्बन्धिनस्त्वन्ये पितामहपितामहात् ।
प्रभृत्युक्तास्त्रयस्तेषां यजमानश्च सप्तमः ॥
तथाऽन्ये पूर्वजास्स्वर्गे येचान्ये नरकौकसः ।
ये च तिर्यक्त्वमापन्ना ये च भूतादिसंस्थिताः ॥
तांत्सर्वान्यजमानो वै श्राद्धं कुर्वन्यथाविधि ।
समाप्याययते वत्स येन येन शृणुष्व तत् ॥
अन्नप्रकिरणं यत्तु मनुष्यैः क्रियते भुवि ।
तेन तुष्टिमुपायान्ति ये पिशाचत्वमागताः ॥
यदम्बु स्नानवस्त्रोत्थं भूमौ पतति पुत्रक ।
तेन ये तरुतां प्राप्तास्तेषां तृप्तिः प्रजायते ॥
यास्तु गन्धाम्बुकणिकाः पतन्ति धरणीतले ।
ताभिराप्यायनं तेषां ये देवत्वं कुले गताः ॥
उद्धृतेषु तु पिण्डेषु याश्चात्र कणिका भुवि ।
ताभिराप्यायनं तेषां ये तिर्यक्त्वं कुले गताः ॥
ये चादन्ताः कुले बालाः क्रियायोग्या ह्यसंस्कृताः ।
विपन्नास्ते तु विकिरसंमार्जनजलाशिनः ॥

भुक्त्वा चाचमतां यच्च जलं यच्चाङ्घ्रिसेचने ।
ब्राह्मणानां तथैवान्ये तेन तृप्तिं प्रयान्ति वै ॥
तेनानेककुले तत्र तत्तद्योन्यन्तरं गताः ।
प्रयान्त्याप्यायनं वत्स सम्यक् श्राद्धक्रियावताम् ॥

बृहस्पतिरपि—

य एवं वेत्ति मतिमांस्तस्य श्राद्धफलं भवेत् ।
उपदेष्टाऽनुमन्ता च लोके तुल्यफलौ स्मृतौ ॥
इमं श्राद्धविधिं पुण्यं कुर्याद्वाऽपि पठेत्तु यः ।
सर्वकामैस्स बध्नाति ह्यमृतत्वं च विन्दति ॥

तथाऽकरणेऽपि दोषस्तेनैव दर्शितः—

न तत्र वीरा जायन्ते नारोगा न शतायुषः ।
न च श्रेयोऽधिगच्छन्ति यत्र श्राद्धं विवर्जितम् ॥

आदित्यपुराणेऽपि—

न सन्ति पितरश्चेति कृत्वा मनसि यो नरः ।
श्राद्धं न कुरुते तत्र तस्य रक्तं पिबन्ति ते ॥

तथा धनाशुद्धावपि दोषो मार्कण्डेयपुराणे दर्शितः—

अन्यायोपार्जितैर्द्रव्यैर्यच्छ्राद्धं क्रियते नरैः ।
तृप्यन्ति तेन चण्डालाः पुल्कसाद्याश्च योनयः ॥ इति ॥

इति स्मृतिचन्द्रिकायां श्राद्धमहिमा.

## अथ श्राद्धभेदाः.

तत्र विश्वामित्रः—

नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं सपिण्डनम् ।
पार्वणं चेति विज्ञेयं गौष्ठ्यं शुद्ध्यर्थमष्टमम् ॥
कर्माङ्गं नवमं प्रोक्तं दैविकं दशमं स्मृतम् ।
यात्रास्वेकादशं प्रोक्तं पुष्ट्यर्थं द्वादशं स्मृतम् ॥

तत्र नित्यनैमित्तकयोर्लक्षणं पारस्करेणोक्तम्—

अहन्यहनि यच्छ्राद्धं तन्नित्यमिति कीर्तितम् ।
वैश्वदेवविहीनं तु अशक्तोप्युदकेन तु ॥
एकोद्दिष्टं तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते ।
तदप्यदैवं कर्तव्यमयुग्मानाशयेद्द्विजान् ॥ इति ॥

काम्यादीनां लक्षणं वृद्धवसिष्ठेनोक्तम्—

अभिप्रेतार्थसिद्ध्यर्थं काम्यं पार्वणवत्स्मृतम् ।
पुत्रजन्मविवाहादौ वृद्धिश्राद्धमुदाहृतम् ॥
नवानीतार्घ्यपात्रं च पिण्डश्च परिकीर्यते ।
पितृपात्रेषु पिण्डेषु सपिण्डीकरणं तु तत् ॥
प्रतिपर्व भवेद्यस्मात् प्रोच्यते पार्वणं तु तत् ।
गोष्ठ्यां यत्क्रियते श्राद्धं गोष्ठीश्राद्धं तदुच्यते ।
बहूनां विदुषां प्राप्तौ सुखार्थं पितृतृप्तये ॥

इति । शुद्ध्यर्थस्य लक्षणं प्रचेतसोक्तम्—

क्रियते शुद्धये यत्तु ब्राह्मणानां तु भोजनम् ।

शुद्ध्यर्थमिति तत्प्रोक्तं श्राद्धं पार्वणवत्कृतम् ॥

कर्माङ्गादीनां लक्षणं पारस्करेणोक्तम्—

निषेककाले सोमे च सीमन्तोन्नयने तथा ।
ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं विधिवत्कृतम् ॥
देवानुद्दिश्य क्रियते यत्तद्दैविकमुच्यते ।
तन्नित्यश्राद्धवत्कुर्याद्द्वादश्यादिषु यत्नतः ॥
गच्छन् देशान्तरं यद्धि श्राद्धं कुर्यात्तु सर्पिषा ।
तद्यात्रार्थमिति प्रोक्तं प्रवेशे च न संशयः ॥ इति ।

अत्र कर्माङ्गवचनमकरणे कर्मवैगुण्यज्ञापनार्थम् । सर्पिषा सर्पिःप्रधानकेनेत्यर्थः । अन्यथा केवलेन तृप्तेरशक्यत्वात् ॥

इति स्मृतिचन्द्रिकायां श्राद्धभेदाः.

---

## अथ श्राद्धाधिकारिनिर्णयः

तत्र बृहस्पतिः—

प्रमीतस्य पितुः पुत्रैः श्राद्धं देयं प्रयत्नतः ।
ज्ञातिबन्धुसुहृच्छिष्यऋत्विग्भृत्यपुरोहितैः ॥ इति ॥

पुत्राभाव इति शेषः । पितुर्ग्रहणं मातुरपि प्रदर्शनार्थम्—

अत एव सुमन्तुः—

मातुः पितुः प्रकुर्वीत संस्थितस्यौरसस्सुतः ॥ इति ।

एतदनुपनीतेनापि कार्यम् । तदाह सुमन्तुः—

श्राद्धं कुर्यादवश्यं तु प्रमीतपितृको हि यः ।

व्रतस्थो वाऽव्रतस्थो वा एक एव भवेद्यदि ॥

अव्रतस्थोऽनुपनीतः । अत एव वृद्धमनुः—

कुर्यादनुपनीतोपि श्राद्धमेको हि यस्सुतः ।
पितृयज्ञाहुतिं पाणौ जुहुयाद्ब्राह्मणस्य सः ॥ इति ।

अत्र विशेषमाह व्याघ्रः—

कृतचौलस्तु कुर्वीत उदकं पिण्डमेव च ।
स्वधाकारं प्रयुञ्जीत वेदोच्चारं न कारयेत् ॥

मातापित्रोरिति शेषः । स्मृत्यन्तरेऽपि—

कृतचूडोऽनुपेतस्तु पित्रोश्श्राद्धं समाचरेत् ।
उदाहरेत्स्वधाकारं न तु वेदाक्षराण्यसौ ॥ इति ॥

वेदाक्षराण्यपि प्रयोक्तव्यानीत्याह—

न ह्यस्मिन् युज्यते कर्म किञ्चिदामौञ्जिबन्धनात् ।
नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते ॥ इति ।

एवञ्चात्र विकल्पो द्रष्टव्यः । पुत्राभावे तु शङ्खोक्तम्—

पितुः पुत्रेण कर्तव्याः पिण्डदानोदकक्रियाः ।
पुत्राभावे तु पत्नी स्यात् पत्न्यभावे तु सोदरः ॥

इति । पुत्रग्रहणेनात्र मुख्या गौणाश्च गृह्यन्ते—

पिण्डदोंऽशहरश्चैषां पूर्वाभावे परःपरः ।

इति याज्ञवल्क्यस्मरणात् । अतो द्विविधपुत्राभावे 'पुत्राभावे तु पत्नी स्यात्' इति वचनार्थः । तदपि पौत्राभावविषयम्—

पौत्रोऽथ पुत्रिकापुत्रः स्वर्गप्राप्तिकरावुभौ ।

रिक्थे च पिण्डदाने च समौ तौ परिकीर्तितौ ॥

इति बृहस्पतिना गौणपुत्रसामान्याभिधानात् । न चैवं पिण्डदाने पुत्रपौत्रयोर्विकल्पस्स्यादिति शङ्कनीयम्,

पुत्रेषु विद्यमानेषु नान्यो वै कारयेत्स्वधाम् ।

इति ऋश्यशृङ्गस्मरणात् ।

नैतत्पौत्रेण कर्तव्यं पुत्रवांश्चेत्पितामहः ।

इति कात्यायनस्मरणात् । पुत्राभावे तु पत्नी स्यादित्येतदप्यङ्ग-पत्न्या दायहरत्वात्तद्विषयम् । अन्यथा तु यो दायहरस्स एव दद्यात् । अत एव विष्ण्वापस्तम्बौ 'यश्चार्थहरस्स पिण्डदायी, पुत्रः पितृवित्ताभावे पिण्डं दद्यात्' इति । अत एव याज्ञवल्क्येनाऽपि—

पिण्डदोंऽशहरश्चैषां पूर्वाभावे परः परः । इति

पिण्डदत्वांशहरत्वयोरैकाधिकरण्यमुक्तम् । एवं सोदरेऽपि द्रष्टव्यम् । एवञ्च यदुक्तं मनुना—

भ्रातॄणामेकजातानां एकश्चेत्पुत्रवान् भवेत् ।

सर्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ॥ इति ॥

तत्र पुत्रग्रहणं ग्रामस्य तात इतिवत् प्रशंसार्थमित्यवगन्तव्यम् । अन्यथा 'पत्नीदुहितरः' इत्याद्यसमञ्जसं स्यात् । अनेनैवाभिप्रायेणगौतमोऽपि 'पुत्राभावेऽस्य बान्धवाः सपिण्डाः मातृसपि-

ण्डाः शिष्याश्च दद्युः । तदभावे ऋत्विगाचार्यौ' इति। मातृ-सपिण्डा मातुलादयः। सपिण्डाभावे समानोदकाः पिण्डं दद्युः। तथाच मार्कण्डेयपुराणे—

पुत्राभावे सपिण्डास्तु तदभावे तु सोदकाः।
मातुस्सपिण्डा ये वा स्युर्ये वा मातुश्च सोदकाः॥
कुर्युरेनं विधिं सम्यगपुत्रस्य सुतास्स्मृताः।
कुर्यान्मातामहायैवं पुत्रिकातनयस्तथा॥
सर्वाभावे स्त्रियः कुर्युस्स्वभर्तॄणाममन्त्रकम्।
तदभावे च नृपतिः कारयेत्स्वकुटुम्बिनाम्॥
तज्जातीयैः नरैस्सम्यग्दाहाद्यास्सकलाः क्रियाः।
सर्वेषामेव वर्णानां बान्धवो नृपतिर्यतः॥

श्री विष्णुपुराणे पराशरोपि—

पुत्रः पौत्रः प्रपौत्रो वा तद्वद्वा भ्रातृसन्ततिः।
सपिण्डसन्ततिर्वाऽपि क्रियार्हा नृप जायते॥
तेषामभावे सर्वेषां समानोदकसन्ततिः।
मातृपक्षस्य पिण्डेन सम्बद्धा ये जलेन वा॥
कुलद्वयेऽपि चोत्सन्नैस्स्त्रीभिः कार्याः क्रिया नृप।
तत्सङ्घातगतैर्वाऽपि कार्याः प्रेतस्य वै क्रियाः॥
उत्सन्नबन्धुरिक्थानां कारयेदवनीपतिः। इति।

उक्तेषु पुत्रादिषु कस्य कस्मिन्कर्मण्यधिकार इत्याशङ्क्य स एवाह—

पूर्वाः क्रिया मध्यमाश्च तथा चैवोत्तराः क्रियाः ।
त्रिप्रकाराः क्रिया ह्येतास्तासां भेदान् शृणुष्व मे ॥
आद्याहाद्द्वादशाहाच्च मध्ये यास्स्युः क्रिया मताः ।
ताः पूर्वा मध्यमा मासि मास्येकोद्दिष्टसंज्ञिकाः ॥
प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु ।
क्रियन्ते याः क्रियाः पित्र्याः प्रोच्यन्ते ता नृपोत्तराः ॥
पितृमातृसपिण्डैस्तु समानसलिलैस्तथा ।
तत्सङ्घातगतैश्चैव राज्ञा वा धनहारिणा ॥
पूर्वाः क्रियाश्च कर्तव्याः पुत्राद्यैश्चोत्तराः क्रियाः ।
दौहित्रैर्वा नृपश्रेष्ठ कार्यास्तत्तनयैस्तथा ॥ इति ॥

सपिण्डाद्यैरवनिपत्यन्तैः पूर्वाः क्रियाः मध्यमाश्च कर्तव्याः । पुत्राद्यैरेव भ्रातृसन्तत्यन्तैर्दौहित्राद्यैश्चोत्तराः क्रियाः कर्तव्या न सपिण्डाद्यैरवनिपत्यन्तैरित्यर्थः । दौहित्रेषु तु भविष्यत्पुराणोक्तो विशेषः—

यथा व्रतस्थोऽपि सुतः पितुः कुर्यात्क्रियां नृप ।
उदकाद्या महाबाहो दौहित्रोऽपि तथाऽर्हति ॥ इति ॥

ननु च पुत्राभावे तु पत्नी स्यादित्येतत्—'सर्वाभावे स्त्रियः कुर्युः स्वभर्तॄणाममन्त्रकम्' इति पुराणवचनेन विरुध्यते । नैवम्—पुत्राभावे तु पत्नी स्यादित्येतद्ब्राह्मादिविवाहोढादिविषयं, तस्या यज्ञान्वितत्वेन तत्रैव पत्नीशब्दप्रयोगात् । इतरत्र तु—

क्रयक्रीता तु या नारी न सा पत्नी विधीयते ।
न सा दैवे न सा पित्र्ये दासीं तां कवयो विदुः ॥

इति पत्नीत्वाभावात् स्वभर्तॄणाममन्त्रकमिति पुराणवचनं तद्विषयम् । यद्वा—पुत्राभावे तु पत्नी स्यादित्येतद्ब्रह्मवादिनीविषयम्, तस्या अध्ययनसद्भावेन मन्त्रयोगित्वात् । पुराणवचनं त्वध्ययनविहीनसद्योवध्वभिप्रायमित्यनुसन्धेयम् । यदत्र युक्तं तद्ग्राह्यम् । पत्न्यां तु विशेषमाह वृद्धमनुः—

अपुत्रा शयनं भर्तुः पालयन्ती व्रते स्थिता ।
पत्नी दद्यात्तु तत्पिण्डं कृत्स्नमंशं लभेत च ॥

इति । शयनं पालयन्ती सुसंयतेत्यर्थः । विष्णुरपि—

श्वश्र्वादीनां तथा पिण्डं पत्नी दद्यात्सुसंयता ।

इति । यत्तु कात्यायनेनोक्तं—

पुत्रश्शिष्योऽथवा पत्नी पिता भ्राताऽथवा गुरुः ।
स्त्रीहारी धनहारी च कुर्युः पिण्डोदकक्रियाम् ॥ इति,

यदपि वृद्धशातातपेन—

मातुलो भागिनेयस्य स्वस्रीयो मातुलस्य च ।
श्वशुरस्य गुरोश्चैव सख्युर्मातामहस्य च ॥
एतेषां चैव भार्याणां स्वसुर्मातुः पितुस्तथा ।
श्राद्धमामं तु कर्तव्यमिति वेदविदां स्थितिः ॥ इति,

अत्रापि श्रीविष्णुपुराणवचनानुसारेण व्यवस्था वेदितव्या ।

यत्तु कात्यायनेनोक्तं—

अपुत्रायां पतिर्दद्यात्सपुत्रायां तु न क्वचित् ।

न पुत्रस्य पिता कुर्यात् नानुजस्य तथाऽग्रजः ॥

इति, तत् स्नेहविहीनपित्रादिविषयम् । अत एव बोधायनः—

पित्रा श्राद्धं न कर्तव्यं पुत्राणां तु कथञ्चन ।

भ्रात्रा नैव च कर्तव्यं भ्रातॄणां च कनीयसाम् ॥

अपि स्नेहेन कुर्यातां सपिण्डीकरणं विना ।

गयायां तु विशेषेण ज्यायानपि समाचरेत् ॥ इति ॥

अत्र धनहारित्वादिनिमित्ताभावेऽपि कृतेऽभ्युदय इत्याह वृद्ध-शातातपः—

पितुश्श्राद्धं तु कर्तव्यं सर्वेषां वर्णलिङ्गिनाम् ।

एवं कुर्वन्नरस्सम्यङ्महतीं श्रियमाप्नुयात् ॥

इति । लिङ्गिन आश्रमिणः । एतच्च सवर्णाभिप्रायेण, अन्यथा दोषश्रवणात् । तथाच मरीचिः—

ब्राह्मणो ह्यसवर्णस्य यः करोत्यौर्ध्वदैहिकम् ।

तद्वर्णत्वमसौ याति इह लोके परत्र च ॥

पारस्करोऽपि—

न ब्राह्मणेन कर्तव्यं शूद्रस्य त्वौर्ध्वदैहिकम् ।

शूद्रेण वा ब्राह्मणस्य विना पारशवात्क्वचित् ॥

इति स्मृतिचन्द्रिकायां श्राद्धाधिकारिनिर्णयः

---

## अथ मातामहश्राद्धाधिकारिनिर्णयः.

तत्र पुलस्त्यः—

मातुः पितरमारभ्य त्रयो मातामहाः स्मृताः ।
तेषां तु पितृवच्छ्राद्धं कुर्युर्दुहितृसूनवः ॥

पितृवच्छ्राद्धं पार्वणमित्यर्थः । तच्च श्राद्धमावश्यकम् । अत एव व्यासः—

पितॄन् मातामहांश्चैव द्विजश्श्राद्धेन तर्पयेत् ।
अनृणश्च पितॄणां तु ब्रह्मलोकं स गच्छति ॥

पुराणेऽपि—

कृत्वा तु पैतृकं श्राद्धं पितृप्रभृतिषु त्रिषु ।
कुर्यान्मातामहानां च तथैवानृण्यकारणात् ॥

इति । आनृण्यग्रहणं नित्यत्वज्ञापनार्थम् । अत एवाकरणे दोषः पुराणे दर्शितः—

पार्वणं कुरुते यस्तु केवलं पितृहेतुकम् ।
मातामहं न कुरुते पितृहा स प्रजायते ॥
पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवम् ।
अविशेषेण कर्तव्यं विशेषान्नरकं व्रजेत् ॥

इति । यत्र यस्मिन् कर्मणि पितरः पूज्यन्ते तत्राविशेषेण मातामहा अपि पूज्या इत्यर्थः । अनेन सर्वस्मिन्नपि पितृश्राद्धे मातामहश्राद्धमपि कार्यमित्युक्तं भवति । अत्र केषुचिदपवादमाह कात्यायनः—

कर्षूसमन्वितं मुक्त्वा तदाद्यं श्राद्धषोडशम् ।
प्रत्याब्दिकं च शेषेषु पिण्डास्स्युष्षाडिति स्थितिः ॥

इति । कर्षूसमन्वितं सपिण्डीकरणश्राद्धम् । षोडशग्रहणमेकोद्दिष्टोपलक्षणार्थम् । एवञ्च यन्मातामहश्राद्धं पितृश्राद्धेषु विहितं तत्रैव दोषानृण्ययोरभिधानात्तदेव सर्वदौहित्रसाधारणम् । यः पुनर्धनहारी दौहित्रः स नवश्राद्धाद्यपि कुर्यादेव । 'यो यत आददीत स तस्मै श्राद्धं कुर्यात्' इति स्मरणात् । अनेनैवाभिप्रायेण स्कन्दोऽपि—

श्राद्धं मातामहानां तु अवश्यं धनहारिणा ।
दौहित्रेणार्थनिष्कृत्यै कर्तव्यं विधिवत्सदा ॥

इति । यो धनहारी दौहित्रः तेनावश्यं नवश्राद्धाद्यौर्ध्वदैहिकं कार्यमित्यर्थः । तत्रोपपत्तिमाह स एव—

मलमेतन्मनुष्याणां द्रविणं यत्प्रकीर्तितम् ।
तद्गृह्णन् मलमादत्ते दुर्भेदं ज्ञानिनामपि ॥
ऋषिभिस्तस्य निर्दिष्टा निष्कृतिः पावनी परा ।
आ देहपतनात्कुर्यात्तस्य पिण्डोदकक्रियाम् ॥

इति । ननु च—

कुर्यान्मातामहश्राद्धं नियमात्पुत्रिकासुतः ।
उभयोरपि सम्बद्धः कुर्यात्स उभयोरपि ॥

इति यमेन पुत्रिकापुत्र एव नियमग्रहणादन्यत्र नियमो न गृह्यते, मैवं—वचनार्थापरिज्ञानात् । अस्यार्थः—द्विविधो हि

पुत्रिकापुत्रः, एको मातामहेन सम्बद्धः अपरः पितृमातामहाभ्यामिति। तत्र प्रथमो मातामहश्राद्धं नियमेन कुर्यात् पितृश्राद्धमिच्छया, य उभयसम्बद्धः स उभयोरपीति। अतो नानेन नियमोऽवगम्यते। यदपि मनुनोक्तं—

दौहित्रो ह्यखिलं रिक्थमपुत्रस्य पितुर्हरेत्।
स एव दद्यात् द्वौ पिण्डौ पित्रे मातामहाय च॥

इति, तदपि यो धनहारी दौहित्रस्स एव पितृमातामहयोर्नवश्राद्धाद्यौर्ध्वदैहिकं कुर्यात्, नेतर इत्येवंपरं न पुनरितरस्य श्राद्धमात्रनिषेधार्थं, पूर्वोक्तानृण्यादिप्रतिपादकवचनविरोधात्। एवञ्च यत्कैश्चिदुक्तं धनहारिपुत्रिकापुत्रयोर्मातामहश्राद्धमावश्यकं नान्यस्येति, तत् पूर्वोक्तवचनादर्शननिबन्धनमित्युपेक्षणीयम्। पुत्रिकापुत्रश्राद्धे विशेषमाह मनुः—

मातुः प्रथमतः पिण्डं निर्वपेत्पुत्रिकासुतः।
द्वितीयं तु पितुस्तस्यास्तृतीयं तु पितुः पितुः॥

इति। द्व्यामुष्यायणे तु पुत्रिकापुत्रे उशनसोक्तो विशेषः—

मातामहं तु मात्रादि पैतृकं पितृपूर्वकम्।
मातृतः पितृतो यस्मादधिकारोस्ति धर्मतः॥

इति। क्षेत्रजे तु द्व्यामुष्यायणे देवलोक्तं—

द्व्यामुष्यायणका दद्युः द्वाभ्यां पिण्डोदके पृथक्।

इति। द्वाभ्यां पितृमातृवर्गाभ्यामित्यर्थः। अत्र क्रमविशेषमाह मरीचिः—

सगोत्रो वाऽन्यगोत्रो वा यो भवेद्विधिना सुतः ।
पिण्डं श्राद्धविधानं च क्षेत्रिणे प्राग्विनिर्वपेत् ॥
बीजिने तु ततः पश्चात् क्षेत्री जीवति चेत्क्वचित् ।
बीजिने दद्युरादौ तु मृते पश्चात्प्रदीयते ॥

इति । क्षेत्रिण इति शेषः ।

इति स्मृतिचन्द्रिकायां मातामहश्राद्धाधिकारिनिर्णयः.

---

## अथ जीवपितृकश्राद्धनिर्णयः.

तत्र कात्यायनः—

सपितुः पितृकृत्येषु अधिकारो न विद्यते ।
न जीवन्तमतिक्रम्य किञ्चिद्दद्यादिति श्रुतिः ॥

इति । पितृकृत्येषु श्राद्धेषु पितामहादिसम्बन्धेष्वित्यर्थः । अत्र केषुचिदपवादो मैत्रायणीयपरिशिष्टे दर्शितः—

उद्वाहे पुत्रजनने पित्र्येष्ट्यां सौमिके मखे ।
तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुः ॥

इति । जीवतः पितुः पुत्रस्य षडेते श्राद्धकाला इत्यर्थः । पित्र्येष्ट्यां चातुर्मास्येषु, सौमिके मखे सोमयागादौ पुरोडाशात्पिण्डदाने च । एतत्साग्निकाभिप्रायम् । अत एव सुमन्तुः—

न जीवपितृकः कुर्याच्छ्राद्धमग्निमृते द्विज ।
येभ्य एव पिता दद्यात्तेभ्यः कुर्वीत साग्निकः ॥

पितामहोऽप्येवमेव कुर्याज्जीवति साग्निकः ।
साग्निकोऽपि न कुर्वीत जीवति प्रपितामहे ॥ इति ॥

प्रपितामहग्रहणं पितृपितामहोपेतप्रपितामहप्रदर्शनार्थम् । अत एव विष्णुः—'पितरि पितामहे प्रपितामहेच च जीवति नैव दद्यात्' इति । पितरि पितामहे च जीवति कथं कार्यमित्यपेक्षिते स एवाह—'पितरि जीवति यः श्राद्धं कुर्यात्स येषां पिता कुर्यात्तेषां कुर्यात् पितरि पितामहे च येषां पितामहः' इति । तथा पित्रादिषु त्रिषु द्वयोरेकस्य वा मरणेऽपि तेनैवोक्तं—'यस्य पिता प्रेतस्स्यात्स पित्रे पिण्डं निधाय पितामहात्परं द्वाभ्यां दद्यात् । यस्य पितामहः प्रेतस्स्यात्तस्मै पिण्डं निधाय प्रपितामहात्परं द्वाभ्यां दद्यात् । यस्य पितामहप्रपितामहौ च प्रेतौ स्यातां यस्य पिता प्रपितामहश्च प्रेतौ स्यातां स पित्रे पिण्डं निधाय पितामहात्परं द्वाभ्यां दद्यात्' इति । भविष्यत्पुराणे पितरि जीवति द्वयोरेव श्राद्धमुक्तं—

जीवमाने न देयं स्याद्यस्माद्भरतसत्तम ।
तस्माज्जीवपिता कुर्याद्द्वाभ्यामेव न संशयः ॥

इति । मनुस्तु त्रिषु यो जीवति तमेव श्राद्धे भोजयेदित्याह—

ध्रियमाणे तु पितरि पूर्वेषामेव निर्वपेत् ।
विप्रवद्वापि तं श्राद्धे स्वकं पितरमाशयेत् ॥
पिता यस्य तु वृत्तस्स्याज्जीवेद्वाऽपि पितामहः ।
पितुस्तु नाम संकीर्त्य कीर्तयेत्प्रपितामहम् ॥

पितामहो वा तच्छ्राद्धं भुञ्जीतेत्यब्रवीन्मनुः ॥

इति । पूर्वेषां पितामहादीनाम् । निगमोऽपि—'यो जीवति पितॄणां तं भोजयित्पितृस्थान इत्येके, जीवतामजीवतां वा देयमेवेति हिरण्यकेतुः' इति । एवं पिण्डपितृयज्ञेऽपि द्रष्टव्यम् । अत एव याज्ञवल्क्यः—

होमतः पितृयज्ञस्य जीवेत्पितरि जीवतः ।
पितरं भोजयित्वा वा पिण्डौ निर्वृणुयात्पिता ॥
उभौ यस्य व्यतीतौ तु जीवेच्चेत्प्रपितामहः ।
पिण्डौ निर्वृणुयात्पूर्वौ भोजयेत्प्रपितामहम् ॥

इति । यमस्तु होमोऽपि पाक्षिक इत्याह—

पित्र्यं जीवपितुर्नोक्तमग्नौ होमोऽपि पाक्षिकः ।
येभ्यो वाऽपि पिता तेभ्यो दद्याद्वैतानकर्मणि ॥
दद्यात्तेभ्यः परेभ्यस्तु जीवेच्चेत्त्रितयं यदि ।

इति । पित्र्यं पिण्डदानं, वैतानकर्मणि पिण्डपितृयज्ञ इत्यर्थः । आपस्तम्बस्तु पितरि जीवति न पिण्डदानं नित्यमित्याह—'यदि जीवति पिता न दद्यादा होमात्त्यक्त्वा विरमेत्' इति । अत्र यथास्वशाखं व्यवस्था । भविष्यत्पुराणेऽपि श्राद्धे प्रत्यक्षार्चनं निषिद्धमित्युक्तं—

प्रत्यक्षमर्चनं श्राद्धे न युक्तं मनुरब्रवीत् ।

पिण्डनिर्वापणं चापि महापातकसम्मितम् ॥

इति । मनुरत्र ज्ञानवान्, मनुना तु प्रत्यक्षार्चनस्योक्तत्वात् ।

इति स्मृतिचन्द्रिकायां जीवपितृश्राद्धाधिकारनिर्णयः.

---

## अथ श्राद्धकालाः.

तत्र याज्ञवल्क्यः—

अमावास्याऽष्टका वृद्धिः कृष्णपक्षोऽयनद्वयम् ।
द्रव्यं ब्राह्मणसम्पत्तिः विषुवत्सूर्यसङ्क्रमः ॥
व्यतीपातो गजच्छाया ग्रहणं चन्द्रसूर्ययोः ।
श्राद्धं प्रति रुचिश्चैव श्राद्धकालाः प्रकीर्तिताः ॥

इति । यस्यां तिथौ सूर्याचन्द्रमसोः सन्निकर्षः साऽमावास्या । तस्यां तिथौ श्राद्धमावश्यकम् । तथाच लौगाक्षिः—

श्राद्धं कुर्यादवश्यं तु प्रमीतपितृकस्स्वयम् ।
इन्दुक्षये मासि मासि वृद्धौ प्रत्यब्दमेव च ॥

इति । इन्दुक्षयोऽमावास्या । अष्टका मार्गशीर्षादिमासचतुष्टयापरपक्षाष्टम्यः, 'हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टकाः' इति शौनकस्मरणात् । अत्रापि श्राद्धमावश्यकं—

अमावास्याव्यतीपातपौर्णमास्यष्टकासु च ।
विद्वान् श्राद्धमकुर्वाणः प्रायश्चित्तीयते तु सः ॥

इति पितामहस्मरणात् । वृद्धिः पुत्रादिः । अत्रापि श्राद्धमावश्यकम्—

वृद्धौ न तर्पिता यैर्वै देवता गृहमेधिभिः ।
तद्दानमासुरं सर्वमासुरो विधिरेव सः ॥

इति वृद्धशातातपस्मरणात् । कृष्णपक्षोपरपक्षः । अत्रापि श्राद्धं नित्यम्, 'शाकेनाप्यपरपक्षं नातिक्रामेत्' इति कात्यायनस्मरणात् । अत्र विशेषमाह वसिष्ठः—'अपरपक्ष ऊर्ध्वं चतुर्थ्याः पितृभ्यो दद्यात्' इति । ऊर्ध्वं चतुर्थ्याः पञ्चमीमारभ्येत्यर्थः । गौतमोऽपि—'अथ श्राद्धममावास्यायां पितृभ्यो दद्यात्पञ्चमीप्रभृति वाऽपरपक्षस्य यथाश्राद्धं सर्वस्मिन्वा' इति । अपरपक्षस्य पञ्चमीमारभ्य पितृभ्यो दद्यात् सर्वस्मिन्वाऽपरपक्षे प्रतिपदमारभ्येत्यर्थः । कात्यायनोऽपि—'अपरपक्षे श्राद्धं कुर्वीतोर्ध्वं चतुर्थ्या यदहस्सम्पद्येत' इति । चतुर्थ्या ऊर्ध्वं यस्मिन्नहनि द्रव्यादि सम्पद्येत तस्मिन्वा कुर्यादित्यर्थः । अनेनैकस्मिन्नहनि श्राद्धं कुर्यादित्युक्तं भवति । उक्तं च गौतमेन—'सर्वस्मिन्वा द्रव्यदेशब्राह्मणसंनिधाने वा' इति । अत्र यथासामर्थ्यं व्यवस्था । अत एव गौतमः—'कालनियमश्शक्तितः' इति । अत्र सामर्थ्यतः कालनियमो भवतीत्यर्थः । यदैकस्मिन् अहनि तदा पृथगेव अमावास्याश्राद्धं कार्यम् । 'अमावास्याऽष्टका वृद्धिः कृष्णपक्षः' इति पृथगुपादानात् 'अपरपक्षे यदहस्सम्पद्येत अमावास्यायां विशेषेण' इति नियमस्मरणात्, तथा—

न निर्वपति यश्श्राद्धं प्रमीतपितृको द्विजः ।

इन्दुक्षये मासि मासि प्रायश्चित्तीयते तु सः ॥

इति व्याघ्रेणाकरणे प्रायश्चित्तविधानाच्च । तथा 'यथा कथञ्चिन्नित्यानि कुर्यादिन्दुक्षयादिषु' इति हारीतेन नित्यत्वाभिधानात् । अतो यत्कैश्चिदुक्तं—'अमावास्याश्राद्धमापरपक्षिकश्राद्धेन विकल्प्यते' इति, तदपास्तम् । अपरपक्षे पुनरापस्तम्बोक्तो विशेषः । 'मासिमासि कार्यमपरपक्षस्यापराह्णः श्रेयांस्तथाऽपरपक्षस्य जघन्यान्यहानि' इति । जघन्यानि दशम्यादीनि । अत एव मनुः—

कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम् ।
श्राद्धे प्रशस्तास्तिथयो यथैता न तथेतराः ॥

इति । दशम्यादितिथिषु चतुर्दशीं वर्जयित्वेत्यर्थः । चतुर्दशी तु शस्त्रहतानामेव । यथाऽऽह याज्ञवल्क्यः—

प्रतिपत्प्रभृति ख्याता वर्जयित्वा चतुर्दशीम् ।
शस्त्रेण तु हता ये वै तेभ्यस्तत्र प्रदीयते ॥

इति । शस्त्रग्रहणं विषादेरपि प्रदर्शनार्थम् । अत एव मरीचिः—

विषशस्त्रश्वापदाहितिर्यग्ब्राह्मणघातिनाम् ।
चतुर्दश्यां क्रिया कार्या अन्येषां तु विगर्हिता ॥

प्रचेता अपि—

वृक्षारोहणलोहाद्यैः विद्युज्जलविषादिभिः ।
नखिदंष्ट्रिविपन्नानां तेषां शस्ता चतुर्दशी ॥

इति। अत्र विशेषमाह गर्गः—

चतुर्दश्यां तु यच्छ्राद्धं सपिण्डीकरणात्परम्।
एकोद्दिष्टविधानेन तत्कार्यं शस्त्रघातिने॥

इति। शस्त्रघातिने यदाऽऽपरपक्षिकश्राद्धं चतुर्दश्यां क्रियते तदैकोद्दिष्टविधानेन नान्यथेत्यर्थः। अत एव सुमन्तुः—

एकापिण्डीकृतानां तु पृथक्त्वं नोपपद्यते।
सपिण्डीकरणादूर्ध्वं ऋते कृष्णचतुर्दशीम्॥

इति। यत्तु मार्कण्डेयपुराणे—

प्रतिपद्धनलाभाय द्वितीया द्विपदप्रदा।
परार्थिनां तृतीया तु चतुर्थी शत्रुनाशिनी॥
पञ्चम्यां श्रियमाप्नोति षष्ठ्यां पूज्यो भवेन्नरः।
गाणाधिपत्यं सप्तम्यामष्टम्यामृद्धिमुत्तमाम्॥
श्रियो नवम्यामाप्नोति दशम्यां पूर्णकामताम्।
वेदांस्तथाऽऽप्नुयात्सर्वानेकादश्यां क्रियापरः॥
द्वादश्यां जयलाभं च प्राप्नोति पितृपूजकः।
प्रजामिष्टां पशून् मेध्यान् स्वातन्त्र्यं बुद्धिमुत्तमाम्॥
दीर्घमायुस्तथैश्वर्यं कुर्वाणस्तु त्रयोदशीम्।
अवाप्नोति न सन्देहः श्राद्धं श्राद्धपरो नरः॥
युवानः पितरो यस्य मृताश्शस्त्रेण वा हताः।
तेन कार्यं चतुर्दश्यां तेषां सिद्धिमभीप्सता॥

श्राद्धं कुर्वन्नमावास्यां यत्नेन पुरुषश्शुचिः ।
सर्वान्कामानवाप्नोति स्वर्गं चानन्तमश्नुते ॥

इति, तत् नित्यत्वनिराकरणार्थं न, किंतु कालविशेषात्फलविशेषो भवतीत्येवंपरम्, अत एवापस्तम्बः—'सर्वेष्वेवापरपक्षस्याहस्सु क्रियमाणे पितॄन् प्रीणाति कर्तुस्तु कालनियमात्फलविशेषः' इति । प्रकृतमुच्यते—अयनद्वयं मकरकर्कटकसंक्रान्ती । अत्रापि श्राद्धं नित्यम् । अत एव विष्णुपुराणे पराशरः—

उपप्लुवे चन्द्रमसो रवेश्च त्रिष्वष्टकास्वप्ययनद्वये च ।
पानीयमप्यत्र तिलैर्विमिश्रं दद्यात्पितृभ्यः प्रयतो मनुष्यः ॥
श्राद्धं कृतं तेन समास्सहस्रं रहस्यमेतत्पितरो वदन्ति ॥

अत्र पानीयमप्यत्रेति वचनादयनश्राद्धं नित्यमिति गम्यते । जातूकर्ण्योऽपि—

ग्रहोपरागे विषुवे च जाते पित्र्ये मघायामयनद्वये च ।
नित्यं च शङ्के च तथैव पद्मे दत्तं भवेन्निष्कसहस्रतुल्यम् ॥

इति । अत्र नित्यं दत्तं निष्कसहस्रतुल्यमित्यन्वयः । पित्र्ये नभस्यापरपक्षे या मघा तस्यामित्यर्थः । शङ्खादिस्वरूपमपि तेनैवोक्तं—

शङ्खं प्राहुरमावास्यां क्षीणसोमां द्विजोत्तमाः ।
अष्टकासु भवेत्पद्मं तत्र दत्तं यथाऽक्षयम् ॥

इति। अथवा पद्मं शङ्खोक्तं—

यथा विष्टिर्व्यतीपातो भानुवारस्तथैव च।
पद्मकं नाम तत्प्रोक्तमयनाच्च चतुर्गुणम्॥

इति। यत्तु विष्णुनोक्तं—'आदित्यसङ्क्रमो विषुवद्वयं व्यतीपातो जन्मर्क्षमभ्युदयश्च,

एतांश्च श्राद्धकालान्वै काम्यानाह प्रजापतिः।
श्राद्धमेतेषु यद्दत्तं तदानन्त्याय कल्पते॥

इति, तदपि न नित्यत्वनिराकरणार्थम्। वचनद्वयेनाग्निहोत्रादिवन्नित्यत्वकाम्यत्वयोरविरोधात्। द्रव्यं ब्राह्मणसम्पत्तिरिति, द्रव्यस्य श्राद्धार्हस्य ब्राह्मणस्य वा वक्ष्यमाणस्य सम्पत्तिर्लाभो यस्मिन् काले सः श्राद्धकाल इत्यर्थः। अत्रापि श्राद्धमावश्यकम्। यथाऽऽह हारीतः—

तीर्थे द्रव्योपपत्तौ तु न कालमवधारयेत्।
पात्रं च ब्राह्मणं प्राप्य सम्यक्छ्राद्धं विधीयते॥

इति। तीर्थं गङ्गादि। विषुवत् मेषे तुलायां च सूर्यसङ्क्रमः। अत्र पुलस्त्योक्तो विशेषः—

अयनद्वितये श्राद्धं विषुवद्वितये तथा।
युगादिषु च सर्वासु पिण्डनिर्वापणादृते॥

इति। सूर्यसङ्क्रमः सूर्यस्य राशितो राश्यन्तरगमनम्। सूर्यसङ्क्रम इत्यनेनैव सङ्क्रान्तिमात्रसिद्धौ अयने विषुवे चेति

पृथग्वचनं फलभूयस्त्वार्थम् । अत एव शङ्खः—

हस्तिच्छायासु यद्दत्तं यद्दत्तं राहुदर्शने ।
विषुवत्ययने चैव सर्वमानन्त्यमश्नुते ॥

इति । व्यतीपातो योगविशेषः वृद्धमनुनोक्तः—

श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तकैः ।
यद्यमा रविवारेण व्यतीपातस्स उच्यते ॥

इति । यद्यमावास्या रविवारेण श्रवणादिना च युक्ता स व्यतीपात इत्यर्थः । नागदैवतमाश्लेषानक्षत्रम् । मस्तकं मृगशिराः । तत्रापि श्राद्धं नित्यम् ।

अमावास्याव्यतीपातपौर्णमास्यष्टकासु च ।
विद्वान् श्राद्धमकुर्वाणः प्रायश्चित्तीयते तु सः ॥

इति पितामहस्मरणात् । गजच्छाया हस्तिच्छाया, तस्यां श्राद्धं दद्यात् । तथा काठकश्रुतिः—'एतद्धि देवपितॄणामयनं यद्धस्तिच्छायायां श्राद्धं दद्यात्' इति । महाभारतेऽपि—

आजेन सर्वलोहेन वर्षासु नियतव्रतः ।
हस्तिच्छायासु विधिवत्कर्णव्यजनवीजितम् ॥

इति । श्राद्धं दद्यादिति शेषः । कर्णव्यजनवीजितमित्यनेनैतद्धस्तिच्छायाविषयमित्यवगम्यते । मनुरपि—

अपि नस्स कुले भूयाद्यो नो दद्यात्त्रयोदशीम् ।
पायसं मधुसर्पिर्भ्यां प्राक्छाये कुञ्जरस्य च ॥

इति । प्राची छाया यस्य देशस्य स प्राक्छायः, तस्मि-न्नित्यर्थः । अथवा पारिभाषिकी गजच्छाया । सा च स्मृत्यन्तरे दर्शिता—

यदेन्दुः पितृदैवत्ये हंसश्चैव करे स्थितः ।
तिथिर्वैश्रवणी या च गजच्छायेति सा स्मृता ॥

इति । पितृदैवत्ये मघायाम् । हंसः सूर्यः । करो हस्तनक्षत्रम् । वैश्रवणी त्रयोदशी । पुराणेऽपि—

हंसे हस्तास्थिते या तु मघायुक्ता त्रयोदशी ।
तिथिर्वैश्रवणी नाम सा छाया कुञ्जरस्य तु ॥
हंसे करस्थिते या तु अमावास्या करान्विता ।
सा छाया कुञ्जरच्छाया इति बोधायनोऽब्रवीत् ॥
वनस्पतिगते सोमे या छाया प्राङ्मुखी भवेत् ।
गजच्छाया तु सा प्रोक्ता तस्यां श्राद्धं प्रकल्पयेत् ॥

इति । अमावास्यायां अपराह्ण इत्यर्थः—

सैंहिकेयो यदा सूर्यं ग्रसते पर्वसन्धिषु ।
गजच्छाया तु सा प्रोक्ता तस्यां श्राद्धं प्रकल्पयेत् ॥

सैंहिकेयो राहुः । अत्र फलविशेषो वायुपुराणे दर्शितः—

घृतेन भोजयेद्विप्रान् घृतं भूमौ समुत्सृजेत् ॥
छायायां हस्तिनश्चैव दत्वा श्राद्धं न शोचति ॥

श्रीविष्णुधर्मोत्तरेऽपि—

गयायां दर्शने राहोः खड्गमांसेन योगिनम् ।

भोजयेच्च कुलेऽस्माकं छायायां कुञ्जरस्य च ॥
आकल्पिकी तु सा तृप्तिस्तेनास्माकं भविष्यति ।
दाता सर्वेषु लोकेषु कामचारी भविष्यति ॥
यदेतत्पञ्चकं न स्यादेकेनापि वयं सदा ।
तृप्तिं प्राप्स्याम चानन्तां किंपुनस्सर्वसम्पदा ॥

इति । तथा भोक्तुरपि दोषः स्मृत्यन्तरे दर्शितः—

कृष्णाजिनप्रतिग्राही विक्रयी वा भवेत्तु यः ।
गजच्छायाश्रितो भुक्त्वा न भूयः पुरुषो भवेत् ॥

ग्रहणं चन्द्रसूर्ययोरिति—ग्रहणमुपरागः । अत्रापि श्राद्धं नित्यम् । अत एव शातातपः—

सर्वस्वेनापि कर्तव्यं श्राद्धं वै राहुदर्शने ।
अकुर्वाणस्तु तच्छ्राद्धं पङ्के गौरिव सीदति ॥

तथाऽत्र फलविशेषो विष्णुना दर्शितः—

राहुदर्शनदत्तं हि श्राद्धमाचन्द्रतारकम् ।
गुणवत्सर्वकामीयं पितॄणामुपतिष्ठति ॥

इति । ऋष्यशृङ्गोऽपि—

राहुग्रस्ते तु वै सूर्ये यस्तु श्राद्धं प्रकल्पयेत् ।
तेन वै सकला पृथ्वी दत्ता विप्रस्य वै करे ॥

इ । अत्र कालनियममाह वृद्धवासिष्ठः—

त्रिदशास्स्पर्शसमये तृप्यन्ति पितरस्तथा ।
मनुष्या मध्यकाले तु मोक्षकाले तु राक्षसाः ॥

इति । यत्तु मार्कण्डेयपुराणे—

विशिष्टब्राह्मणप्राप्तौ सूर्येन्दुग्रहणेऽयने ।
विषुवे रविसङ्क्रान्तौ व्यतीपाते च पुत्रके ॥
श्राद्धार्हद्रव्यसंप्राप्तौ तथा दुस्स्वप्नदर्शने ।
जन्मर्क्षग्रहपीडासु श्राद्धं कुर्वीत चेच्छया ॥

इति, इच्छा कामः, तदापि श्राद्धं कुर्वीतेत्येवं परम्, न पुनः काम्यमेवेति वक्तुम् । अत एव कूर्मपुराणे—

नैमित्तिकं तु कर्तव्यं ग्रहणे चन्द्रसूर्ययोः ।
बान्धवानां च मरणे नरकी स्यात्ततोऽन्यथा ॥
काम्यानि चैव श्राद्धानि शस्यन्ते ग्रहणादिषु ।

इति । श्राद्धं प्रति रुचिरिति—रुचिरिच्छा श्राद्धं प्रति यदा तदैव तत्कार्यमित्यर्थः । चकारोऽन्येषामपि श्राद्धकालानां प्रदर्शनार्थः । अत एव यमः—

आषाढ्यामपि कार्तिक्यां माघ्यां त्रीन्पञ्च वा द्विजान् ।
तर्पयेत्पितृपूर्वं तु तस्याप्यक्षय्यमुच्यते ॥

देवलोपि—

तृतीया रोहिणीयुक्ता वैशाखस्य सिता तु या ।
मघाभिस्सहिता कृष्णा नभस्ये तु त्रयोदशी ॥
तथा शतभिषग्युक्ता कार्तिके नवमी तथा ।
इन्दुक्षयगजच्छायावैधृतीषु युगादिषु ॥
एते कालास्समुद्दिष्टाः पितॄणां प्रीतिवर्धनाः ।

इति । युगादयस्तु मत्स्यपुराणे दर्शिताः—

वैशाखस्य तृतीया तु नवमी कार्तिकस्य तु ।
माघे पञ्चदशी चैव नभस्ये च त्रयोदशी ॥
युगादयस्स्मृता ह्येता दत्तस्याक्षयकारकाः ॥

इति । विष्णुपुराणेऽपि—

वैशाखमासस्य सिता तृतीया नवम्यसौ कार्तिकशुक्लपक्षे ।
नभस्यमासस्य च कृष्णपक्षे त्रयोदशी पञ्चदशी च माघे ॥
पानीयमप्यत्र तिलैर्विमिश्रं दद्यात्पितृभ्यः प्रयतो मनुष्यः ।
श्राद्धं कृतं तेन समास्सहस्रं रहस्यमेतत्पितरो वदन्ति ॥

अत्र शुक्लपक्षे तृतीया, पञ्चदशी कृष्णपक्षे इत्यन्वयः । अत एव नारदीयपुराणम्—

द्वे शुक्ले द्वे च कृष्णे तु युगाद्याः कवयो विदुः ।

इति । ब्रह्मपुराणे तु माघस्य पौर्णमासी युगादिरित्युक्तं—

वैशाखशुक्लपक्षस्य तृतीयायां कृतं युगम् ।
कार्तिके शुक्लपक्षे च त्रेता च नवमेऽहनि ॥
अथ भाद्रपदे कृष्णे त्रयोदश्यां तु द्वापरम् ।
माघे च पौर्णमास्यां तु घोरं कलियुगं तथा ॥
युगारम्भास्तु तिथयो युगाद्यास्तेन विश्रुताः ।
सूर्यस्य सिंहसंक्रान्त्यामन्तं कृतयुगस्य तु ॥
अथ वृश्चिकसंक्रान्त्यामन्तं त्रेतायुगस्य तु ।
ज्ञेयो वृषभसंक्रान्त्यां द्वापरान्तश्च संख्यया ॥

तथाच कुम्भसंक्रान्त्यामन्तः कलियुगे स्मृतः ।
युगादिषु युगान्तेषु श्राद्धमक्षय्यमुच्यते ॥

इति । पुराणेऽपि—

वैशाखस्य तृतीया या नवमी कार्तिकस्य तु ।
पौर्णमासी तु माघस्य नभस्ये च त्रयोदशी ।
युगादयस्स्मृता ह्येता दत्तस्याक्षयकारकाः ।
तथा मन्वन्तरादौ च देयं श्राद्धं विजानता ।

इति । अत्र कल्पभेदेन व्यवस्थेति केचित् । अत्र पुलस्त्योक्तो विशेषः—

अयनद्वितये श्राद्धं विषुवद्वितये तथा ।
युगादिषु च सर्वेषु पिण्डनिर्वापणादृते ॥

मन्वन्तरादयस्तु मत्स्यपुराणे दर्शिताः—

अश्वयुक्छुक्लनवमी कार्तिके द्वादशी सिता ।
तृतीया चैत्रमासस्य तथा भाद्रपदस्य च ।
फाल्गुनस्य त्वमावास्या पुष्यस्यैकादशी सिता ॥
आषाढस्यापि दशमी माघमासस्य सप्तमी ।
श्रावणस्याष्टमी कृष्णा तथाऽऽषाढी च पूर्णिमा ॥
कार्तिकी फाल्गुनी चैत्रे ज्येष्ठे पञ्चदशी सिता ।
मन्वन्तरादयस्त्वेते दत्तस्याक्षय्यकारकाः ॥

इति स्मृतिचन्द्रिकायां श्राद्धकालाः.

---

## अथ अमावास्याद्वैधनिर्णयः.

अत्र गौतमः—

'अथ श्राद्धममावास्यायां पितृभ्यो दद्यात्' इति। अमावास्या कृष्णपक्षस्य पञ्चदशी तिथिः। तस्यां श्राद्धं कार्यमित्यर्थः। तत्र कात्यायनोक्तो विशेषः—

पिण्डान्वहार्यकं श्राद्धं क्षीणे राजनि शस्यते।
वासरस्य तृतीयेंऽशे नातिसन्ध्यासमीपतः॥

इति। पिण्डपितृयज्ञाङ्गभूतानां पिण्डानामनु पश्चादाह्रियते क्रियत इति पिण्डान्वाहार्यकं श्राद्धममावास्यायां क्षीणे राजनि इन्दौ कर्तव्यमित्यर्थः। सोपीन्दुक्षयः कदा भवतीत्यपेक्षिते स एवाह—

अष्टमांशे चतुर्दश्याः क्षीणो भवति चन्द्रमाः।
अमावास्याष्टमांशे च पुनः किल भवेदणुः॥

[illegible] ीवाल्यामेव श्राद्धं कार्यमित्युक्तं

। कुहूर्मता।
वे तु कर्माणि॥

ञमिव दृश्यते।
रणं ध्रुवम्॥

इति । यस्यां तिथौ शर्वर्यां पूर्वस्यां दिशि सन्ध्यागतस्सोमः सूक्ष्म इव दृश्यते तस्यामपराह्णे चन्द्रक्षय इति तत्रैव श्राद्धं कार्यमित्यर्थः । एतच्च कर्मकालव्यापिन्यां सिनीवाल्यां द्रष्टव्यं, अन्यथा दोषश्रवणात्, तथाच बोधायनः—

मध्याह्नात्परतो यत्र चतुर्दश्यनुवर्तते ।
सिनीवाली तु सा ज्ञेया पितृकार्ये तु निष्फला ॥

इति । उक्तलक्षणा सिनीवाली पितृकार्ये निष्फलेति ज्ञेयेत्यर्थः । बृहस्पतिरपि—

मध्याह्नाद्या त्वमावास्या परस्तात्संप्रवर्तते ।
भूतविद्धा तु सा ज्ञेया न सा पञ्चदशी भवेत् ॥

मध्याह्नात्परस्तात् कर्मकालमतिक्रम्येत्यर्थः । अनेनैवाभिप्रायेण कार्ष्णाजिनिरपि—

भूतविद्धाममावास्यां मोहादज्ञानतोपि वा ।
श्राद्धकर्मणि ये कुर्युस्तेषामायुः प्रहीयते ॥

इति । अतः कर्मकालव्यापिन्येव सिनीवाली ग्राह्येत्यर्थः । अत एव वृद्धमनुः—

यस्यामस्तं रवियाति पितरस्तामुपासते ।
तिथिं तेभ्यो यतो दत्तो ह्यपराह्णस्स्वयंभुवा ॥

इति । यदा त्वेवंविधा सिनीवाली न लभ्यते तदा कर्मकालव्यापिनी कुहूरेव ग्राह्येत्याह हारीतः—

अपराह्णः पितॄणां तु याऽपराह्णानुयायिनी ।
सा ग्राह्या पितृकार्येषु न पूर्वाऽस्तानुयायिनी ॥

या कुहूरपराह्णानुयायिनी सैव ग्राह्या, न पुनरेवंविधा सिनीवालीत्यर्थः । एवञ्च तिथिद्वैधे या कर्मकालव्यापिनी सैव ग्राह्येत्युक्तं भवति । उक्तं च तेनैव—

भूतविद्धाऽप्यमावास्या प्रतिपन्मिश्रिताऽपि वा ।
पित्र्ये कर्मणि विद्वद्भिः ग्राह्या कुतुपकालिका ॥

भूतविद्धा चतुर्दशीविद्धा । स्मृत्यन्तरेऽपि—

मध्याह्नव्यापिनी या तु तिथिः पूर्वा पराऽपि वा ।
तदहः कर्म कुर्वीत ह्रासवृद्धी न कारणम् ॥

इति । यदा तु तिथिद्वयेऽपि कर्मकालव्यापिनी न भवति तदा भूतविद्धैव परिग्राह्येत्याह बोधायनः—

घटिकैकाऽप्यमावास्या प्रतिपत्सु न चेत्तथा ।
भूतविद्धाऽपि कर्तव्या दैवे पित्र्ये च कर्मणि ॥

इति । प्रतिपत्सु घटिकैका कर्मकालसंबन्धिनी यदि न स्यादित्यर्थः । अत एव जाबालिः—

प्रतिपत्स्वप्यमावास्या पूर्वाह्णव्यापिनी यदि ।
भूतविद्धाऽपि सा कार्या पित्र्ये कर्मणि सर्वदा ॥

इति । एवञ्च यदुक्तं हारीतेन—

पूर्वाह्णे चेदमावास्या अपराह्णे न चेत्तु सा ।
प्रतिपद्यपि कर्तव्यं श्राद्धं श्राद्धविदो विदुः ॥

इति, तत् यत्र पूर्वेद्युश्चन्द्रदर्शनासम्भवेन पिण्डपितृयज्ञोत्कर्षः, तत्र प्रतिपदि पिण्डपितृयज्ञविधानार्थं, अन्यथा पूर्वोक्तवचनविरोधात्। यदपि तेनैवोक्तं—

तुलामकरमीनेषु कन्यायां मिथुने तथा।
भूतविद्धाऽप्यमावास्या पूज्या भवति यत्नतः॥

इति, एतत् व्रतोपवासादिविषयमिति कैश्चिद्व्याख्यातम्। यदा तु तिथिद्वयेऽपि कर्मकालव्यापिनी तदा प्रचेतसोक्तं—

सिनीवाली कुहूश्चैव श्रुत्युक्ते श्राद्धकर्मणि।
स्यातां चेत्ते तु मध्याह्ने श्राद्धं दद्यात्कथं तदा॥
तिथिक्षये सिनीवाली तिथिवृद्धौ कुहूस्तथा।
साम्येऽपि च कुहूर्ज्ञेया वेदवेदाङ्गवेदिभिः॥

साम्ये क्षयवृद्ध्यभावे। एवमविशेषेण सर्वेषामपि क्षये सिनीवाल्यामेव श्राद्धप्राप्तौ विशेषार्थमाह लौगाक्षिः—

सिनीवाली द्विजैः कार्या साग्निकैः पितृकर्मणि।
स्त्रीभिश्शूद्रैः कुहूः कार्या तथाचानाग्निकैर्द्विजैः॥

इति। एवञ्च क्षये साग्निकैः सिनीवाल्यां श्राद्धं कार्यम्। वृद्धौ तु सर्वैरेव परेद्युः कार्यमित्यनुसन्धेयम्। नन्वेवमपि न क्षयमात्रे साग्निकैस्सिनीवाली ग्राह्या। यत्र क्षये सिनीवाल्यां पिण्डपितृयज्ञः तत्रैव। अन्यथा—

पितृयज्ञं तु निर्वर्त्य विप्रश्चन्द्रक्षयेऽग्निमान्।
पिण्डान्वाहार्यकं श्राद्धं कुर्यान्मासानुमासिकम्॥

इति मनुना साग्निकैः कृते पिण्डपितृयज्ञे श्राद्धविधानाघटनात्। अतो यत्र क्षये कुहूः पिण्डपितृयज्ञस्तत्र साग्निकैरपि सैव प्राप्नोति। मैवं, दिनद्वयेऽपि मध्याह्नव्यापित्वे क्षये सिनीवाल्यामेव चन्द्रदर्शनसम्भवेन कदाचिदपि पिण्डपितृयज्ञाप्राप्तेः 'यदहश्चन्द्रमसं न पश्यन्ति तदहः पिण्डपितृयज्ञं कुर्वीत' इत्यापस्तम्बेन चन्द्रादर्शन एव पिण्डपितृयज्ञविधानात्। चन्द्रादर्शनं च यत्र चतुर्दशी मुहूर्तत्रयादर्वागेव समाप्यते तत्रैवेति ज्योतिश्शास्त्रे प्रसिद्धम्। अतो यत्र श्राद्धदिने चन्द्रादर्शने च पिण्डपितृयज्ञप्राप्तिः तत्राग्निमान् कृत्वैव पितृयज्ञं श्राद्धं कुर्यादिति मनुना नियम्यते, न पुनस्सर्वत्र कृतपिण्डपितृयज्ञस्यैव अग्निमतः श्राद्धाधिकार इति पितृयज्ञशब्दस्य पिण्डपितृयज्ञपरत्वमङ्गीकृत्योक्तम्। परमार्थतस्तु—पितृयज्ञशब्दः तर्पणाख्यपितृयज्ञपर एव। तदुक्तं मत्स्यपुराणे—

पितृयज्ञं तु निर्वर्त्य तर्पणाख्यं तु योऽग्निमान्।
पिण्डान्वाहार्यकं कुर्याच्छ्राद्धमिन्दुक्षये सदा ॥ इति ॥

इति स्मृतिचन्द्रिकायाममावास्याद्वैधनिर्णयः

---

अथान्यान्यप्यमावास्याविषयाणि कानिचिद्वचनानि लिख्यन्ते.

तत्र व्यासः—

अमा वै सोमवारेण रविवारेण सप्तमी।
चतुर्थी भौमवारेण विषुवत्सदृशं फलम् ॥

अमा अमावास्या ।, शङ्खोऽपि—

अमावास्या तु सोमेन सप्तमी भानुना सह ।
चतुर्थी भूमिपुत्रेण सोमपुत्रेण चाष्टमी ॥
चतस्रस्तिथयस्त्वेताः तुल्यास्स्युर्ग्रहणादिभिः ।
सर्वमक्षयमत्रोक्तं स्नानदानजपादिकम् ॥

भूमिपुत्रो मङ्गळः । सोमपुत्रो बुधः । श्रीविष्णुपुराणेऽपि—

अमावास्या यदा मैत्रविशाखास्वातियोगिनी ।
श्राद्धे पितृगणस्तृप्तिमवाप्नोत्यष्टवार्षिकीम् ॥

मैत्रमनूराधा ।

अमावास्या यदा पुष्ये रौद्र ऋक्षे पुनर्वसौ ।
द्वादशाब्दं तदा तृप्तिं प्रयान्ति पितरोऽर्चिताः ॥

रौद्रमार्द्रा ।

वासवाजैकपादृक्षे पितॄणां तृप्तिमिच्छताम् ।
वारुणेनाप्यमावास्या देवानामपि दुर्लभा ॥

वासवं वसुदैवत्यं धनिष्ठानक्षत्रम् । अजैकपादृक्षं पूर्वभाद्रनक्षत्रम् । वारुणं शतभिषङ्नक्षत्रम् ।

माघासिते पञ्चदशी कदाचिदुपैति योगं यदि वारुणेन ।
ऋक्षेण कालस्स परः पितॄणां न ह्यल्पपुण्यैरुपलभ्यतेऽसौ ॥
काले धनिष्ठा यदि नाम तस्मिन् भवेत्तु भूपाल तदा पितृभ्यः ।
दत्तं जलान्नं प्रददाति तृप्तिं वर्षायुतं तत्कुलजैर्मनुष्यैः ॥

तस्मिन् काले माघासितपञ्चदश्यामित्यर्थः ।

तत्रैव चेद्भाद्रपदास्तु पूर्वाः काले तदा यत्क्रियते पितृभ्यः।
श्राद्धं परां तृप्तिमुपेत्य तेन युगान् सहस्रं पितरस्स्वपन्ति ॥

तत्रैव तस्यामेव पञ्चदश्यामित्यर्थः ॥

इति स्मृतिचन्द्रिकायाममावास्याविषयाणि.

---

## अथ प्रसङ्गात्पर्वापि निर्णीयते.

तत्र गोभिलः—'यः परमो विप्रकर्षस्सूर्याचन्द्रमसोस्सा पौर्णमासी, यः परमस्सन्निकर्षस्साऽमावास्या' इति । ते च द्विविधे तथाच पुराणम्—

राका चानुमतिश्चैव पौर्णमासी द्विधा स्मृता ।
सिनीवाली कुहूश्चैव अमावास्या द्विधैव तु ॥

इति । अत्रानुमतिस्सिनीवाली च चतुर्दशीमिश्रा, राका कुहूश्च प्रतिपन्मिश्रे । तथाच श्रुतिः—'या पूर्वा पौर्णमासी साऽनुमतिः, योत्तरा सा राका, या पूर्वाऽमावास्या सा सिनीवाली, योत्तरा सा कुहूः' इति । अत्र व्यवस्थया कर्मनिर्णयमाह गोभिलः—'पक्षान्ता उपवस्तव्याः पक्षादयोऽभियष्टव्याः' इति । पक्षान्ताः पञ्चदश्य उपवस्तव्यास्तास्वन्वाधानादि कार्यम् । पक्षादयः प्रतिपदः, ता अभियष्टव्याः । तासु हस्तावनेजनाद्यभीज्या कार्येत्यर्थः । अत्र लौगाक्षिणोक्तो विशेषः—

त्रीनंशानौपवस्तस्य यागस्य चतुरो विदुः ।
द्वावंशावुत्सृजेदन्त्यौ यागे च व्रतकर्मणि ॥

अन्त्यः पादः पञ्चदश्या औपवस्तेऽन्वाधानादौ परिहर्तव्यः, पक्षादेश्चान्त्यः पादः यागे परिहरणीय इत्यर्थः। कथं तर्हि यागे चतुर इत्यपेक्षिते यज्ञपार्श्वः—

पञ्चदश्याः परः पादः पक्षादेः प्रथमास्त्रयः ।
कालः पार्वणयागे स्यादन्यथा तु न विद्यते ॥

वृद्धशातातपोपि —

पर्वणो यश्चतुर्थोऽश आद्याः प्रतिपदस्त्रयः ।
यागकालस्स विज्ञेयः प्रातरुक्तो मनीषिभिः ॥

इति । अनेन प्रतिपच्चतुर्थांशे न यष्टव्यमित्युक्तं भवति। उक्तं च कात्यायनेन—

न यष्टव्यं चतुर्थांशे यागैः प्रतिपदः क्वचित् ।
रक्षांसि तद्विलुम्पन्ति श्रुतिरेषा सनातनी ॥

इति। यत्तु श्रुतौ 'सन्धौ यजेत' इति, तत्र सन्धेरतिसूक्ष्मत्वात्तत्र यागानुपपत्तेः तत्समीपकाललक्षणायां प्रस्तुतायामविशेषात्सन्धिशब्दसन्निहितपर्वप्रतिपदात्मककालद्वयपर इत्यविरोधः। अत एव श्रुत्यन्तरं—'सन्धिमभितो यजेत' इति। पर्वप्रतिपदोस्सन्धिमभित उभयतो यजेतेत्यर्थः। अतो यत्र पर्वचतुर्थांशे यागस्तत्रादिप्रतिपद्येव यागसमाप्तिः, अन्यथा 'सन्धिमभितः' इति श्रुतिविरोधात्। उक्तं च गर्गेण—

प्रतिपद्यप्रविष्टायां यदा त्विष्टिस्समाप्यते ।

पुनः प्रणीय कृत्स्नेष्टिः कर्तव्या यागवित्तमैः ॥

इति । प्रतिपद्योगे तु सन्धेः पूर्वमग्न्यन्वाधानादित्यविरोधः । सन्धिपरिज्ञाने तु स्मृत्यन्तरे विशेषो दर्शितः—

तिथेः परस्या घटिकास्तु यास्स्युः

न्यूनास्तथा चाभ्यधिकास्तु तासाम् ।

अर्धं वियोज्यं च तथा प्रयोज्यं

ह्रासे च वृद्धौ प्रथमे दिने तत् ॥

इति । परस्यास्तिथेः प्रतिपदो या घटिकाः पूर्वस्यास्तिथेस्स्युः न्यूना अधिका वा तासामर्धं पूर्वस्मिन् दिने ह्रासे वियोज्यं वृद्धौ तु संयोज्यमित्यर्थः । अनेन राकाकुह्वोरुत्तरेऽहनि च यत्पर्वप्रतिपदोः घटिकावृन्दं तदहर्भरितं तदेकीकृत्य द्वेधा विभज्य सन्धिपरिज्ञानं कार्यमित्युक्तं भवति । एवञ्च यस्मिन्नहनि पर्वसन्धिस्तास्मिन्नुत्तरेद्युर्वा प्रातः पर्वचतुर्थांशादिविहितसन्धिसम्भवः तत्रैव यागो नान्यत्रेत्यनुसन्धेयम् । अत एव लौगाक्षिः—

पूर्वाह्णे वाऽथ मध्याह्ने यदि पर्व समाप्यते ।

उपोष्य तत्र पूर्वेद्युः तदहर्याग इष्यते ॥

अपराह्णेऽथवा रात्रौ यदि पर्व समाप्यते ।

उपोष्य तस्मिन्नहनि श्वोभूते याग इष्यते ॥ इति ॥

तत्रैव विहितकालसम्भवादिति भावः । गृह्यकारिकाऽपि—

पञ्चदशी प्रतिपच्च समेते एकदिने महती यदि तस्मिन् ।
पञ्चदशी प्रकृतेरुपवासः पञ्चदशीह तनुर्यदि यागः ॥

इति । समेते सम्बद्धे इत्यर्थः । अनेनैवाभिप्रायेणापस्तम्बोऽपि—'यदहः पुरस्ताच्चन्द्रमाः पूर्ण उत्सर्पेत्तां पौर्णमासीमुपवसेत् । श्वः पूरितेति वा । खर्विकां तृतीयां वाजसनेयिनस्समामनन्ति । यदहर्न दृश्यते तदहरमावास्या । श्वो नद्रष्टार इति वा' इति । तत्र खर्विकासूत्रस्यार्थ उपरिष्टाद्भविष्यति । यदहः पुरस्ताच्चन्द्रमाः पूर्ण उत्सर्पेत् यदहर्न दृश्यते इति च सूत्रद्वयस्यायमर्थः । सर्वथा तावद्राकाकुह्वोरेव चन्द्रमसः पूर्णत्वमदर्शनत्वं चेति ज्योतिश्शास्त्रे प्रसिद्धम् । तत्र यस्मिन्नहनि पुरस्तात्पूर्वस्यां दिशि चन्द्रमाः पूर्ण उत्सर्पेत् उदयान्न दृश्येत वा तत्र यद्यप्यपराह्णे रात्रौ वा पर्वसन्धिः तदा पौर्णमासीममावास्यां वोपवसेदिति । यदा तु पूर्वाह्णे वा मध्यन्दिने वा पर्वसन्धिस्तदा यस्याह्नश्चन्द्रमाः पूरिता पूर्णो भविता यस्यां वा नद्रष्टारो नेक्षितारो भवेयुः तामनुमतिं सिनीवालीं वोपवसेदिति श्वःपूरिता श्वो नद्रष्टार इति वेति सूत्रद्वयस्यायमर्थः । उक्तं च भाष्यार्थसङ्ग्रहकारेण—

अपराह्णेऽथवा रात्रौ यदि पर्व समाप्यते ।
उपोष्या तत्र राका स्यात् सा पूर्णोत्सर्पिलक्षणा ॥
पूर्वाह्णे वाऽथ मध्याह्ने यदि पर्व समाप्यते ।
उपोष्याऽनुमतिस्तत्र सा श्वःपूरितलक्षणा ॥

अपराह्णे क्षपायां वा पर्वसन्धिर्भवेद्यदि ।
उपोष्या तु कुहूस्तत्र यदहर्नैतिलक्षणा ॥
पूर्वाह्णे वाऽथ मध्याह्णे पर्वसन्धिर्यदा भवेत् ।
तत्रोपोष्या सिनीवाली श्वो नद्रष्टारलक्षणा ॥

इति । तत्र पूर्वाह्णापराह्णशब्दाभ्यां द्वेधा विभक्तस्याह्नः पूर्वापरभागौ प्रतिपाद्येते । मध्याह्नशब्देन तु तयोसन्धिरित्यनुसन्धेयम् । नन्वत्र—पूर्वाह्णादिशब्दानां त्रेधा विभक्तस्याह्नः क्रमेण भागत्रयपरत्वमस्तु । मैवं, तस्मिन् पक्षे मध्याह्नस्यावर्तनादुपरिघटिकापञ्चकपर्यन्तत्वात्तत्र सन्धौ तदहरेव यागः प्रसज्येत । न च प्रसज्यतामिति वाच्यं, तत्र प्रातः पर्वचतुर्थांशादिविहितकालासम्भवेन 'पर्वणो यश्चतुर्थोऽशः' इत्यादिवचनविरोधात् । ननु—द्वेधा विभागेन यत्रावर्तनादुपरि घटिकामात्रे पर्वसन्धिः तत्रोत्तरेद्युरेव याग इति तत्रापि कालासम्भवाद्वचनविरोधस्तुल्य एव । मैवम्, 'पर्वणो यश्चतुर्थोऽशः' इत्यादिकालस्य यागान्वयावगतेः भवितव्यं तावद्यागस्य कालान्वयेनेत्युपगन्तव्यम् । एवञ्च तत्रोत्तरेद्युर्यागे क्रियमाणे न यागस्य कालान्वय इति पूर्वेद्युरेव याग इत्यविरोधः । एवं सर्वत्र द्रष्टव्यम् । नन्वेवं तर्ह्यपराह्णसन्धावुत्तरेद्युर्यागविधानं विरुध्येत । मैवं, यत्रापराह्णे पर्वसन्धावुत्तरेद्युः प्रतिपच्चतुर्थांशे यागो न भवति, तथाविधापराह्णस्यैवात्र ग्रहणमित्यविरोधः । युक्तं चैतत्, अन्यथा हेम-

न्तकालेऽतिस्वल्पत्वादह्नां तत्र किञ्चिदूनचतुर्दशघटिकामात्र आवर्तनं भवति। तथा तत्रैव तिथिवृद्धौ कदाचित् षोडशनाडिकोपि चतुर्थांशो भवति। तत्रावर्तनादुपरि घटिकामात्र पर्वसन्धावुत्तरेद्युरेव यागः प्रसज्येत, न चैतद्युक्तं, तत्र विहितकालासम्भवान्न यष्टव्यमिति निषेधात् पूर्वेद्युः कालसम्भवाच्च। अत्रोक्तापराह्णशब्दस्य सङ्कोच एव स्यात् ज्यायान्। किञ्च—ग्रीष्मकालेऽह्नामतिदीर्घत्वात्तत्र पादाधिकषोडशघटिकात्मके काले आवर्तनं भवति। तथा तत्रैव तिथिह्रासे कदाचित्सार्धत्रयोदशनाडिकोपि पर्वचतुर्थांशो भवति। तत्र यदा पादोनावर्तनेन पर्वसन्धिः तदा पूर्वाह्ण एव पर्वसन्धिरिति तदहरेव यागस्स्यात्। न चैतद्युक्तम्, तत्र प्रातः पर्वचतुर्थांशादिविहितकालासम्भवात्। अस्मिन् पक्षे तूत्तरेद्युरेव यागः, तत्रैव विहितकालसम्भवात्। अतएवोक्तमापस्तम्बेनापि 'खर्विकां तृतीयां वाजसनेयिनस्समामनन्ति' इति। खर्विकामल्पिकामिति यावत्। अल्पत्वं च दिनार्धत्वाभावात्। उक्तं च भाष्यार्थसङ्ग्रहकारेण—

मध्यन्दिनात्स्यादहनीह यस्मिन् प्राक्पर्वणस्सन्धिरियं तृतीया।

सा खर्विका वाजसनेयिमत्या तस्यामुपोष्याथ परेद्युरिष्टिः॥

इति। अमावास्यायां तु सुतरामत्रोत्तरेद्युरेव यागः, उदयात्प्रागेव तस्यास्तत्र प्रारम्भात्। नन्वेवं तर्हि पूर्वाह्णसन्धौ तदहरेव यागविधानं विरुध्येत। मैवम्, तस्यैतद्व्यतिरिक्तविष-

यान्तरसम्भवेनाविरोधात्। ननु तर्हि 'पूर्वाह्णे वाऽथ मध्याह्ने' इति लौगाक्षिवचनबलादेव विहितकालाभावेऽपि तत्रैव यागोऽस्तु। मैवम्,

पञ्चदश्याः परः पादः पक्षादेः प्रथमास्त्रयः।
कालः पार्वणयागे स्यादन्यथा तु न विद्यते॥

इति वचनार्धांशोदितकालव्यतिरेकेण कालान्तराभावस्मरणात्। किञ्च—एवंसति 'पर्वणो यश्चतुर्थांशः' इत्यादिकालविधायकशास्त्राणां विषयासम्भवेन वैयर्थ्यमेव स्यात्। अतो यत्कैश्चिदुक्तम्—'अपराह्णसन्धावुत्तरेद्युः प्रतिपच्चतुर्थांशेऽपि यागो न दोषाय' इति, तदपास्तम्। एवञ्च यदुक्तं कात्यायनेन—

यजनीयेऽह्नि सोमश्चेत् वारुण्यां दिशि दृश्यते।
तत्र व्याहृतिभिर्हुत्वा दण्डं दद्याद्द्विजातये॥

इति, यदपि स्मृत्यन्तरं—

त्रिमुहूर्ता द्वितीया चेत्प्रतिपद्यापराह्णिकी।
अन्वाधानं चतुर्दश्यां परतस्सोमदर्शनात्॥

इति, तत् पूर्वाह्णपर्वसन्धिविषयमित्यवगन्तव्यम्। यदपि वचनान्तरं—

षोडशेऽहन्यभीष्टेष्टिर्मध्या पञ्चदशेऽहनि।
चतुर्दशे जघन्येष्टिः पापा सप्तदशेऽहनि॥

इति, तेन सप्तदशेऽहनीष्टिं न कुर्यान्नान्वादधीतेति तत्रान्वाधानमेव निषिध्यते न यागः। तथात्वे तिथिवृद्धौ विशिष्टैरननुष्ठानमेव स्यात्। अतो यजनीयदिनादारभ्य सप्तदशेऽहन्यौपवसथकर्म न कार्यमित्यवगन्तव्यम्। अत एव बोधायनः—

यत्रौपवसथं कर्म यजनीयात्त्रयोदशम्।
भवेत्सप्तदशं वाऽपि तत्प्रयत्नेन वर्जयेत्॥

इति। ननु दिनद्वयस्य क्षयवृद्ध्योरसम्भवात्त्रयोदशेऽहनि सप्तदशेऽहनि वा कदाचिदौपवसथ्यं कर्म न प्राप्तमिति कथं निषेधः? उच्यते—यद्यप्राप्तिः तर्हि 'नान्तरिक्षे न दिवि' इतिवन्नित्यानुवाद इति सर्वमनवद्यम्। पौर्णमास्यां त्वापस्तम्बोक्तो विशेषः—'पौर्णमास्यामन्वाधानपरिस्तरणोपवासास्सद्यो वा सद्यस्कालायां सर्वं क्रियते' इति। अस्यार्थः—सद्यस्कालायां पौर्णमास्यामग्न्यन्वाधानादीनि सद्यः समानेऽहनि क्रियन्ते पूर्वेद्युर्वा तत्र सर्वं ब्राह्मणतर्पणान्तं क्रियते। नेडान्तादिकमित्युक्तं भाष्यार्थसङ्ग्रहकारेण—

अन्वाहितिश्चास्तरणोपवासाः पूर्वेद्युरेते खलु पौर्णमास्याम्।
आवर्तनात् प्राग्यदि पर्वसन्धिः सद्यस्तदा वा क्रियते समस्तम्॥

इति। आवर्तनात्प्राक् सङ्गवादूर्ध्वमिति शेषः।

सन्धिश्चेत्सङ्गवादूर्ध्वं प्राक्पर्यावर्तनाद्रवेः।
सा पौर्णमासी विज्ञेया सद्यस्कालविधौ तिथिः॥

इति कात्यायनस्मरणात् । केचित्तु—'पौर्णमास्याम्' इत्यादि 'सद्यो वा' इत्येनदन्तमेकं सूत्रं, अपरं तु 'सद्यस्कालायां सर्वं क्रियते' इति वदन्ति । तत्र सर्वस्यां पौर्णमास्यामग्न्यन्वाधानादि सद्यः पूर्वेद्युर्वा क्रियत इति पूर्वसूत्रस्यार्थः । द्वितीयस्य तु सद्यस्काला विकृतिः तस्यां सर्वं ब्राह्मणतर्पणान्तं क्रियते नेडान्तादि कर्मेति । नैतद्युक्तं, अपराह्णसन्धौ सद्यस्कालपक्षे 'सन्धिमभितो यजेत' इति श्रुतिविरोधात् एवं प्रकृतावुक्तम् । विकृतौ यद्यपि 'दर्शपूर्णमासाविष्टीनां प्रकृतिः' इत्यनेन दर्शपूर्णमासिकाविध्यन्तातिदेशादत्रापि स एव पर्वचतुर्थांशादिलक्षणः काल इति प्रतिभाति । तथाऽपि 'यदीष्ट्या यदि पशुना यदि सोमेन यजेतामावास्यायां पौर्णमास्यां वा यजेत' इत्यापस्तम्बेन विकृतौ पुनःकालविधानात्पञ्चदश्यामेव यागसमापत्तिः, अतो यत्र सम्पूर्णैव पञ्चदशी प्रतिपच्च तत्र पञ्चदश्यामेव विकृतिं समाप्यानन्तरं प्रकृतेरग्न्यन्वाधानादि । खण्डतिथौ यदा पूर्वाह्णे पर्वसन्धिः तदा पूर्वेद्युरुपदिष्टकालासम्भवात्सम्भवेऽपि कर्मोपक्रमदशायामसम्भवेन साङ्गप्रधानाव्यापित्वात् 'साङ्गप्रधानं देशे काले कर्तरीति निर्दिश्यते' इत्यापस्तम्बेन साङ्गस्यैव विहितकालसम्बन्धविधानात् । उक्तं परेद्युरपि । प्रकृतेः पूर्वोक्तत्वात् 'अपूर्वमन्ते स्यात्' इत्यापस्तम्बेनैव विकृतेः पूर्वं प्रकृतिविधानात् अनन्तरमेवातिदेशिकप्रतिपदाद्यभागत्रयेऽङ्गप्रधानपर्यासोऽविकृत्यनुष्ठानमवगन्तव्यम् । यदा

त्वपराह्णे रात्रौ वा पर्वसन्धिः तदा तदहरेव यागः, तत्रै-
वोपदिष्टकालसम्भवात् । एतत्सर्वमभिसन्धायोक्तम्—

आवर्तनात्प्राग्यदि पर्वसन्धिः
कृत्वा तु तस्मिन् प्रकृतिं विकृत्याः ।
तदैव यागः परतो यदि स्यात्
तस्मिन्विकृत्याः प्रकृतेश्च एव ॥

इति । एवं पशावपि द्रष्टव्यम् । अत एव तत्राप्युक्तम्—

अर्वागह्नो भवति नियतः पर्वसन्धिः पुरस्तात्
कृत्वा तस्मिन्नहनि तु पशून् सद्य एव द्व्यहं वा ।
आरभ्याथ प्रकृतिरथ चेत्पर्वसन्धिः परस्तात्
कृत्वा तस्मिन्प्रकृतिमथ तु स्यात्पशुस्सद्य एव ॥

इति । पूर्वाह्णसन्धावुत्तरेद्युर्विहितकालासम्भवात्सद्य एवेत्युक्तम् ।
उपदेशस्तत्रापि द्व्यहकालतामाह । तन्न यष्टव्यमित्यादिवचनावि-
रुद्धमित्युपेक्षणीयमेव ॥

इति स्मृतिचन्द्रिकायां पर्वनिर्णयः.

---

अथ प्रसङ्गात्तिथिद्वैधनिर्णयः.

तत्र स्कन्दपुराणं—

प्रतिपत्प्रभृतयस्सर्वा उदयादोदयाद्रवेः ।
सम्पूर्णा इति विख्याता हरिवासरवर्जिताः ॥

इति। अत्र सम्पूर्णासु निस्सन्दिग्धमेव कर्मानुष्ठानम्। यत्र पुनः क्षयवृद्धिभ्यां तिथिद्वैविध्यं तत्र निगमोक्तं—

युग्माग्नियुगभूतानां षण्मुन्योर्वसुरन्ध्रयोः।
रुद्रेण द्वादशी युक्ता चतुर्दश्या च पूर्णिमा॥
प्रतिपदाऽप्यमावास्या तिथ्योर्युग्मं महाफलम्।
एतद्व्यस्तं महादोषं हन्ति पुण्यं पुराकृतम्॥

इति। तत्र युग्मादिरन्ध्रान्त्यैः शब्दैः क्रमेण द्वितीयादिनवम्यन्तानां ग्रहणं, तिथ्योर्युग्ममित्यभिधानात्। रुद्र एकादशी। द्वितीयादिप्रतिपदन्तासु क्रमेण द्वयोर्द्वयोस्तिथ्योः परस्परमेव युग्मं महाफलं, न पुनर्व्यस्ततिथ्यन्तरयुग्ममित्यर्थः। अनेनोक्तयुग्मतिथिसप्तके पूर्वा तिथिः उत्तरविद्धा ग्राह्या। उत्तरा तु पूर्वविद्धेत्युक्तं भवति। तृतीयादिवद्दशमीत्रयोदश्यावपि पूर्वविद्धे। तथाच पैठीनसिः—

पञ्चमी सप्तमी चैव दशमी च त्रयोदशी।
प्रतिपन्नवमी चैव कर्तव्या संमुखा तिथिः॥

इति। संमुखा पूर्वविद्धेत्यर्थः। 'संमुखा नाम सायाह्नव्यापिनी दृश्यते यदा' इति स्कन्दपुराणे दर्शनात्। यत्तु निगमवाक्ये तृतीयापौर्णमास्योः पूर्वविद्धत्वमुक्तं, तत् व्रतविशेषाभिप्रायम्। अत एव ब्रह्मकैवर्ते—

रम्भाख्यां वर्जयित्वा तु तृतीयां द्विजसत्तम।
अन्येषु सर्वकार्येषु गणयुक्ता प्रशस्यते॥

भूताविद्धा न कर्तव्या अमा पूर्णा कदाचन ।
वर्जयित्वा मुनिश्रेष्ठ सावित्रीव्रतमुत्तमम् ॥

इति । रम्भाख्यां तृतीयां रम्भातृतीयाख्यं व्रतमित्यर्थः । गणयुक्ता चतुर्थीयुक्ता अमा अमावास्या एवञ्च यदुक्तं नारदीयपुराणे—

दर्शं च पूर्णमासं च पितुस्सांवत्सरं दिनम् ।
पूर्वविद्धमकुर्वाणो नरकं प्रतिपद्यते ॥

इति, तदपि सावित्रीव्रतविषयमित्यनुसन्धेयम् । उपवासे तु परान्वितैव ग्राह्या । तथाच बृहस्पतिः—

एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्दशी ।
अमावास्या तृतीया च ता उपोष्याः परान्विताः ॥

इति । वृद्धवसिष्ठोऽपि—

द्वितीया पञ्चमी वेधात् दशमी च त्रयोदशी ।
चतुर्दशी चोपवासे हन्युः पूर्वोत्तरे तिथी ॥
उपवासे सप्तमी तु वेधाद्धन्त्युत्तरं दिनम् ।

इति । द्वितीयाद्यास्तिथयो वेधात् उपवासे स्वपूर्वोत्तरे तिथी हन्युः, सप्तमी तु स्वोत्तरामेवेत्यर्थः । अनेन प्रतिपत्तृतीया च द्वितीयाविद्धे न ग्राह्ये इत्युक्तं भवति । एवं पञ्चम्यादिष्वपि द्रष्टव्यम् । एवञ्च यन्निगमवाक्ये चतुर्थ्या उत्तरविद्धत्वमुक्तं, तदुपवासव्यतिरिक्तविषयमित्यवगन्तव्यम्, अस्मिन्वाक्ये पूर्वविद्धाया उपादेयत्वस्मरणात् । यदपि ब्रह्मकैवर्ते—

प्रतिपत्संमुखा कार्या द्वितीया द्विजसत्तम ।

इति प्रतिपद्विद्धाया उपादेयत्वमुक्तं, तदप्युपवासव्यतिरिक्त-विषयम् । उपवासे परविद्धाया एवोपादेयत्वस्मरणात् । तथाच श्रीविष्णुपुराणे—

एकादश्यष्टमी षष्ठी द्वितीया च चतुर्दशी।
अमावास्या तृतीया च उपोष्यास्स्युः परान्विताः ॥

इति । अत्र चतुर्दश्यां परविद्धत्वं शुक्लपक्षाभिप्रायम् । अत एव निगमः—

एकादश्यष्टमी षष्ठी शुक्लपक्षे चतुर्दशी ।
पुण्याः परेण संयुक्ताः पराः पूर्वेण संयुताः ॥

इति । परा अनन्तरा इत्यर्थः ।

नागविद्धा तु या षष्ठी रुद्रविद्धो दिवाकरः ।
कामविद्धो भवेद्विष्णुर्न ग्राह्यास्तेषु वासराः ॥
नवम्येकादशी चैव दिशा विद्धा यदा भवेत् ।
तदा वर्ज्या विशेषेण गङ्गाम्भः श्वदृतौ यथा ॥

इति पुराणस्मरणात् । नागः पञ्चमी रुद्रोऽष्टमी दिवाकरस्सप्तमी कामस्त्रयोदशी । विष्णुः द्वादशी । दिक् दशमी । एवमष्टम्यपि द्रष्टव्या । अत एव स्मृत्यन्तरं—

कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी ।
पूर्वविद्धा तु कर्तव्या परविद्धा न कस्यचित् ॥
शुक्लपक्षेऽष्टमी चैव शुक्लपक्षे चतुर्दशी ।

पूर्वविद्धा न कर्तव्या कर्तव्या परसंयुता ॥

उपवासादिकार्येषु ह्येष धर्मस्सनातनः ।

इति । त्रयोदश्याः परविद्धत्वं कृष्णपक्षाभिप्रायम् । अत एव निगमः—

षष्ठ्यष्टमी तथा दर्शः कृष्णपक्षे त्रयोदशी ।

एताः परयुताः पूज्याः पराः पूर्वयुतास्तथा ॥

परा अनन्तरा इत्यर्थः । एवञ्च यदुक्तं मार्कण्डेयेन—

शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः ।

कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः ॥

इति, तत् शुक्लकृष्णपक्षव्यवस्थया व्यवस्थितचतुर्दश्यादिविषयमित्यवगन्तव्यम् । यदपि देवलेनोक्तं—

यां तिथिं समनुप्राप्य उदयं याति भास्करः ।

सा तिथिस्सकला ज्ञेया स्नानदानजपादिषु ॥

इति, तत् यासां तिथीनामुत्तरविद्धानामुपादेयत्वमुक्तं तद्विषयम् । यदपि तेनैवोक्तं—

यां तिथिं समनुप्राप्य अस्तं याति दिवाकरः ।

सा तिथिस्सकला ज्ञेया दानाध्ययनकर्मसु ॥

इति, तदपि यास्तिथयः पूर्वविद्धास्सत्यो ग्राह्याः तद्विषयम् । सकला संपूर्णेत्यर्थः । एतच्च उदयव्यापिन्यास्तिथेरल्पत्वेन तिथ्यन्तरानुष्ठानेऽपि तस्यामेव तिथावनुष्ठितं भवतीति वक्तुम् । अनेनैवाभिप्रायेण भविष्यत्पुराणेऽपि—

व्रतोपवासनियमे घटिकैका यदा भवेत् ।
सा तिथिस्सकला ज्ञेया पित्रर्थे चापराह्णिकी ॥

इति । अतोऽन्यत्र कर्मानुष्ठाने तिथिवृद्धिह्रासाभ्यामुपयोग इति निर्णयः । उक्तं च विष्णुधर्मोत्तरे—

सा तिथिस्तदहोरात्रं यस्यामस्तमितो रविः ।
तदा कर्माणि कुर्वीत ह्रासवृद्धी न कारणम् ॥

इति । यदा तु नोत्तरेद्युः उदयव्यापिनी किंतु पूर्वेद्युः निषिद्धतिथिविद्धैव, तदा स्मृत्यन्तरोक्तं—

एकादशी तृतीया च षष्ठी चैव त्रयोदशी ।
पूर्वविद्धा तु कर्तव्या यदि न स्यात्परेऽहनि ॥

इति । एवञ्च यदुक्तं—

वर्धमानस्य पक्षस्य उदयात्पूज्यते तिथिः ।
यदा पक्षः क्षयं याति तदा स्यादापराह्णिकी ॥

इति, तत्र पक्षक्षये प्रायेण परेद्युरुदयव्यापिन्या असंभवात्पूर्वविद्धैव परिग्राह्येति पूर्ववचनेन समानार्थम् । अत्र विशेषमाह ऋश्यशृङ्गः—

अविद्धानि निषिद्धैश्च न लभ्यन्ते दिनानि तु ।
मुहूर्तैः पञ्चभिर्विद्धा ग्राह्यैवैकादशी तिथिः ॥
तदर्धविद्धान्यन्यानि दिनान्युपवसेन्नरः ।

इति । निषिद्धैर्दिनैरविद्धानि दिनानि यदि न लभ्यन्ते तदो-

क्तलक्षणानि ग्राह्याणीत्यर्थः। यदा चैवंविधाऽपि तिथिः न लभ्यते तदाऽपि तेनैवोक्तं—

अविद्धानामलाभे तु पयोदधिघृतेन वा।
सकृदेवाल्पमश्नीयादुपवासस्त्वसौ भवेत्॥

इति। सा तिथिस्सकला ज्ञेयेत्यस्य क्वचिदपवादमाह नारदीयपुराणे वसिष्ठः—

पारणे मरणे नृणां तिथिस्तात्कालिकी स्मृता।
पित्र्येऽस्तमयवेलायां स्पृष्टा पूर्णा निगद्यते॥

इति। पारणे मरणे वा तात्कालिक्येव तिथिः न पुनस्सा तिथिः सकला ज्ञेयेत्येतद्भवतीत्यर्थः। एवं मन्वाद्यादावपि द्रष्टव्यम्। अत एव स्कन्दपुराणं—

मन्वादौ च युगादौ च ग्रहणे चन्द्रसूर्ययोः।
व्यतीपाते च वैधृत्यां तत्कालव्यापिनी तिथिः।
नक्तव्रते च संप्राप्ते तत्कालव्यापिनी तिथिः॥

इति। तस्य नक्तव्रतस्य यः कालः प्रदोषाख्यः तद्व्यापिनी तिथिः ग्राह्येत्यर्थः। तथाच वसिष्ठः—

प्रदोषव्यापिनी ग्राह्या तिथिर्नक्तव्रते सदा।
एकादशीं विना सर्वाः शुक्ले कृष्णे समास्स्मृताः॥

इति। प्रदोषपरिमाणं तु स्कन्दपुराणे उक्तं—

उदयात्प्राक्तनी संध्या घटिकात्रयमुच्यते।
सायंसंध्या त्रिघटिका अस्तादुपरि भास्वतः॥

त्रिमुहूर्तं प्रदोषस्स्याद्रवावस्तमिते ततः ॥

इति । यदत्र संध्याद्वये मौनादि कार्यं, तदेतावति काले कार्यमित्यभिप्रायः । यदा तु दिनद्वयेऽपि प्रदोषव्यापिनी तिथिर्न भवति, तदा तु स्कन्दपुराणोक्तं—

प्रदोषव्यापिनी न स्याद्दिवा नक्तं विधीयते ।
आत्मनो द्विगुणां छायामतिक्रामति भास्करे ॥
तन्नक्तं नक्तमित्याहुः न नक्तं निशि भोजनम् ।
एवं ज्ञात्वा ततो विद्वान् सायाह्ने तु भुजिक्रियाम् ॥
कुर्यान्नक्तव्रती नक्तफलं प्राप्नोति निश्चितम् ॥

इति । नक्षत्रोपवासे तु विष्णुनोक्तं—

उपोषितव्यं नक्षत्रं यस्मिन्नस्तमियाद्रविः ।
यत्र वा युज्यते राम निशीथश्शशिना सह ॥

इति । यत्र वा निशीथोऽर्धरात्रः शशिना नक्षत्रेणास्तमयादुपर्यारब्धेन संयुज्यते तद्वा नक्षत्रमुपोषितव्यमित्यर्थः । तथाच सुमन्तुः—

यत्रार्धरात्रादर्वाक्तु नक्षत्रं प्राप्यते तिथौ ।
तन्नक्षत्रव्रतं कुर्यादतीते पारणं भवेत् ॥

इति । प्राप्यते प्रारभ्यत इत्यर्थः । अतीते 'तस्मिन्नक्षत्र इति शेषः । एवं तिथिप्रयुक्तोपवासेऽपि द्रष्टव्यम् ।

तिथिनक्षत्रनियमे तिथिभान्ते च पारणम् ।
अतोऽन्यथा पारणात्तु व्रतभङ्गमवाप्नुयात् ॥

इति स्मरणात् । एतन्नक्षत्रप्रयुक्तोपवासाविषयम् । नक्षत्रयुक्तायां तिथौ श्रीविष्णुपुराणे उक्तं—

याः काश्चित्तिथयः प्रोक्ताः पुण्या नक्षत्रयोगतः ।
तास्वेव तद्व्रतं कुर्याच्छ्रवणद्वादशीं विना ॥

इति । कथं तर्हि श्रवणद्वादश्यामित्यपेक्षिते मत्स्यपुराणं—

द्वादश्यां शुक्लपक्षस्य नक्षत्रं श्रवणं यदि ।
उपोष्यैकादशीं तत्र द्वादश्यां पूजयेद्धरिम् ॥ इति ॥

इति स्मृतिचन्द्रिकायां तिथिद्वैधनिर्णयः.

---

अथ तिथिप्रसङ्गादेकादश्यपि निर्णीयते.

तत्रादौ एकादशीमहिमा । तत्र नारदीयपुराणे वसिष्ठः—

एकादशीसमुत्थेन वह्निना पातकेन्धनम् ।
भस्मतां याति राजेन्द्र अपि जन्मशतोद्भवम् ॥
नेदृशं पावनं किञ्चिन्नराणां भूप विद्यते ।
यादृशं पद्मनाभस्य दिनं पातकहानिदम् ॥
तावत्पापानि देहेऽस्मिन् तिष्ठन्ति मनुजाधिप ।
यावन्नोपवसेज्जन्तुः पद्मनाभदिनं शुभम् ॥
अश्वमेधसहस्राणि वाजपेयशतानि च ।
एकादश्युपवासस्य कलां नार्हन्ति षोडशीम् ॥
एकादशेन्द्रियैः पापं यत्कृतं भवति प्रभो ।

एकादश्युपवासेन तत्सर्वं विलयं नयेत् ॥
एकादशीसमं किञ्चित्प्रापत्राणं न विद्यते ।
स्वर्गमोक्षप्रदा ह्येषा राज्यपुत्रप्रसाधिनी ॥
सुकलत्रप्रदा ह्येषा शरीरारोग्यदायिनी ।
न गङ्गा न गया भूप न काशी न च पुष्करम् ॥
न चापि कौरवक्षेत्रं न रेवा न च देविका ।
यमुना चन्द्रभागा च तुल्या न च हरेर्दिनात् ॥
अनायासेन राजेन्द्र प्राप्यते वैष्णवं पदम् ।
चिन्तामणिसमा ह्येषा अथवाऽपि निधेस्समा ॥
सा कल्पपादपप्रख्या देवगोरूपमाऽथवा ।

नारदोऽपि—

एकामेकादशीं वाऽपि समुपोष्य जनार्दनम् ।
कामेनापि समभ्यर्च्य संसारान्मुक्तिमाप्नुयात् ॥
प्रसङ्गादथवा दम्भाल्लोभाद्वा त्रिदशाधिप ।
एकादश्यामनश्नन् यः सर्वदुःखाद्विमुच्यते ॥ इति ॥

इति स्मृतिचन्द्रिकायमेकादशीमाहिमा.

---

## अथैकादशीनिर्णयः.

तत्र देवलः—

न शङ्खेन पिबेत्तोयं नाश्नीयात्कूर्मसूकरौ ।
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ॥

कात्यायनोपि—

यानिकानि च पापानि ब्रह्महत्यासमानि च ।
अन्नमाश्रित्य तिष्ठन्ति सम्प्राप्ते हरिवासरे ॥
रटन्तीह पुराणानि भूयो भूयो वरानने ।
न भोक्तव्यं न भोक्तव्यं संप्राप्ते हरिवासरे ॥

इति । न भोक्तव्यं उपोषितव्यमित्यर्थः । अत एव नारदः—

नित्यं भक्तिसमायुक्तैर्नरैर्विष्णुपरायणैः ।
पक्षे पक्षे तु कर्तव्यमेकादश्यामुपोषणम् ॥

इति । अत्रोपोषणं नित्यं कर्तव्यमित्यन्वयः । अनेनैकादशीव्रतस्य नित्यत्वमुक्तं भवति । अत एवाकरणे दोषः पुराणे दर्शितः—

प्रतिग्रासं स भुङ्क्तेऽन्नं किल्बिषं श्वानविट्समम् ।
एकादश्यां सुरश्रेष्ठ यो भुङ्क्ते द्विजजन्मवान् ॥
एकादश्यां तु यो भुङ्क्ते शक्तिमान्निरुपद्रव ।
सुरापानसमं पापं भवेत्तस्य न संशयः ॥
मद्यपानात्सुरश्रेष्ठ पातैव नरकं व्रजेत् ।
एकादश्यन्नकामस्तु पितृभिस्सह मज्जति ॥

इति । अतः पक्षद्वयेऽप्येकादश्यामुपवसेदिति भावः । एतच्च पक्षद्वयोपवासविधानं वनस्थादिविषयम् । अत एव गोभिलः—

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।
वनस्थयतिधर्मोऽयं शुक्लामेव सदा गृही ॥

इति। एवं ब्रह्मचार्यादेरपि द्रष्टव्यम्। अत एव स्मृत्यन्तरं—

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि।
ब्रह्मचारी च नारी च शुक्लामेव सदा गृही॥

इति। गृही पुत्रवानिति शेषः, तस्य कृष्णैकादश्यामुपवासनिषेधस्मरणात्—

सङ्क्रान्त्यामुपवासं तु कृष्णैकादशिवासरे।
चन्द्रसूर्यग्रहे चैव न कुर्यात्पुत्रवान् गृही॥
एकादश्यां तु कृष्णायां सङ्क्रान्तौ च रवेस्तथा।
पारणं चोपवासं च न कुर्यात्पुत्रवान् गृही॥

स्मृत्यन्तरेऽपि—

आदित्यवारे सङ्क्रान्त्यामसितैकादशीदिने।
व्यतीपाते कृते श्राद्धे पुत्री नोपवसेद्गृही॥

पुराणेऽपि—

सङ्क्रान्त्यामुपवासेन पारणेन युधिष्ठिर।
एकादश्यां च कृष्णायां ज्येष्ठः पुत्रो विनश्यति॥

न चैवं सति शुक्लैकादश्यां सङ्क्रान्त्यादियोगे गृहिणः पुत्रवतो नोपवास इति शङ्कनीयम्। यत आह जैमिनिः—

आदित्येऽहनि सङ्क्रान्तौ ग्रहणे चन्द्रसूर्ययोः।
पारणं चोपवासं च न कुर्यात् पुत्रवान् गृही॥

तन्निमित्तोपवासस्य निषेधोऽयमुदाहृतः ।

नानुषङ्गकृतो ग्राह्यो यतो नित्यमुपोषणम् ॥

इति । तन्निमित्तस्य आदित्यवारादिनिमित्तस्य प्रतिषेधः, न पुनरेकादश्यामादित्यवाराद्यन्वयनिबन्धनोपवासनिषेधः, यत एकादश्यां नित्यमुपोषणमित्यर्थः । केचित्—अस्यैकादशीप्रकरणपाठात्तच्छब्दस्य प्रकरणसन्निहितैकादशीपरत्वादनुषङ्गकृत इत्यस्य कृच्छ्रप्राप्तोपवासपरत्वाद्गृहिणः पुत्रवतः सङ्क्रान्त्यादियुक्तायामेकादश्यामुपवासनिषेधपरमेतदिति वर्णयन्ति । तन्मन्दं—वाक्यसन्निधेः प्रकरणसान्निधितश्शीघ्रभावित्वात् । अन्यथा एकादश्यां राहुदर्शनासम्भवेन तत्र कथं तच्छब्दोपपत्तिः । अथ राहुदर्शनमात्रपरत्वं तर्हि सकृदुच्चरितस्यार्थद्वयपरत्वमिति वैरूप्यं स्यात्, अतः पूर्वोक्तैव व्याख्या ज्यायसी । अत एव नारदः—

भानुवारसमोपेता तथा सङ्क्रान्तिसंयुता ।

एकादशी सदोपोष्या पुत्रपौत्रप्रवर्धिनी ॥

पुराणेऽपि—

एकादश्यां यदा वत्स आदित्यस्य दिनं भवेत् ।

तत्रोपोष्या प्रयत्नेन पुत्रपौत्रविवर्धिनी ॥

अन्ये—गृहिणः पुत्रवतः शुक्लैकादश्यामुपवासः कृष्णैकादश्यां नियमरहितमभोजनमात्रमिति वदन्ति, तत् स्वबुद्धिमात्रपरिकल्पितमित्युपेक्षणीयम् । यत्तु नारदीयपुराणे रुक्माङ्गदस्य पुत्र-

पौत्रवतो हरिवासरमात्रोपवासनिषेधाय ब्रह्माणं प्रति यम वचनं—

मनुष्याः पितृभिस्सार्धं तथैव च पितामहैः ।
तेषामपीह पितरः पितॄणां पितरस्तथा ॥
अथ मातामहा यान्ति तेषां ये जनकास्तथा ।
तेषामपि जनयितारो जनितॄणां तु पूर्वजाः ॥
प्रयान्ति वैष्णवं लोकमुपोष्य हरिवासरम् ।
एष दण्डः पटो ह्येष तव पद्भ्यां नियोजितः ।
लोकपालत्वमतुलमार्जितं येन भूभुजा ।
तमेकं वदतां श्रेष्ठ सम्प्राप्ते हरिवासरे ॥
यदि चालयसे धैर्यात्ततोऽहं तव किङ्करः ॥

इति, तत्रापि हरिवासरग्रहणं रुक्माङ्गदस्य विहितैकादशीपरमित्यवगन्तव्यम् । अतो गृहिणः पुत्रवतः शुक्लैकादश्यामुपवासः इतरेषां तु उभयोरिति सिद्धम् । एवञ्च यदुक्तं विष्णुधर्मोत्तरे—

ब्रह्महा स भवेत् स्तेनः सुरापो गुरुतल्पगः ।
विवेचयति यो मोहादेकादश्योस्सितासिते ॥

इति, यदपि पुराणे—

मातृहा पितृहा चैव भ्रातृहा गुरुहा तथा ।
एकादश्यां तु भुञ्जानः पक्षयोरुभयोरपि ॥

इति, तत् पुत्रवद्गृहिव्यतिरिक्तविषयमित्यनुसन्धेयम् । एवमुक्त-

रीत्या व्यवस्थासम्भवेऽपि केचित् 'न कुर्यात्पुत्रवान् गृही' इत्येवमादीनां काम्योपवासविषयत्वं परिकल्प्य गृहिणः पुत्रवतोऽपि कृष्णैकादश्यामप्युपवासं वर्णयन्ति । यदत्र युक्तं तद्ग्राह्यम् । यत्पुनरापस्तम्बेनोक्तं—

आहिताग्निरनड्वांश्च ब्रह्मचारी च ते त्रयः ।
अश्नन्त एव सिद्ध्यन्ति नैषां सिद्धिरनश्नताम् ॥

इति, तत् एकादशीव्यतिरिक्तविषयम् । अत एवाग्निपुराणं—

गृहस्थो ब्रह्मचारी च आहिताग्निस्तथैव च ।
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ॥

इति । यदपि पुराणे—

श्राद्धे जन्मदिने चैव सङ्क्रान्त्यां राहुसूतके ।
उपवासं न कुर्वीत यदीच्छेच्छ्रेय आत्मनः ॥

इति श्राद्धे उपवासनिषेधपरं च वचनं, तदप्येकादशीव्यतिरिक्तविषयम् । अत एव स्मृत्यन्तरं—

उपवासो यदा नित्यः श्राद्धं नैमित्तिकं भवेत् ।
उपवासं तदा कुर्यादाघ्राय पितृसेवितम् ॥

इति । उपवासलक्षणं व्यासेनोक्तं—

उपावृत्तस्य पापेभ्यो यस्तु वासो गुणैस्सह ।
उपवासस्स विज्ञेयो सर्वभोगविवर्जितः ॥

इति । पापेभ्य उपावृत्तस्य गुणैरेकभक्तादिनियमैस्सह यो

वासः ताम्बूलादिभोगरहित उपवास इत्यर्थः । ते च गुणा नारदीयपुराणे दर्शिताः—

तस्यैवं क्रीडमानस्य मोहिन्या सह पार्थिव ।
रुक्माङ्गदस्य श्रोत्राभ्यां पटहध्वनिरागतः ॥
मत्तेभकुम्भसंस्थस्तु धर्माङ्गदमते स्थितः ।
प्रातर्हरिदिनं लोकास्तिष्ठध्वं चैकभोजनाः ॥
अक्षारलवणास्सर्वे हविष्यान्ननिषेविणः ।
अवनीतल्पशयनाः प्रियासङ्गविवर्जिताः ॥
स्मरध्वं देवमीशानं पुराणं पुरुषोत्तमम् ।
सकृद्भोजनयुक्ताश्च उपवासे भविष्यथ ॥
अष्टवर्षाधिको मर्त्यो ह्यशीतिर्न हि पूर्यते ।
यो भुङ्क्ते मामके राष्ट्रे विष्णोरहनि पापकृत् ॥
स मे वध्यश्च दण्ड्यश्च निर्वास्यो विषयाद्बहिः ।

इति । उपवासे कृते द्वादश्यामित्यर्थः । देवलोपि—

दशम्यामेकभुक्तस्तु मांसमैथुनवर्जितः ।
एकादश्यामुपवसेत्पक्षयोरुभयोरपि ॥
ब्रह्मचर्यं तथा शौचं सत्यमामिषवर्जनम् ।
व्रतेष्वेतानि चत्वारि वरिष्ठानीति निश्चयः ॥
स्त्रीणां तु प्रेक्षणात् स्पर्शात्ताभिस्संकथनादपि ।
निष्यन्दते ब्रह्मचर्यं न दारेष्वृतुसङ्गमात् ॥
असकृज्जलपानाच्च सकृत्ताम्बूलचर्वणात् ।

उपवासो विनश्येत दिवास्वापाच्च मैथुनात् ॥

व्यासोऽपि—

पुष्पालङ्कारवस्त्राणि गन्धधूपानुलेपनम् ।
उपवासे न दुष्येत दन्तधावनमञ्जनम् ॥

इति । एतत् पुण्यजनकोपवासे स्त्रीविषयमिति कैश्चिदुक्तम् । दन्तधावनमत्र पर्णादिना, न काष्ठेन—

उपवासे तथा श्राद्धे न खादेद्दन्तधावनम् ।
दन्तानां काष्ठसंयोगः हन्ति सप्त कुलान्यपि ॥

इति तेनैवोक्तत्वात् । विष्णुरपि—'पतितपाषण्डसंभाषणानृत स्तेयादिकं वर्जयेत्' इति । कूर्मपुराणेऽपि—

कांस्यं मांसं मसूरं च चणकं कोद्रमाषकान् ।
शाकं मधु परान्नं च त्यजेदुपवसन् स्त्रियम् ॥

इति । उपवसन् उपवत्स्यन्नित्यर्थः । अतो दशम्यामेते नियमाः । स्मृत्यन्तरेऽपि—

असत्यभाषणं द्यूतं दिवास्वापं च मैथुनम् ।
एकादश्यां न कुर्वीत उपवासपरो नरः ॥

इति । ब्रह्माण्डपुराणेऽपि—

कांस्यं मांसं सुरां क्षौद्रं तैलं वितथभाषणम् ।
व्यवायं च प्रवासं च दिवास्वापमथाञ्जनम् ॥
तिलपिष्टं मसूरं च द्वादशैतानि वैष्णवः ।

द्वादश्यां वर्जयेन्नित्यं सर्वपापैः प्रमुच्यते ॥

बृहस्पतिरपि—

दिवानिद्रां परान्नं च पुनर्भोजनमैथुने ।
क्षौद्रं कांस्यामिषं तैलं द्वादश्यामष्ट वर्जयेत् ॥

अङ्गिरा अपि—

सायमाद्यन्तयोरह्नोस्सायं प्रातश्च मध्यमे ।
उपवासफलप्रेप्सुर्जह्याद्भक्तचतुष्टयम् ॥

इति। न चात्र फलश्रवणात् काम्योपवासविषयमिति शङ्कनीयं, नित्येऽप्युपात्तदुरितक्षयादिफलसंबन्धात्। केचित्तु—नित्ये फलाभावाद्यान्येकभक्तादीनि तानि—

य इच्छेद्विष्णुसायुज्यं श्रियं सन्ततिमेव च ।
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ॥

इत्यादिविहितकाम्योपवासविषयाणीति वर्णयन्ति। यदत्र युक्तं तद्ग्राह्यम्। अत्रोपवासग्रहणविधिमाह देवलः—

गृहीत्वौदुम्बरं पात्रं वारिपूर्णमुदङ्मुखः ।
उपवासं तु गृह्णीयात् यद्वा सङ्कल्पयेद्बुधः ॥

इति। औदुम्बरं ताम्रमयं पात्रं जलपूर्णं उदङ्मुखः आदाय उपवासं गृह्णीयात्, यद्वा सङ्कल्पयेत् सङ्कल्पमात्रं कुर्यादित्यर्थः। अत्र पात्रग्रहणं प्रथमसङ्कल्पविषयं काम्योपवासविषयं चेति कैश्चिदुक्तम्। सङ्कल्पमन्त्रोऽपि तेनैव दर्शितः—

एकादश्यां निराहारो भूत्वाऽहमपरेऽहनि ।
भोक्ष्यामि पुण्डरीकाक्ष गतिर्मम भवाच्युत ॥

इति । विष्णुस्तु मन्त्रान्तरमाह—

एकादश्यां निराहारः स्थित्वाऽहमपरेऽहनि ।
भोक्ष्यामि पुण्डरीकाक्ष शरणं मे भवाच्युत ॥

इति । मन्त्रोच्चारणानन्तरं कात्यायनः—

इत्युच्चार्य ततो विद्वान् पुष्पाञ्जलिमथार्पयेत् ।

इति । एवमुपवाससमर्पणमपि द्रष्टव्यम् । तदाह नारदः—

मन्त्रमुच्चार्य यत्नेन पुष्पाञ्जलिमथार्पयेत् ।
अज्ञानतिमिरान्धस्य व्रतेनानेन केशव ॥
प्रसीद सुमुखो नाथ ज्ञानदृष्टिप्रदो भव ।
एवं समर्पयेद्विद्वान्पारणं समनन्तरम् ॥

इति । एतच्च सूतकादावपि कार्यम् । तदुक्तं विष्णुरहस्ये—

परमापदमापन्नो हर्षे वा समुपस्थिते ।
सूतके मृतके वाऽपि न त्याज्यं द्वादशीव्रतम् ॥

इति । अत्र वराहपुराणोक्तो विशेषः—

सूतके तु नरस्स्नात्वा प्रणम्य मनसा हरिम् ।
एकादश्यां न भुञ्जीत व्रतमेतन्न लुप्यते ॥
द्वादश्यां तु ततो भुक्त्वा सूतकान्ते जनार्दनम् ।
पूजयित्वा विधानेन पूजयेच्च द्विजोत्तमान् ॥

मृतकेऽपि न भुञ्जीत एकादश्यां सदा नरः ।
द्वादश्यां तु समश्नीयात्स्नात्वा विष्णुं प्रणम्य च ॥

इति । उपवासाशक्तौ तु विष्णुरहस्योक्तं—

असामर्थ्ये शरीरस्य व्रते च समुपस्थिते ।
कारयेद्धर्मपत्नीं तु पुत्रं वा विनयान्वितम् ॥

कात्यायनोपि—

पितुर्मातुर्भ्रातुरर्थे आचार्यार्थे विशेषतः ।
उपवासं तु कुर्वाणः पुण्यं शतगुणं लभेत् ॥
यमुद्दिश्य कृतो विद्वान् सोपि संपूर्णमाप्नुयात् ।
नारी स्वपतिमुद्दिश्य एकादश्यामुपोषिता ।
पुण्यं शतगुणं प्राहुः मुनयः पारदर्शिनः ॥
उपवासफलं तस्याः पतिः प्राप्नोत्यसंशयः ॥

इति । अथवा स्मृत्यन्तरोक्तं—

उपवासे त्वशक्तानामशीतेरूर्ध्वजीविनाम् ।
एकभुक्तादिका कार्येत्याह बोधायनो मुनिः ॥

अनेनैवाभिप्रायेण मार्कण्डेयोपि—

एकभुक्तेन नक्तेन तथैवायाचितेन च ।
उपवासेन दानेन न निर्द्वादशिको भवेत् ॥

नक्ते तु विशेषमाह व्यासः—

हविष्यभोजनं स्नानं सत्यमाहारलाघवम् ।

अग्निकार्यमधश्शय्यां नक्तभोजी समाचरेत् ॥

इति । एवं कुर्वतः फलमाह नारदीयपुराणे वसिष्ठः—

हरिदिनमुपवासैर्यः क्षपेत् प्राप्य * जन्तुः
न विशति जठरं विण्मूत्रपूर्णं जनन्याः ।
बहुवृजिनसमेतः कामरागाभिभूतो
व्रजति पदमनन्तं लोकनाथस्य विष्णोः ॥

इति स्मृतिचन्द्रिकायामेकादशीनिर्णयः.

---

## अथैकादशीद्वैधनिर्णयः.

तत्र स्कन्दपुराणं—

प्रतिपत्प्रभृतयस्सर्वा उदयादोदयाद्रवेः ।
सम्पूर्णा इति विख्याता हरिवासरवर्जिताः ॥

इति । कीदृशस्तर्हि संपूर्णो हरिवासर इत्यपेक्षिते गारुड-पुराणं—

उदयात्प्राग्यदा विप्र मुहूर्तद्वयसंयुता ।
संपूर्णैकादशी नाम तत्रैवोपवसेद्गृही ॥
पुनः प्रभातसमये घटिकैका यदा भवेत् ।
अत्रोपवासो विहितश्चतुर्थाश्रमवासिनाम् ॥
विधवायाश्च तत्रैव परतो द्वादशी न चेत् ।

---

* पुण्यमासाद्य.

इति। अनेन यत्र त्रयोदश्यां द्वादशी नास्ति किन्त्वेकादश्येव दिनद्वययुता तत्र या संपूर्णैकादशी तस्यामुपवासं गृही कुर्यादपरस्यां यत्यादय इत्युक्तं भवति । उक्तं च स्मृत्यन्तरे—

संपूर्णैकादशी यत्र प्रभाते पुनरेव सा ।
लुप्यते द्वादशी तस्मिन्नुपवासः कथं भवेत् ॥
उपोष्ये द्वे तिथी तत्र विष्णुप्रीणनतत्परैः ।

इति। तस्मिन् त्रयोदशेऽहनि यदा द्वादशी नास्ति तदा पूर्वोक्ताधिकारिभेदेन द्वे तिथी उपोष्ये न त्वेकैवेत्यर्थः । अत एव कूर्मपुराणं—

संपूर्णैकादशी यत्र प्रभाते पुनरेव सा ।
उत्तरां तु यतिः कुर्यात्पूर्वामुपवसेद्गृही ॥

इति। अस्मिन्नेव विषये यदा त्रयोदश्यामपि द्वादशी तदा द्वितीयैकादश्यामेवोपवासः । तथा च भृगुः—

संपूर्णैकादशी यत्र प्रभाते पुनरेव सा ।
तत्रोपोष्या द्वितीया तु परतो द्वादशी यदि ॥

इति। उपोष्या सर्वैरिति शेषः। अत एव नारदः—

संपूर्णैकादशी यत्र प्रभाते पुनरेव सा ।
सर्वैरेवोत्तरा कार्या परतो द्वादशी यदि ॥

इति। अस्मिन्नेव विषये यदा द्वादश्यामेकादशी नास्ति तदा द्वादश्यामेवोपवासः। तथाच स्मृत्यन्तरं—

एकादशी भवेत्पूर्णा परतो द्वादशी यदि ।
एकादशीं परित्यज्य द्वादशीं समुपोषयेत् ॥

इति । एवञ्च यत्र दशमीशेषस्योदयात्प्राचीनमुहूर्तद्वयाननुप्रवेशः तत्रोपवासः कार्य इत्युक्तं भवति । अनुप्रवेशे तु गारुडपुराणोक्तं—

उदयात्प्राक्त्रिघटिकाव्यापिन्येकादशी यदा ।
संविद्धैकादशी नाम वर्ज्या धर्मार्थकाङ्क्षिभिः ॥
पुत्रराज्यसमृद्ध्यर्थं द्वादश्यां समुपोषयेत् ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणम् ॥
आदित्योदयवेलायामारभ्या षष्टिनाडिका ।
सङ्कीर्णैकादशी नाम त्याज्या धर्मफलेप्सुभिः ॥
पुत्रपौत्रप्रवृद्ध्यर्थं द्वादश्यामुपवासयेत् ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणे ॥

इति । एवञ्च यत्रैकादशी द्वादश्यां नास्ति, द्वादशी न च त्रयोदश्यां, दशमीशेषस्योदयात्प्राचीनमुहूर्तद्वयानुप्रवेशः तत्रैकादशीं परित्यज्य द्वादश्यामुपोष्य त्रयोदश्यां पारणमित्युक्तं भवति । अनेनैवाभिप्रायेण कण्वोऽपि—

अरुणोदयवेळायां दशमी यदि सङ्गता ।
तत्रोपोष्या द्वादशी स्यात्त्रयोदश्यां तु पारणम् ॥
अरुणोदयवेळायां दशमी यदि संयुता ।
रविचक्रार्धमात्राऽपि द्वादशीमुपवासयेत् ॥

तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणम् ॥
अरुणोदयवेळायां विद्धा काचिदुपोषिता ।
तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्जयेत् ॥

भविष्यत्पुराणेऽपि—

अरुणोदयवेळायां दशमी यदि विद्यते ।
पापमूलं सदा ज्ञेयमेकादश्युपवासिनाम् ॥

नारदोपि—

अरुणोदयवेळायां दशमी यदि दृश्यते ।
न तत्रैकादशी कार्या धर्मकामार्थनाशिनी ॥

गोभिलोपि—

अरुणोदयवेळायां दशमी यदि सङ्गता ।
संयुक्तैकादशीपुण्यं मोहिन्यै दत्तवान्विभुः ॥
उदयादुपरिविद्धा दशम्यैकादशी यदा ।
दानवेभ्यः प्रीणनार्थं दत्तवान् पाकशासनः ॥
तस्मात्सर्वप्रयत्नेन सङ्कीर्णैकादशीं त्यजेत् ।
द्वादश्यामुपवासोत्र त्रयोदश्यां तु पारणम् ॥

अरुणोदयाभिप्रायेण नारदीयपुराणे मोहिनीवाक्यं—

अग्नेर्विहारकाले तु वध्वा उत्थापने तथा ।
गवां दोहनकालेऽपि पक्षिसंनादने तथा ॥
निर्गमे सर्ववेदानां मार्जनीग्रहणे तथा ।
द्वारोद्घाटनवेळायां स्नानकाल उपस्थिते ॥

व्रतिनां दीक्षितानां च वादित्रनिनदे तथा ।
तथा प्रान्तो दशम्या यस्त्वेकादश्या समन्वितः ॥
प्रदीयतां निवासार्थं कालो विबुधसत्तमाः ।
तन्मोहिन्या वचः श्रुत्वा सुरास्सर्वे महीपते ॥
संमन्त्र्य सुचिरं कालं दिगम्बरपुरोगमाः ।
यमस्य दर्शनार्थाय वैकुण्ठध्वंसनाय च ॥
पाषण्डिनां विवृद्ध्यर्थं पापसञ्जननाय च ।
ऊचुस्ते मोहिनीं देवाः लोकसंमोहनाय वै ॥
दत्तं मोहिनि ते स्थानं प्रत्यूषसमये हि तत् ।
दुष्टं हरिदिनोपेतं दशम्याः प्रान्तमेव हि ॥

इति । अरुणोदयविद्धां परित्यजेदिति भावः । अरुणोदयोपि पुराणे दर्शितः—

चतस्रो घटिकाः प्रातररुणोदय उच्यते ।
यतीनां स्नानकालस्तु गङ्गाम्बुसदृशः स्मृतः ॥

इति । यतयोऽत्र नियताः । तेषां स्नानकाल इति । अनेन उदयात्प्राचीनं घटिकाचतुष्टयमरुणोदय इत्युक्तं भवति । अरुणोदयाभिप्रायेण नारदोपि—

दशम्याऽनुगता यत्र तिथिरेकादशी भवेत् ।
तत्रापत्यविनाशश्च परेत्य नरकं व्रजेत् ॥

विष्णुरहस्येऽपि—

दशमीशेषसंयुक्तामुपोष्यैकादशीं किल ।

संवत्सरकृतेनेह नरो धर्मेण मुच्यते ॥
दशमीशेषसंयुक्ता गान्धार्या समुपोषिता ।
तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्जयेत् ॥

ब्रह्मकैवर्ते—

दशमीशेषसंयुक्तां यः करोति विमूढधीः ।
एकादशीफलं तस्य न स्याद्द्वादशवार्षिकम् ॥

इति । एवञ्च यानि विद्धोपवासनिषेधपराणि तानि सर्वाण्यरुणोदयवेधाभिप्रायाणीति मन्तव्यम् । अत एव भविष्यपुराणं—

अरुणोदयं यदा शुद्धं दशमीवेधवर्जितम् ।
सर्वदोषविनिर्मुक्तमुपोष्यं तद्दिनं स्मृतम् ॥

इति । यदा तु शुद्धमरुणोदयं वेधराहित्येन जानाति तदा सर्वदोषरहितं तद्दिनमुपोष्यमित्यर्थः । एवञ्च यत्कैश्चिदुक्तं 'यानि विद्धोपवासनिषेधपराणि तान्युदयादूर्ध्वविषयाणि' इति, तदपास्तम् । अतो यत्र दशमीविद्धैकादशी द्वादश्यां नास्ति तत्र द्वादश्यामुपोष्य त्रयोदश्यां पारणं कार्यमिति सिद्धम् । यत्तु हारीतेनोक्तं—

त्रयोदश्यां यदा न स्याद्द्वादशी घटिकाद्वयम् ।
दशम्यैकादशी विद्धा सैवोपोष्या सदा तिथिः ॥

यदपि ऋष्यशृङ्गेण—

पारणे न हि लभ्येत द्वादशी कलयाऽपि चेत् ।

तदानीं दशमीविद्धा उपोष्यैकादशी तिथिः ॥

इति, यदपि विष्णुरहस्ये—

दशमीशेषसंयुक्ता उपोष्यैकादशी तथा ।
यदा न स्यात्त्रयोदश्यां मुहूर्तं द्वादशी तिथिः ॥

इति, एतत्सर्वमेकादशीदिनक्षयविषयम् । अत एव नारदः—

दशमीशेषसंयुक्ता नोपोष्यैकादशी तिथिः ।
एकादश्यां रात्रिशेषे द्वादशी चेन्न दृश्यते ॥

इति । यदैकादशीदिवसे क्षयो न भवति तदा दशमीविद्धा नोपोष्येत्यर्थः । अनेनैकादशीदिनक्षये दशमीविद्धोपोष्येत्येतदर्थादुक्तं भवति । उक्तं च तेनैव—

यदि दैवात्तु संसिध्येदेकादश्यां तिथित्रयम् ।
तत्र क्रतुशतं पुण्यं द्वादश्यां पारणं भवेत् ॥

कूर्मपुराणे—

द्विस्पृगेकादशी यत्र तत्र सन्निहितो हरिः ।
तामेवोपवसेत्काममकामो विष्णुतत्परः ॥

दशमीं द्वादशीं च या स्पृशति सा द्विस्पृक् । पुराणेऽपि—

दिनक्षयमृते देवि नोपोष्या दशमीयुता ।
सैवोपोष्या सदा पुण्या परतश्चेत्त्रयोदशी ॥

इति । यदैकादशीदिनक्षयः त्रयोदश्यां च न द्वादशी तदैव दशमीविद्धोपोष्या नान्यथेत्यर्थः । अनेन यस्मिन् दिनक्षये

संवत्सरकृतेनेह नरो धर्मेण मुच्यते ॥
दशमीशेषसंयुक्ता गान्धार्या समुपोषिता ।
तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्जयेत् ॥

ब्रह्मकैवर्ते—

दशमीशेषसंयुक्तां यः करोति विमूढधीः ।
एकादशीफलं तस्य न स्याद्द्वादशवार्षिकम् ॥

इति । एवञ्च यानि विद्धोपवासनिषेधपराणि तानि सर्वाण्यरुणोदयवेधाभिप्रायाणीति मन्तव्यम् । अत एव भविष्यपुराणं—

अरुणोदयं यदा शुद्धं दशमीवेधवार्जितम् ।
सर्वदोषविनिर्मुक्तमुपोष्यं तद्दिनं स्मृतम् ॥

इति । यदा तु शुद्धमरुणोदयं वेधराहित्येन जानाति तदा सर्वदोषरहितं तद्दिनमुपोष्यमित्यर्थः । एवञ्च यत्कैश्चिदुक्तं 'यानि विद्धोपवासनिषेधपराणि तान्युदयादूर्ध्वविषयाणि' इति, तदपास्तम् । अतो यत्र दशमीविद्धैकादशी द्वादश्यां नास्ति तत्र द्वाद्दश्यामुपोष्य त्रयोदश्यां पारणं कार्यमिति सिद्धम् । यत्तु हारीतेनोक्तं—

त्रयोदश्यां यदा न स्याद्द्वादशी घटिकाद्वयम् ।
दशम्यैकादशी विद्धा सैवोपोष्या सदा तिथिः ॥

यदपि ऋष्यशृङ्गेण—

पारणे न हि लभ्येत द्वादशी कलयाऽपि चेत् ।

तदानीं दशमीविद्धा उपोष्यैकादशी तिथिः ॥

इति, यदपि विष्णुरहस्ये—

दशमीशेषसंयुक्ता उपोष्यैकादशी तथा ।
यदा न स्यात्त्रयोदश्यां मुहूर्तं द्वादशी तिथिः ॥

इति, एतत्सर्वमेकादशीदिनक्षयविषयम् । अत एव नारदः—

दशमीशेषसंयुक्ता नोपोष्यैकादशी तिथिः ।
एकादश्यां रात्रिशेषे द्वादशी चेन्न दृश्यते ॥

इति । यदैकादशीदिवसे क्षयो न भवति तदा दशमीविद्धा नोपोष्येत्यर्थः । अनेनैकादशीदिनक्षये दशमीविद्धोपोष्येत्यतदर्थादुक्तं भवति । उक्तं च तेनैव—

यदि दैवात्तु संसिध्येदेकादश्यां तिथित्रयम् ।
तत्र क्रतुशतं पुण्यं द्वादश्यां पारणं भवेत् ॥

कूर्मपुराणे—

द्विस्पृगेकादशी यत्र तत्र सन्निहितो हरिः ।
तामेवोपवसेत्काममकामो विष्णुतत्परः ॥

दशमीं द्वादशीं च या स्पृशति सा द्विस्पृक् । पुराणेऽपि—

दिनक्षयमृते देवि नोपोष्या दशमीयुता ।
सैवोपोष्या सदा पुण्या परतश्चेत्त्रयोदशी ॥

इति । यदैकादशीदिनक्षयः त्रयोदश्यां च न द्वादशी तदैव दशमीविद्धोपोष्या नान्यथेत्यर्थः । अनेन यस्मिन् दिनक्षये

त्रयोदश्यामपि द्वादशी तस्मिन्नेवोपवसेदित्यर्थादुक्तं भवति। अत एव व्यासः—

एकादशी यदा लुप्ता परतो द्वादशी भवेत्।
उपोष्या द्वादशी तत्र यदीच्छेत्परमां गतिम्॥

लुप्ता क्षयं गता। परतः त्रयोदश्यामित्यर्थः। यत्तु गोभिलेनोक्तं—

एकादश्यां यदा ब्रह्मन् दिनक्षयतिथिर्भवेत्।
तदा ह्येकादशीं त्यक्त्वा द्वादश्यामुपवासयेत्॥
तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणम्।

इति, यदपि पितामहेन—

एकादश्यां यदा वत्स दिनक्षयतिथिर्भवेत्।
अत्रोपोष्या द्वादशी स्यात्त्रयोदश्यां तु पारणम्॥

इति, तत् पुत्रवद्गृहिविषयं, तस्यैव दिनक्षयोपवासनिषेधात्। तथाच मत्स्यपुराणं—

दिनक्षयेऽर्कसङ्क्रान्त्यां ग्रहणे चन्द्रसूर्ययोः।
उपवासं न कुर्वीत पुत्रपौत्रसमन्वितः॥

पि—

एकादशीषु नष्टासु रविसङ्क्रमणेषु च।
पारणं चोपवासं च न कुर्यात्पुत्रवान् गृही॥

इति। पितामहोपि—

एकादशीदिनक्षय उपवासं करोति यः।

तस्य पुत्रा विनश्यन्ति मघायां पिण्डदो यथा ॥

इति । एवञ्च यानि विद्धोपवासनिषेधपराणि तानि सर्वाण्येकादशीदिनक्षयव्यातिरिक्तविषयाणीति मन्तव्यम् । उक्तं च पुराणे—

दिनक्षयमृते देवि नोपोष्या दशमीयुता ।

इति । अनेनैवाभिप्रायेण कूर्मपुराणेऽपि—

कलार्धेनापि विद्धा स्याद्दशम्यैकादशी यदा ।

तदा ह्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेत् ॥

द्वादश्यामुपवासोत्र त्रयोदश्यां तु पारणम् ।

व्यासोपि—

दशमीमिश्रिता पूर्वा द्वादशी यदि लुप्यते ।

एकादश्यां महाप्राज्ञ उपवासः कथं भवेत् ॥

शुद्धैव द्वादशी राजन्नुपोष्या मोक्षकाङ्क्षिभिः ।

पारणं तु त्रयोदश्यां पूजयित्वा जनार्दनम् ॥

स्कन्दपुराणेऽपि—

शुद्धं हरिदिनं न स्यात् द्वादशीं ग्राहयेत्ततः ।

द्वादश्यामुपवासोत्र त्रयोदश्यां तु पारणम् ॥

एवं कुर्वन्नरो भक्त्या विष्णुसायुज्यमाप्नुयात् ।

अन्यथा कुरुते यस्तु स याति नरकं ध्रुवम् ॥

इति । एवं वेधसन्देहेऽपि द्रष्टव्यम् । अत एव कूर्मपुराणं—

बहुवाक्यविरोधेन सन्देहो जायते यदा ।

द्वादशी तु तदा ग्राह्या त्रयोदश्यां तु पारणम् ॥

इति । एवञ्च यत्र दशमीविद्धैकादशी द्वादश्यां नास्ति द्वादशी च त्रयोदश्यां, तत्र द्वादश्यामुपोष्य त्रयोदश्यां पारणं कार्यमित्युक्तं भवति । अस्मिन्नेव विषये यदा द्वादश्यामप्येकादशी तदा द्वितीयैकादश्यामेवोपवासः । तथाच नारदः—

द्वादश्यैकादशी यत्र संगता त्रिदशाधिप ।
तामुपोष्य ततः कुर्यात्त्रयोदश्यां तु पारणम् ॥

इति । बोधायनोपि—

कलाऽप्येकादशी यत्र परतो द्वादशी न चेत् ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणम् ॥

पुराणेऽपि—

द्वादशीमिश्रिता ग्राह्या सर्वत्रैकादशी तिथिः ।
द्वादशी च त्रयोदश्यां विद्यते यदि वा न वा ॥

इति । अस्मिन्विषये यदा त्रयोदश्यामपि द्वादशी तदा द्वितीयैकादश्यामेवोपवासः । तथाच नारदीयपुराणं—

द्वादश्येकादशी यत्र द्वादशी परतोपि वा ।
द्वादशीपारणं कुर्यात्क्रतुकोटिफलं भवेत् ॥

पुराणेऽपि—

एकादशीकलायुक्ता येन द्वादश्युपोषिता ।
किं तस्य बहुभिर्यज्ञैरश्वमेधादिभिर्नृप ॥
एकादशी द्वादशी च तत्र संनिहितो हरिः ।

उपोष्य रजनीमेकां ब्रह्महत्यां व्यपोहति ॥

इति । अस्मिन्नेव विषये द्वादश्यामेकादशी नास्ति तदा द्वादश्यामेवोपवासः । तथाच नारदीयपुराणं—

उपोष्या द्वादशी शुद्धा द्वादश्यामेव पारयेत् ।
निर्गता चेत्त्रयोदश्यां कला वा द्विकलाऽपि वा ॥

इति । द्वादशीदिनक्षये कूर्मपुराणे—

एकादशी द्वादशी च रात्रिशेषे त्रयोदशी ।
त्रिभिर्मिश्रा तिथिः कार्या सर्वपापहरा स्मृता ॥
उपवासः कृतस्तस्यां महापातकनाशनम् ।
एकादशी द्वादशी च रात्रिशेषे त्रयोदशी ॥
तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणम् ।

स्कन्दपुराणेऽपि—

द्वादशीसंगता यत्र भवत्येकादशी तिथिः ।
दिनक्षयेऽपि सा पुण्या निरस्या न कथञ्चन * ॥

इति । यत्तु वृद्धशातातपेनोक्तं—

दशम्यैकादशी विद्धा द्वादशी च क्षयं गता ।
क्षीणा सा द्वादशी ज्ञेया नक्तं तत्र विधीयते ॥

यदपि विष्णुधर्मोत्तरे—

एकादशी यदा विद्धा द्वादशी च क्षयं गता ।
क्षीणा सा द्वादशी ज्ञेया नक्तं तत्र विधीयते ॥

---

* न दशम्या कथञ्चन ॥ इति पाठान्तरम् ।

इति, तत् पुत्रवद्गृहिविषयं, तस्यैव दिनक्षयोपवासनिषेधात्। तथाच मत्स्यपुराणं—

एकादशी द्वादशी च विशेषेण त्रयोदशी।
उपवासं न कुर्वीत पुत्रपौत्रसमन्वितः॥

नन्वनेनोपवासो निषिध्यते न नक्तविधानम्। मैवं, निषिद्धस्योपवासस्य वायुपुराणे नक्तविधानात्।

उपवासनिषेधे तु भक्ष्यं किञ्चित्प्रकल्पयेत्।
न दुष्यत्युपवासेन उपवासफलं लभेत्॥

इति। भक्ष्यप्रकल्पनमपि तत्रैवानन्तरमुक्तं—

नक्तं हविष्यान्नमनोदनं वा यवास्तिलाः क्षीरमथाम्बुवाज्यम्
यत्पञ्चगव्यं यदि वाऽपि वायुः प्रशस्तमत्रोत्तरमुत्तरं च॥

इति। एवञ्च यदुक्तं व्यासेन—

एकादशी द्वादशी च रात्रिशेषे त्रयोदशी।
द्वादश द्वादशीर्हन्ति त्रयोदश्यां तु पारणम्॥

इति, तत् पुत्रवद्गृहिविषयमित्यनुसन्धेयम्। ननु च यानि त्रयोदशीपारणपराणि तेष्वेव 'तत्र क्रतुशतं पुण्यम्' इत्यादिफलश्रवणात्, तानि काम्योपवासाभिप्रायाणि, विद्धोपवासविधिपराणि तु नित्योपवासविषयाणीति व्यवस्था किं न स्यात्। मैवं,

यदि दैवात्तु संसिद्ध्येदेकादश्यां तिथित्रयम्।
तत्र क्रतुशतं पुण्यं द्वादशीपारणे कृते॥

द्वादश्येकादशी यत्र द्वादशी परतोपि च ।
द्वादशीपारणं कुर्यात्क्रतुकोटिफलं भवेत् ॥

इति द्वादशीपारणेऽपि फलश्रवणाविशेषात् । किंच—

सर्वत्रैकादशी कार्या द्वादशीमिश्रिता नरैः ।
प्रातर्भवतु वा मा वा यतो नित्यं हि पारणम् ॥
पारणं तु त्रयोदश्यां निष्कामानां विमुक्तिदम् ।

इत्यादिषु त्रयोदशीपारणस्यापि नित्यत्वश्रवणाच्च । अतो नेयं फलश्रुतिः, अपित्वर्थवाद इति मन्तव्यम् । केचित्तु—

शुद्धैव द्वादशी राजन्नुपोष्या मोक्षकाङ्क्षिभिः ।
पारणं तु त्रयोदश्यां पूजयित्वा जनार्दनम् ॥

इति वचनाद्यतीनामेव मोक्षकाङ्क्षित्वात्तद्विषयाण्येव शुद्धद्वादश्युपवासविधिपराणि । विद्धोपवासविधिपराणि तु गृहस्थविषयाण्येवेति व्यवस्थापयन्ति । तन्मन्दं, स्वर्गादिफलस्य भाङ्क्त्वेन सर्वेषामपि मोक्षकाङ्क्षित्वाविशेषात् । किञ्च—

उपोष्या सर्वदा शुद्धा द्वादशी तु द्विजोत्तमैः ।
क्षत्रैर्वैश्यैस्तथा शूद्रैः किमन्यच्छ्रोतुमिच्छसि ॥

इति शुद्धद्वादश्युपवासे यतिव्यतिरिक्तानामप्यधिकारदर्शनात् । तथा—

एकादशी दिशा विद्धा परतो न निवर्तते ।
गृहिभिर्यतिभिश्चैव सैवोपोष्या सदा तिथिः ॥

इति मत्स्यपुराणे यतीनामपि विद्धोपवासविधानाच्च । यदन्यैरुक्तं—

संपूर्णैकादशी यत्र प्रभाते पुनरेव सा ।
उत्तरां तु यतिः कुर्यात्पूर्वामुपवसेद्गृही ॥

इत्यत्र यतीनां त्रयोदश्यां पारणदर्शनात्तद्विषयाण्येव त्रयोदशीपारणपराणि, विद्धोपवासविधिपराणि तु गृहस्थविषयाण्येवेति, तदपि पूर्वोक्तवचनद्वयेनैवापास्तमित्युपेक्षणीयम् । अपरे तु विद्धोपवासविधिपराण्यरुणोदयवेधविषयाणि, द्वादश्युपवासविधिपराणि तूदयादूर्ध्वविषयाणीति मन्यन्ते, तदपि त्रयोदशीपारणविधिविरुद्धमित्युपेक्षणीयम् । ननु च कथं त्रयोदश्यां पारणं? यावता कूर्मपुराणे—

एकादश्यामुपोष्यैव द्वादश्यां पारणं स्मृतम् ।
त्रयोदश्यां न तत्कुर्याद्द्वादशद्वादशीक्षयात् ॥

इति त्रयोदशीपारणनिषेधात् । श्रीविष्णुरहस्येऽपि—

पारणं तु न कर्तव्यमुपोष्यैकादशीमिह ।
त्रयोदश्यां नरैर्नित्यं धर्मवृद्धिमभीप्सुभिः ॥

इति । स्मृत्यन्तरेऽपि—

दशम्यनुगता हन्ति द्वादशद्वादशीफलम् ।
धर्मापत्यधनायूंषि त्रयोदश्यां तु पारणम् ॥

इति । उच्यते—सत्यमेवं, तथाऽपि यत्र त्रयोदश्यां द्वादशी-

संभवः तत्र तामतिक्रम्य त्रयोदश्यां पारणं न कार्यमित्येवंपरं, न पुनः शुद्धत्रयोदश्याम्। अत एव कूर्मपुराणं—

यदा भवति चाल्पा तु द्वादशी पारणे दिने।
उषःकाले द्वयं कुर्यात्प्रातर्माध्याह्निकं तथा॥

नारदीयपुराणेऽपि—

अल्पायामथ विप्रेन्द्र द्वादश्यामरुणोदये।
स्नानार्चनक्रियाः कुर्याद्दानहोमादिसंयुताः॥
त्रयोदश्यां तु शुद्धायां पारणं पृथिवीफलम्।
शतयज्ञाधिकं वाऽपि नरः प्राप्नोत्यसंशयः॥
एतस्मात्कारणाद्विप्राः प्रत्यूषे स्नानमाचरेत्।
पितृतर्पणसंयुक्तमल्पां दृष्ट्वैव द्वादशीम्॥
महाहानिकरी ह्येषा द्वादशी लङ्घिता नृणाम्।
करोति धर्महरणमस्नातेव सरस्वती॥

न च—

यां तिथिं समनुप्राप्य उदयं याति भास्करः।
सा तिथिस्सकला ज्ञेया स्नानदानजपादिषु॥

इति देवलवचनाद्द्वादश्यतिक्रमेऽपि न दोष इति शङ्कनीयम्। यत आह नारदीयपुराणे वसिष्ठः—

पारणे मरणे नॄणां तिथिस्तात्कालिकी स्मृता।

इति। यस्मिन् काले पारणं मरणं वा तत्र तात्कालिक्येव तिथिः न पुनः सा तिथिस्सकला ज्ञेयेत्येतद्भवतीत्यर्थः। यत्र

पुनस्त्रयोदश्यां कलामात्रैव द्वादशी तत्र पुराणोक्तं—

त्रयोदश्यां यदा राजन् द्वादश्यास्तु कला भवेत् ।
सा तिथिस्सकला चेति वसिष्ठः प्राह धर्मवित् ॥

इति । एवञ्च यानि त्रयोदशीपारणनिषेधपराणि तानि त्रयोदश्यां द्वादशीसम्भवविषयाणीति सिद्धम् । यानि पुनः—

कला काष्ठा मुहूर्तं वा यदि चेदपरेऽहनि ।
द्वादश द्वादशीर्हन्ति त्रयोदश्यां तु पारणम् ॥

इति, त्रयोदश्यां द्वादशीसम्भवमनूद्य पारणनिषेधपराणि, तानि

विद्धाऽप्येकादशी ग्राह्या परतो द्वादशी न चेत् ।
द्वादश द्वादशीर्हन्ति त्रयोदश्यां तु पारणम् ॥

इत्यादिभिस्समानार्थानीत्यनवद्यम् । एवञ्च यत्कैश्चिदुक्तं त्रयोदश्यां द्वादशीसम्भवेऽपि त्रयोदशीपारणं न दोषायेति, तदपास्तम् ॥

इति स्मृतिचन्द्रिकायां एकादशीद्वैधनिर्णयः.

---

एवं प्रसक्तमनुप्रसक्तं च परिसमाप्याधुना प्रकृता पराह्णनिर्णयः क्रियते.

तत्र शातातपः—

दर्शश्राद्धं तु यत्प्रोक्तं पार्वणं तत्प्रकीर्तितम् ।

अपराह्णे पितॄणां च तत्र दानं प्रशस्यते ॥

अपराह्णोऽपि पञ्चधाविभक्तस्याह्नश्चतुर्थो भाग इत्याह व्यासः—

मुहूर्तत्रितयं प्रातः तावानेव च सङ्गवः ।

मध्याह्नस्त्रिमुहूर्तस्स्यादपराह्णोऽपि तादृशः ॥

सायाह्नस्त्रिमुहूर्तस्तु सर्वकर्मबहिष्कृतः ।

इति । वाजसनेयश्रुतिरपि—'आदित्यो वै सर्वा ऋतवस्स यदैवोदेत्यथ वसन्तो यदा सङ्गवोऽथ ग्रीष्मो यदा मध्यन्दिनोऽथ शरद्यदाऽपराह्णस्तदा वर्षा यदाऽस्तमेत्यथ हेमन्तः' इति । श्रुत्यन्तरे तु त्रेधा विभक्तस्याह्नस्तृतीयभागेऽपराह्णशब्दः प्रयुक्तः—'पूर्वाह्णो वै देवानां मध्यंदिनं मनुष्याणामपराह्णः पितॄणाम्' इति । मनुस्तु द्वेधा विभक्तस्याह्नो द्वितीयभागेऽपराह्णशब्दमाह—

यथा चैवापरः पक्षः पूर्वपक्षाद्विशिष्यते ।

तथा श्राद्धस्य पूर्वाह्णादपराह्णो विशिष्यते ॥

स्कन्दपुराणेऽपि—

आवर्तनात्तु पूर्वाह्णो ह्यपराह्णस्ततः परः ।

इति । आवर्तनावधिः पूर्वाह्ण इत्यर्थः । एवमनेकधाऽपराह्णशब्दप्रयोगेऽपि मनूक्त एवापराह्णशब्दार्थः स्वीक्रियते ।

शुक्लपक्षस्य पूर्वाह्णे श्राद्धं कुर्यात् द्विजोत्तमः ।

कृष्णपक्षापराह्णे तु रौहिणं तु न लङ्घयेत् ॥

इति मार्कण्डेयेन द्वेधा विभक्तस्याह्नो द्वितीयभागे श्राद्धवि-

धानात्, तथा रौहिणं तु न लङ्घयेदिति चतुर्थभागादर्वागेव समाप्तिविधानाच्च। रौहिणो नवमो मुहूर्तः। किञ्च—

भूतविद्धा त्वमावास्या प्रतिपन्मिश्रिताऽपि वा।
पित्र्ये कर्मणि विद्वद्भिः ग्राह्या कुतपकालिकी॥

इति हारीतः श्राद्धाङ्गत्वेन कुतपकालं विधत्ते, तदपि न स्यात्। ननु नानेन कुतपकालस्य श्राद्धाङ्गत्वमवगम्यते। मैवं, कुतपकालिकीग्रहणविधेः दृष्टार्थत्वायाङ्गत्वस्यैवोचितत्वात्। उक्तं च पुराणे—

कुं यत्र गोपतिर्गोभिः कार्त्स्न्येन तपति क्षणे।
स कालः कुतपो नाम श्राद्धं तत्र प्रदीयते॥

इति। कुः पृथ्वी। गोपतिः सूर्यः। अत्र यत्कैश्चिदुक्तं 'एकोद्दिष्टं तु मध्याह्ने' इति वचनात्कुतपकालविधानमेकोद्दिष्टविषयमेवेति, तदनेन दर्शश्राद्धेऽपि कुतपकालविधानेनापास्तम्। न चैवं सति कुतपापराह्णविध्योर्विकल्पस्स्यादिति शङ्कनीयं, कुतपोत्तरार्धस्यापराह्णान्तर्भावात्। कुतपो हि नाम पञ्चदशमुहूर्तात्मकस्याह्नोऽष्टमो मुहूर्तः। तथाच मत्स्यपुराणं—

अह्नो मुहूर्ता विख्याता दश पञ्च च सर्वदा।
तत्राष्टमो मुहूर्तो यः स कालः कुतपस्स्मृतः॥

इति। वायुपुराणेऽपि—

मुहूर्तात्सप्तमादूर्ध्वं मुहूर्तान्नवमादधः।
स कालः कुतपो नाम पितॄणां दत्तमक्षयम्॥

इति । एवञ्च यदपराह्णे विहितं तदपराह्णान्तर्गतकुतपे कार्यं विधीयत इत्यविरोधः । एतदपि प्रारम्भाभिप्रायम् । तदाह मत्स्यः—

मध्याह्ने सर्वदा यस्मान्मन्दीभवति भास्करः ।
तस्मादनन्तफलदस्तत्रारम्भो विशिष्यते ॥

गौतमोपि—

प्रारभ्य कुतपे श्राद्धं कुर्यादारौहिणं बुधः ।
विधिज्ञो विधिमास्थाय रौहिणं तु न लङ्घयेत् ॥

इति । एतच्च कुतपादिश्राद्धविधानमनग्निकविषयं, साग्नेः कुतपिण्डापितृयज्ञस्यैव मनुना श्राद्धविधानात् ।

पितृयज्ञं तु निर्वर्त्य विप्रश्चन्द्रक्षयेऽग्निमान् ।
पिण्डान्वाहार्यकं श्राद्धं कुर्यान्मासानुमासिकम् ॥

इति पिण्डपितृयज्ञस्याप्यपराह्णकालत्वेन श्राद्धस्य कुतपादित्वासम्भवादिति भावः । न च

पितृयज्ञं तु निर्वर्त्य तर्पणाख्यं तु योऽग्निमान् ।
पिण्डान्वाहार्यकं श्राद्धं कुर्यादिन्दुक्षये सदा ॥

इति मत्स्यपुराणवचनात्पितृयज्ञशब्दः तर्पणाख्यपितृयज्ञपर इति साग्नेरपि कुतपाद्येव श्राद्धमिति शङ्कनीयं,

पक्षान्तं कर्म निर्वर्त्य वैश्वदेवं च साग्निकः ।
पिण्डयज्ञं ततः कुर्यात्ततोऽन्वाहार्यकं बुधः ॥

इति लौगाक्षिणा साग्नेः पिण्डपितृयज्ञानन्तरमेव श्राद्धविधा-

नात्। अतस्तर्पणशब्दोपि कथञ्चित्पिण्डपितृयज्ञपर इत्यवगन्तव्यम्। एवञ्च यत्र श्राद्धदिने चन्द्रदर्शनेन पिण्डपितृयज्ञप्राप्तिः तत्राग्निमान् कृत्वैव पिण्डपितृयज्ञं श्राद्धं कुर्यात्। अन्यथा तु साग्नेरपि कुतपाद्येव श्राद्धमित्यनुसन्धेयम्। ननु कुतपादिरौहिणान्तत्वाच्छ्राद्धकालस्य तस्य च कर्मद्वयापर्याप्तत्वात्कथमग्निमच्छ्राद्धस्यापि पिण्डपितृयज्ञानन्तर्यम्। मैवं, मत्स्यपुराणे रौहिणादुपर्यपि कालविधानात्—

ऊर्ध्वं मुहूर्तं कुतपाद्यन्मुहूर्तचतुष्टयम्।
मुहूर्तपञ्चकं ह्येतत्स्वधाभवनमिष्यते॥

इति कुतपादिमुहूर्तपञ्चकं श्राद्धस्याङ्गमित्यर्थः। यत्तु यमेनोक्तं—

चतुर्थे प्रहरे प्राप्ते यश्श्राद्धं कुरुते नरः।
आसुरं तद्भवेच्छ्राद्धं दाता च नरकं व्रजेत्॥

इति, तत् चतुर्थप्रहरे प्राप्ते सति योऽन्तिमे मुहूर्तत्रये श्राद्धं करोति तस्य दोष इत्येवंपरं, न पुनः प्रहरनिषेधपरं पूर्वोक्तमत्स्यपुराणवचनविरोधात्। उक्तं च तत्रैव—

सायाह्नस्त्रिमुहूर्तस्स्याच्छ्राद्धं तत्र न कारयेत्।
राक्षसी नाम सा वेळा गर्हिता सर्वकर्मसु॥

इति। यदपि कात्यायनोक्तं—

पिण्डान्वाहार्यकं श्राद्धं क्षीणे राजनि शस्यते।
वासरस्य तृतीयेंऽशे नातिसन्ध्यासमीपतः॥

इति, तदपि कूर्मपुराणवचनविरोधात् 'वासरस्य तृतीयेंऽशे

नातिसन्ध्यासमीपतः ' इति दिनान्तिमे मुहूर्तत्रये न कार्यमित्येवं परं, न पुनर्विशेषेण तृतीयांशे विधिपरमिति । यदपि व्याघ्रपादवचनं—

विधिज्ञश्श्रद्धयोपेतः सम्यक्पात्रनियोजकः ।
रात्रेरन्यत्र कुर्वाणः श्रेयः प्राप्नोत्यसंशयम् ॥

इति, तदप्युक्तयुक्त्यैव नाहर्मात्रविधिपरमिति सर्वमनवद्यम् । रात्रिनिषेधस्य क्वचिदपवादमाह विष्णुः—

सन्ध्यारात्र्योर्न कर्तव्यं श्राद्धं खलु विचक्षणैः ।
तयोरपि च कर्तव्यं यदि स्याद्राहुदर्शनम् ॥

इति । अत्र शातातपः—

कालातीतं तु यत् कुर्याच्छ्राद्धं होमं जपं तथा ।
व्यर्थीभवति तत्सर्वं अमृते तु विषं यथा ॥

इति स्मृतिचन्द्रिकायामपराह्णनिर्णयः.

---

अथान्यान्यपि श्राद्धकालविषयाणि कानिचिद्वचनानि लिख्यन्ते.

तत्र विष्णुधर्मोत्तरे मार्कण्डेयः—

उत्तरादयनाद्राजन् श्रेष्ठं स्याद्दक्षिणायनम् ।
याम्यायनाच्चतुर्मासं तत्र सुप्ते तु केशवे ॥
प्रोष्ठपद्यपरः पक्षः तत्रापि च विशेषतः ।

पञ्चम्यूर्ध्वं तु तत्रापि दशम्यूर्ध्वं ततोपि च ॥
मघायुक्ताऽपि तत्रापि शस्ता राजन् त्रयोदशी ।

इति । श्राद्धकालेषूदगयनाद्दक्षिणायनं श्रेष्ठं याम्यायनाद्दक्षिणायनादित्यर्थः । तत्र दक्षिणायने केशवे सुप्ते सति मासचतुष्टयं श्रेष्ठं, याम्यायनेऽप्याषाढीं पौर्णमासीमारभ्य मासचतुष्टयं श्रेष्ठमिति यावत् । तत्रापि प्रोष्ठपदमासस्यापरपक्षो विशेषतः श्रेष्ठः । तत्रापि पञ्चम्या ऊर्ध्वं दर्शान्तानि दिनानि श्रेष्ठानि । तत्रापि दशम्या ऊर्ध्वं पञ्चदिनानि श्रेष्ठानि । तेष्वपि मघानक्षत्रयुक्ता त्रयोदशी अतिप्रशस्तेत्यर्थः । आदित्यपुराणेऽपि—

आषाढीमवधिं कृत्वा यस्स्यात्पक्षस्तु पञ्चमः ।
श्राद्धं तत्र तु कुर्वीत कन्यां गच्छतु वा न वा ॥

पञ्चमे पक्षे सूर्यः कन्याराशिं गच्छतु वा न वेत्यर्थः । अत्र न वेति पक्षः कन्यागतत्वाभावेऽपि तत्र श्राद्धं कुर्वीतेति विधातुं नोक्तं, किन्तु पञ्चमः पक्षः कन्यागतसूर्यरहितोपि श्रेष्ठः किं पुनस्तत्सहित इति दर्शयितुमिति मन्तव्यम् । अत एव शाट्यायनिः—

नभस्यस्यापरे पक्षे तिथिषोडशकस्तु यः ।
कन्यागतान्वितश्चेत्स्यात्स कालः श्राद्धकर्मणि ॥

इति । तिथिषोडशक इति कदाचित्पक्षवृद्धेः षोडशादिनात्मकोपि नभस्यस्यापरः पक्षः श्राद्धकर्मणि कालो न तु तत्र

पञ्चदशदिनात्मक एवेति दर्शयितुमुक्तम्। यद्वा अमावास्या-या अनन्तरभूता या प्रतिपत्तिथिः तस्या अपि सङ्ग्रहणार्थं तिथिषोडशक इत्युक्तं, प्रतिपदोपि क्षीणचन्द्रत्वेनापरपक्षतु-ल्यत्वात्। न चैवं वाच्यं, नभस्यस्यापरे पक्षे कन्यागते सूर्ये सति तद्दिनात्प्रभृति तिथिषोडशकं श्राद्धकालस्यादि-त्यनेन प्रतिपाद्यत इति। यत आह वृद्धमनुः—

मध्ये वा यदि वाऽप्यन्ते यत्र कन्यां रविर्व्रजेत्।
स पक्षस्सकलः पूज्यः श्राद्धं तत्र विधीयते॥

इति। यत्र यस्मिन् पञ्चमे पक्षे यत्रकुत्रचित्कन्यागते सवि-तरि सति सकलस्स पक्षः श्राद्धे प्रशस्ततरकालः। तेन तत्र प्रतिदिनमेकस्मिन्वा दिने शक्त्यनुसारेण श्राद्धं कर्त-व्यमित्यवगन्तव्यम्। तथा चादित्यपुराणं—

पक्षान्तरेऽपि कन्यास्थे रवौ श्राद्धं प्रशस्यते।
कन्यागते पञ्चमे तु विशेषेणैव कारयेत्॥

पक्षान्तरेऽपि पञ्चमपक्षात् पक्षान्तरेऽपीत्यर्थः। पञ्चमपक्षस्य प्र-शस्ततरत्वं 'विशेषेणैव कारयेत्' इत्यनेनोक्तम्। अनेनैवाभि-प्रायेण जातूकर्ण्यः—

आकाङ्क्षन्ति स्म पितरः पञ्चमं पक्षमाश्रिताः।
तस्मात्तत्रैव दातव्यं दत्तमन्यत्र निष्फलम्॥

प्रशस्तकाले दत्तमत्यन्ताधिकफलसाधकमित्यर्थः। किं पुनः प्रशस्ततरकाले दत्तस्य फलमित्यपेक्षिते कार्ष्णाजिनिः—

पुत्रानायुस्तथाऽऽरोग्यमैश्वर्यमतुलं तथा ।
प्राप्नोति पञ्चमे दत्वा श्राद्धं कामांश्च पुष्कलान् ॥

पुराणेऽपि—

कन्यागते सवितरि यान्यहानि तु षोडश ।
ऋतुभिस्तानि तुल्यानि पितॄणां दत्तमक्षयम् ॥

इति । तदेतच्छाट्यायनिवचनेन समानार्थतया व्याख्येयम् । प्रशस्ततरकालातिक्रमे दोषोपि कार्ष्णाजिनिना दर्शितः—

प्रेतास्तं चैव हिंसन्ति पञ्चमं यो व्यतिक्रमेत् ।
तस्मान्नातिक्रमेद्विद्वान्पञ्चमे पैतृकं विधिम् ॥

यदा तु पञ्चमे पक्षे कथञ्चिदेतच्छ्राद्धं न कृतं तदा त्वाह सुमन्तुः—

कन्याराशौ महाराज यावत्तिष्ठेद्विभावसुः ।
तस्मात्कालाद्भवेद्देयं वृश्चिके यावदागतः ॥
येयं दीपान्विता राजन् ख्याता पञ्चदशी भुवि ।
तस्यां दद्यान्न चेद्दत्तं पितॄणां वै महालये ॥

इति । महालये महालयाख्ये पञ्चमे पक्षे पितॄणां पितृभ्यो न दत्तं चेत्तदा कन्याराशौ यावद्विभावसुस्तिष्ठेत्तावदन्यस्मिन्पक्षेऽपि दद्यात् । तस्मात्कालात्कन्यागतसूर्यान्वितकालात्पश्चात्तुलाराशिगतसूर्यान्वितेऽपि श्राद्धं देयं भवेत् । तत्रापि काले यदि कथञ्चिन्न दत्तं तदा दीपावल्याख्यायां पञ्चदश्यां दद्यादित्यर्थः । पुराणेऽपि—

कन्यागते सवितरि पितरो यान्ति वै सुतान्।
शून्या प्रेतपुरी सर्वा यावद्वृश्चिकदर्शनम् ॥
ततो वृश्चिकसम्प्राप्तौ निराशाः पितरो गताः ।
पुनस्स्वभवनं यान्ति शापं दत्वा सुदारुणम् ॥
सूर्ये कन्यागते कुर्याच्छ्राद्धं यो न गृहाश्रमी ।
धनं पुत्राः कुतस्तस्य पितृनिश्श्वासपीडनात् ॥

आदित्यपुराणेऽपि—

प्रावृष्यृतौ यमः प्रेतान् पितॄंश्चाथ यमालयात्।
विसर्जयित्वा मानुष्ये कृत्वा शून्यं स्वकं पुरम् ॥
क्षुधाऽऽर्ताः कीर्तयन्तश्च दुष्कृतं च स्वयंकृतम् ।
काङ्क्षन्तः पुत्रपौत्रेभ्यः पायसं मधुसंयुतम् ॥
तस्मात्तांस्तत्र विधिना तर्पयेत्पायसेन तु ।
मध्वाज्यतिलमिश्रेण तथा शीतेन चाम्भसा ॥
ग्रासमात्रं परगृहादन्नं यः प्राप्नुयान्नरः ।
भिक्षामात्रेण यः प्राणान् संधारयति वा स्वयम् ॥
यो वा संवर्धयेद्देहं प्रत्यहं स्वात्मविक्रयात् ।
श्राद्धं तेनापि कर्तव्यं तैस्तैर्द्रव्यैस्सुसञ्चितैः ॥

इति । यमालयात्प्रेतान् पितॄंश्च विसर्जयित्वा स्वकं पुरं शून्यं कृत्वा मनुष्यलोके प्रावृषि भाद्रपदमासकृष्णपक्षप्रभृति यावद्वृश्चिकदर्शनं वासयति तावदित्यध्याहृतेन सम्बन्धः । क्षुधाऽऽ-

र्ताः प्रेताः पितरास्तिष्ठन्तीत्यध्याहृतेन सम्बन्धः । विधिना त र्पयेत्पुत्र इति शेषः । चतुर्विंशतिमतेऽपि—

आचार्यगुरुशिष्येभ्यः सखिज्ञातिभ्य एव च ।
तत्पत्नीभ्यश्च सर्वाभ्यस्तथैव च जलाञ्जलीन् ॥
पिण्डदानं च तेभ्यस्तु दद्याद्गद्धापदे नरः ।
तीर्थेषु चैव सर्वेषु माघमासे तथैव च ॥
एकस्मिन् ब्राह्मणे सर्वानाचार्यादीन् प्रपूजयेत् ।
दश द्वादश पिण्डांश्च दद्यादकरणं न तु ॥
नियामको विधिर्नूनं पक्षे वै पञ्चमे स्मृतः ।
तस्मिन् दत्तं हविर्नूनं पितॄणामक्षयं भवेत् ॥

इति । एकस्मिन् ब्राह्मण इत्यसमर्थविषयम् । समर्थस्तु स्वसामर्थ्यानुसारेण प्रत्येकमेकैकस्मिन् ब्राह्मणे आचार्यादीन् सर्वान् एकस्मिन् दिने प्रपूजयेत् । एकैकमाचार्यादिकं एकैकस्मिन्वा दिने प्रपूजयेत् । तत्र यदा प्रथमः पक्षः स्वीक्रियते तदा एकपाकेन समानतन्त्रमाश्रित्य प्रपूजयेत् । तथा च भृगुणा—

एककाले गतासूनां बहूनामथवा द्वयोः ।
तन्त्रेण श्रपणं कृत्वा कुर्याच्छ्राद्धं पृथक्पृथक् ॥
पूर्वकस्य मृतस्यादौ द्वितीयस्य ततः पुनः ।
तृतीयस्य ततः कुर्यात्............... ॥

इत्युक्त्वोक्तं—सन्निपातेष्वयं क्रमः ॥ इति । सन्निपातेषु समसमये नानाश्राद्धेषु कर्तव्यतयाऽऽपतितेषु अयं क्रमः तन्त्रेण

अपर्णं कृत्वा ज्येष्ठानुक्रमेण श्राद्धानुष्ठाने क्रमोऽनुसन्धेय इत्यर्थः। अत्र यदुक्तं स्मृत्यर्थसारे 'एक पाको वैश्वदेवं तन्त्रं पिण्डं बर्हिश्चैकम्' इति, तत्र वैश्वदेवं तन्त्रमिति चिन्त्यं आचार्यगुरुशिष्यसखिज्ञात्यादीनामेकोद्दिष्टविधानेनैव श्राद्धं कार्यमिति स्मृतिवचनैरुक्तत्वात्। तत्र वैश्वदेवासम्भवात् 'नवमिश्रपुराणानीति त्रिविधान्येकोद्दिष्टानि' इत्युक्तत्वेन सर्वैकोद्दिष्टेषु दैवं नास्तीति स्मृत्यर्थसार एवोक्तत्वाच्च। स्मृतिवचनानि त्वदूरे दर्शयिष्यामः। यमोऽप्यसमर्थं प्रत्याह—

हंसे वर्षासु कन्यास्थे शाकेनापि गृहे वसन्।
पञ्चम्योरन्तरे दद्यादुभयोरपि पक्षयोः॥

वर्षासु प्रावृषि हंसे सूर्ये कन्याराशिस्थे पञ्चमपक्षस्य पञ्चमीप्रभृत्यनन्तरपक्षस्य पञ्चमीपर्यन्तदिवसेष्वन्यतमे दिवसे यथासम्भवं गृही पितृभ्यो दद्यादित्यर्थः। पञ्चम्योरन्तरे चतुर्दशीव्यतिरिक्त इति शेषः। तदाह मरीचिः—

विषशस्त्रश्वापदाहितिर्यग्ब्राह्मणघातिनाम्।
चतुर्दश्यां क्रिया कार्या अन्येषां तु विगर्हिता॥

विषादिब्राह्मणान्तैः कृतः घातः एषां ते विषशस्त्रश्वापदाहितिर्यग्ब्राह्मणघातिनः। क्रिया श्राद्धक्रिया एकोद्दिष्टविधानेनेति शेषः। तथाच सुमन्तः—

समत्वमागतस्यापि पितुश्शस्त्रहतस्य तु।
एकोद्दिष्टं सुतैः कार्यं चतुर्दश्यां महालये॥

तुर्दश्यां क्रियते, तत्रैवैकोद्दिष्टविधानेन नान्यदेत्यर्थः । न च शस्त्रादिहतानां कथञ्चिच्चतुर्दश्यतिक्रमे विहितकालातिक्रमे श्राद्धस्याकरणमेवेति वाच्यं, प्रशस्ततरकालालाभेऽपि महालयश्राद्धस्यानुष्ठानमावश्यकमिति प्राग्दर्शितत्वात् । ततश्च शस्त्रहतानामपि प्रशस्ततरपञ्चमपक्षचतुर्दश्यतिक्रमे पार्वणविधानेनैव दिनान्तरेऽपि कार्यम् ।

सङ्क्रान्तावुपरागे च वर्षोत्सव *महालये ।
निर्वपेदत्र पिण्डांस्त्रीन्.... ................ ॥

इति प्रजापतिस्मरणात् । सङ्क्रान्त्यादावपि अपुत्रस्यैकोद्दिष्टमेव । यथाऽऽह गर्गः—

अपुत्रा ये मृताः केचित् स्त्रियो वा पुरुषास्तथा ।
तेषामपि च देयं स्यादेकोद्दिष्टं न पार्वणम् ॥

इति । स्त्रियो भगिन्यादयः । पुरुषाः भ्रात्रादयः । तथाच सुमन्तुः—

सपिण्डीकरणादूर्ध्वं यत्र यत्र प्रदीयते ।
भ्रात्रे भगिन्यै पुत्राय स्वामिने मातुलाय च ॥
मित्राय गुरवे श्राद्धमेकोद्दिष्टं न पार्वणम् ।

इति । यत्र यत्र सङ्क्रान्त्युपरागवर्षोत्सव*महालयगयादौ भ्रात्रादिभ्यः प्रदीयते तदेकोद्दिष्टविधानेन कर्तव्यमित्यर्थः । कात्यायनोपि—

* पर्वोत्सव.

सम्बन्धिबान्धवादीनामेकोद्दिष्टं तु सर्वदा ॥

इति । यत्तु जातूकर्ण्येन सपिण्डीकरणं प्रकृत्योक्तं—

अत ऊर्ध्वं न कर्तव्यमेकोद्दिष्टं कदाचन ।
सपिण्डीकरणान्तं च तत्प्रोक्तमिति मुद्गलः ॥
प्रेतत्वं चैव निस्तीर्णः प्राप्तः पितृगणं तु सः ।
च्यवते पितृलोकात्तु पृथक्पिण्डेन योजितः ॥
सपिण्डीकरणादूर्ध्वं पृथक्त्वं नोपपद्यते ।
पृथक्त्वे तु कृते पश्चात् पुनः कार्या सपिण्डता ॥

इति, यच्च कार्ष्णाजिनिना—

अत ऊर्ध्वं न कर्तव्यमेकोद्दिष्टं कदाचन ।
सपिण्डीकरणान्तं च प्रेतस्यैतदमङ्गलम् ॥

यच्च यमेन—

यस्सपिण्डीकृतं प्रेतं पृथक्पिण्डेन योजयेत् ।
विधिघ्नस्तेन भवति पितृहा चोपजायते ॥
एकमुद्दिश्य यद्दानं प्रेतकर्म तदुच्यते ।
पितृभ्यो दीयते श्राद्धमाहुस्तत्र द्विजोत्तमाः ॥

इति, यच्च पुराणे—

प्रदानं यत्र यत्रैषां सपिण्डीकरणात्परम् ।
तत्र पार्वणवच्छ्राद्धमेकोद्दिष्टं त्यजेद्बुधः ॥

इति, तदेतत्सर्वं प्रातिपद्येनैकोद्दिष्टविध्यभावे द्रष्टव्यम् । ननु—

मघायुक्ता तु तत्रापि शस्ता राजन् त्रयोदशी ।

इति पूर्वोक्तमार्कण्डेयवचनेन मघानक्षत्रयुक्तत्रयोदश्यां यत्प्राशस्त्यमुक्तं तदयुक्तमिव प्रतिभाति।

कृष्णपक्षे त्रयोदश्यां यच्छ्राद्धं कुरुते नरः।
पञ्चत्वं तस्य जानीयाज्ज्येष्ठपुत्रस्य निश्चितम्॥
मघासु कुर्वतः श्राद्धं ज्येष्ठपुत्रो विनश्यति।

इत्यादिवचनैः कृष्णपक्षत्रयोदश्यां मघानक्षत्रे च श्राद्धानुष्ठाने दोषस्मरणात्। सत्यं, किन्तु प्रागुक्तप्राशस्त्यं मातामहवर्गसहितपितृवर्गश्राद्धविषयम्, 'कृष्णपक्षत्रयोदश्याम्' इत्यादि दोषाभिधायकवचनं तु केवलपितृवर्गश्राद्धविषयमिति विषयभेदान्मघानक्षत्रयुक्तत्रयोदश्याः प्राशस्त्यं युक्तमेव। अत एव स्मृत्यन्तरम्—

इच्छेत्त्रयोदशीश्राद्धं पुत्रवान्यस्सुतायुषोः।
एकस्यैव तु नो दद्यात्पार्वणं तु समाचरेत्॥

इति। यः पुत्रवान् सुतायुषोरभिवृद्धिमिच्छेत्स एकस्य वर्गस्य त्रयोदशीश्राद्धं नो दद्यात्। वर्गद्वयस्य पार्वणं समाचरेदित्यर्थः। अयमेवार्थः कार्ष्णाजिनिना स्पष्टीकृतः—

श्राद्धं नैवैकवर्गस्य त्रयोदश्यामुपक्रमेत्।
न तृप्तास्तत्र ये यस्य प्रजा हिंसन्ति तस्य ते॥

इति। तेन वर्गद्वयस्य श्राद्धं कार्यमित्यभिप्रायः। तस्य फलमाह शङ्खः—

प्रोष्ठपद्यामतीतायां मघायुक्तां त्रयोदशीम् ।
प्राप्य श्राद्धं तु कर्तव्यं मधुना पायसेन च ॥
प्रजामिष्टां यशस्स्वर्गमारोग्यं च धनं तथा ।
नृणां श्राद्धे सदा प्रीताः प्रयच्छन्ति पितामहाः ॥

मार्कण्डेयपुराणेऽपि—

प्रजामिष्टं पशून्मेध्यांत्स्वातन्त्र्यं बुद्धिमुत्तमाम् ।
दीर्घमायुस्तथैश्वर्यं कुर्वाणस्तु त्रयोदशीम् ॥

इति । मघात्रयोदशीश्राद्धं कुर्वाणः प्रजादिकं प्राप्नोतीत्यर्थः । महाभारतमपि—

ज्ञानिनां तु भवेच्छ्रेष्ठः कुर्वन् श्राद्धं त्रयोदशीम् ।
नावश्यं तु युवानोऽस्य प्रमीयन्ते नरा गृहे ॥

अत्र मघात्रयोदशीश्राद्धकर्तुः गृहे युवानो नरा अवश्यं निश्चितं न प्रमीयन्त इत्यर्थः । अस्मिन् श्राद्धे पिण्डप्रदानं पुत्रवद्भिः पुत्ररहितैश्च न कार्यम्, मघात्रयोदश्याः युगादित्वात् । तथाच पुलस्त्यः—

अयनद्वितये श्राद्धं विषुवद्वितये यथा ।
युगादिषु च सर्वेषु पिण्डनिर्वापणादृते ॥

कर्तव्यमिति शेषः । पुत्रवद्गृहिणा तु पिण्डनिर्वापणं सुतरां न कर्तव्यं मघानक्षत्रान्विततत्वात् ।

सङ्क्रान्त्यामुपवासेन पारणेन च भारत ।
मघायां पिण्डदानेन ज्येष्ठपुत्रो विनश्यति ॥

इति पुराणे दोषश्रवणात् । तस्मात्पिण्डमात्रवर्जं वर्गद्वयस्य श्राद्धं मघात्रयोदश्यां पुत्रवद्गृहिणा पुत्ररहितेन वा कर्तव्यम् । न च वाच्यम्—

श्राद्धं नैवैकवर्गस्य त्रयोदश्यामुपक्रमेत् ।
न तृप्तास्तत्र ये यस्य प्रजा हिंसन्ति तस्य ते ॥

इति वचनान्मातामहवर्गस्य पृथगुद्देशेन श्राद्धवन्मातृवर्गस्यापि मघात्रयोदश्यां पृथगुद्देशेन श्राद्धमावश्यकमिति । पृथगुद्देशाभावेऽपि मातृवर्गस्य तृप्तिसम्भवात् । तथाच स्मृतिः—

न मातृषु पृथक् श्राद्धं मुनिभिर्यत्र कीर्तितम् ।
पितुः पिण्डोदके साध्वी भुङ्क्ते याऽनपचारिणी ॥

इति । बृहस्पतिरपि—

स्वेन भर्त्रा समं शाद्धं माता भुङ्क्ते सदैवतम् ।
पितामही सदा स्वेन स्वेनैव प्रपितामही ॥

इति । सदैवतं श्राद्धं पार्वणश्राद्धमित्यर्थः । एतत्पत्या सह स्त्रीणां सपिण्डीकरणविषयम् । श्वशुरेण सह सपिण्डीकरण-विषये तु तेन सह पार्वणश्राद्धं भुङ्क्ते । तथाच शातातपः—

एकमूर्तित्वमायाति सपिण्डीकरणे कृते ।
पत्नी पतिपितृणां तु तस्मादंशेषु भागिनी ॥

इति । पत्युः पित्रा सह सपिण्डीकरणे पत्युः पित्रंशभागिनीति विवेकः । स्मृत्यन्तरेऽपि—

सपिण्डीकरणादूर्ध्वं यत्पितृभ्यः प्रदीयते ।

सर्वत्रांशहरा माता इति धर्मेषु निश्चयः ॥

सर्वत्रेति वचनान्महालयाख्ये भाद्रपदापरपक्षे गयाख्ये च देशविशेषे क्रियमाणे पार्वणेऽत्यन्तप्रीतिजनकेऽपि मातुरंशहारित्वमस्तीति महालयगयादावपि पुत्रेण मातुः पृथगुद्देशेन श्राद्धं न कार्यमिति गम्यते। अत एव चतुर्विंशतिमते—

क्षयाहं वर्जयित्वैकं स्त्रीणां नास्ति पृथक्क्रिया ।

इत्युक्तम्। यत्पुनस्तत्रैवोक्तं—

केचिदिच्छन्ति नारीणां पृथक्छ्राद्धं महर्षयः ।

इति, तत् यत्र नारीणां पितामह्यादिभिस्सह सपिण्डीकरणं कृतं तद्विषयम्, तत्र पितृपिण्डेष्वंशभागित्वाभावात्। एवञ्च सांवत्सरिकश्राद्धादन्यत्र पार्वणश्राद्धेऽपि पित्राद्युद्देशेन क्रियमाणे पत्यादिभिस्सह सपिण्डीकृतानां पृथगुद्देशेन श्राद्धं न कर्तव्यम्। पितामह्यादिभिस्सार्धं सपिण्डीकृतानां पृथगुद्देशेन श्राद्धं कर्तव्यमिति स्थितम्। कथं तर्हि वृद्धिश्राद्धेऽन्वष्टक्ये च पत्यादिभिस्सह सपिण्डीकृतानामपि मात्रादीनां पृथक्छ्राद्धानुष्ठानं, अंशहारिणीनां पृथक्छ्राद्धाभावात्। उच्यते,—

अन्वष्टकासु वृद्धौ च प्रतिसंवत्सरे तथा ।

अत्र मातुः पृथक्श्राद्धमन्यत्र पतिना सह ॥

इति स्मृत्यन्तरवचनबलात्,

अन्वष्टके तथा मातृश्राद्धे चैव मृतेऽहनि ।

एकोद्दिष्टं तथा मुक्त्वा त्रिषु नान्यत्पृथग्भवेत् ॥

इति शङ्खवचनबलाच्च अन्वष्टकादौ पृथगनुष्ठानम्। मातृश्राद्धं नान्दीश्राद्धम्। एवञ्च यत्र श्राद्धं स्त्रीणां पत्न्यादिभागहारित्वं न संभवति, सम्भवत्यपि वचनात्पृथक्छ्राद्धविधानं तद्विषयं—

केचिदिच्छन्ति नारीणां पृथक्छ्राद्धं महर्षयः।

इति चतुर्विंशतिवचनमिति मन्तव्यम्। अपरे त्वेवं मन्यन्ते—

एकमूर्तित्वमायाति सपिण्डीकरणे कृते।
पत्नी पतिपितॄणां तु तस्मादंशेषु भागिनी ॥

इति वचनेन सपिण्डीकरणानन्तरकालं पत्यादिदेवत्ये श्राद्धे मातॄणां सहभावेन देवतात्वं भवतीत्येतन्मात्रं विधीयते। न तु येन सह सपिण्डीकरणं कृतं तद्देवत्ये श्राद्धे सहभावेन देवतात्वमिति, अस्मिन् वचने तथाविधविशेषानवगमात्। अतश्च पितामह्यादिभिस्सह सपिण्डीकृताया अपि मातुर्न पृथक्छ्राद्धम्। एतच्च मातुरपृथक्छ्राद्धमनित्यं—

केचिदिच्छन्ति नारीणां पृथक्छ्राद्धं महर्षयः।

इति चतुर्विंशतिमते पृथक्छ्राद्धपक्षस्याप्यभिधानात्। एवञ्चान्वष्टकादित्रये मातॄणां श्राद्धं पृथगेव, गयामहालयादिदेशकालवैशिष्ट्यात्तृप्त्याधिक्यापादकश्राद्धे तु पृथक्सह वा स्वभर्तृभिरिति विकल्पो न सर्वत्रामावास्यादिष्वपीति। यदत्र युक्तं तद्ग्राह्यम् ॥

कन्यागते सवितरि महालयाख्ये पञ्चमापरपक्षे श्राद्धं

कर्तव्यमित्युक्तम् । यदा तु कन्यागतत्वाभावः तदा श्राद्धं न कार्यम् । यदाह ज्योतिःपराशरः—

अर्के नभस्यकन्यास्थे श्राद्धपक्षः प्रकीर्तितः ।
सिनीवालीमतिक्रम्य यदा कन्यां व्रजेद्रविः ॥
तदा कालस्य वृद्धत्वादतीतैव पितृक्रिया ।

कालस्य वृद्धत्वात् वृद्धियुक्तत्वात् अतीतैव पञ्चमपक्षमतिक्रान्तैव पितृक्रिया, तत्र महालयश्राद्धनिषेधात् । तथाच भृगुः—

एकराशिस्थिते सूर्ये यदा दर्शद्वयं भवेत् ।
हव्यकव्यक्रियाहन्ता तदा ज्ञेयोऽधिमासकः ॥
वृद्धिश्राद्धं तदा सोममग्न्याधेयं महालयम् ।
राजाभिषेकं काम्यं च न कुर्याद्भानुलङ्घितः ॥

इति । महालयं महालयश्राद्धम् । ज्योतिःपितामहोऽपि—

षष्ट्या तु दिवसैर्मासः कथितो बादरायणैः ।
पूर्वार्धे तु परित्यज्य कर्तव्या उत्तरे क्रिया ॥

षष्टिदिनात्मकमासस्य पूर्वार्धे परित्यज्य उत्तरार्धे श्राद्धक्रिया यथाकालमनुष्ठेयेत्यर्थः । ज्योतिःपराशरोऽपि—

यातुधानप्रियो मासः कन्यार्के जायते यदा ।
पित्र्यं दैवं तथा कर्म उत्तरे मासि युज्यते ॥

यदा कन्यागतेऽर्के यातुधानप्रियो मासो जायते असङ्क्रान्तिको भाद्रपदो मासो जायते इत्यर्थः । 'नैरृतयातुधानानामसङ्क्रान्तिकोऽधिमासः' इति ब्रह्मसिद्धान्ते । नैरृतदिग्वार्तिराक्षस-

सम्बन्धितया असङ्क्रान्तिकमासस्याभिधानादेवं व्याख्यातम् । उत्तरे मासि युज्यते इत्यस्यायमर्थः —

षष्ट्या तु दिवसैर्मासः कथितो बादरायणैः ।

इति मतानुसारेण भाद्रपदमासस्य द्वैगुण्ये सति त्रिंशद्दिनस्य पक्षस्थानीयत्वादुत्तरो मास उत्तरं त्रिंशद्दिनं षष्टिदिनात्मक-भाद्रपदमासस्यापरपक्षो भवति । कन्यासङ्क्रान्तियुक्तश्चेति महालये कर्तव्यं पित्र्यादिकर्म तत्रैव युज्यत इति, तत्रापि शुक्लपक्षात्कृष्णपक्षः प्रशस्ततर इति शास्त्रान्तरतोऽवगन्तव्यम् । यत्तु तेनैवोक्तं—

मासः कन्यागते भानौ असङ्क्रान्तो यदा भवेत् ।
पित्र्यं देयं तथा कर्म तुलास्थे कर्तुरक्षयम् ॥

इति, तत् पूर्वोक्तकाले कथञ्चिच्छ्राद्धस्याकरणे द्रष्टव्यं, पूर्वोक्त-कालापेक्षया जघन्यकालत्वात् ॥

इति स्मृतिचन्द्रिकायां श्राद्धकालविषयाणि.

---

अथान्यान्यप्यधिमासविषयाणि कानिचिद्वचनानि लिख्यन्ते.

तत्र पैठीनसिः —

श्रौतस्मार्ताः क्रियास्सर्वा द्वादशे मासि कीर्तिताः ।
त्रयोदशे तु सर्वास्ता निष्फला इति संज्ञिताः ॥
तस्मात्त्रयोदशे मासि कुर्यात्ता न कथञ्चन ॥

इति। ताः श्रौतस्मार्तक्रिया इत्यर्थः। त्रयोदशे मासि अधिमासीत्यर्थः। अत एव गभस्तिः

न कुर्यादधिके मासि तस्मिन् कर्म कदाचन।

इति अधिकमासस्य कालमलत्वेन कर्मानर्हत्वादित्यभिप्रायः। तथाच गृह्यपरिशिष्टे—

मलं वदन्ति कालस्य मासं कालविदोऽधिकम्।

इति। अधिकं मासं कालस्य मलं वदन्तीत्यन्वयः। एवंविधो मासः कदा भवतीत्यपेक्षिते ब्रह्मसिद्धान्त उक्तं—

चैत्रादर्वाङ्गाधिमासः परतस्त्वधिको भवेत्।

इति। चैत्रादर्वाक् कन्यासङ्क्रान्तिमारभ्येत्यर्थः। अत एव ज्योतिस्सिद्धान्त उक्तं—

घटकन्यागते सूर्ये वृश्चिके वाऽथ धन्वनि।

मकरे वाऽथ कुम्भे वा नाधिमासो विधीयते॥

कन्यातुलावृश्चिकधनुर्मकरकुम्भगते सूर्ये अधिमासो न संपद्यते, किन्त्ववशिष्टराशिगते सूर्ये कदाचित्कालवृद्धौ सम्पद्यत इति शेषः। तथाच वासिष्ठसिद्धान्त उक्तम्—

द्वात्रिंशद्भिर्गतैर्मासैर्दिनैष्षोडशभिस्तथा।

घटिकानां चतुष्केण पतत्यधिकमासकः॥

अतीताधिकमासादारभ्य द्वात्रिंशन्मासादुपरिषोडशदिनेषु घटिकाचतुष्टयाधिकेषु गतेष्वधिमासो भवतीत्यर्थः। यत्तु काठकगृह्येऽभिहितम्—

यस्मिन्मासे न सङ्क्रान्तिः सङ्क्रान्तिद्वयमेव वा ।
मलमासस्स विज्ञेयो मासे त्रिंशत्तमे भवेत् ॥

इति, तत्त्रिंशन्मासादर्वाङ्न संभवतीत्येवं परम् । यत्तु ब्रह्मसिद्धान्तेऽभिहितम्—

मासद्वयेऽब्दमध्ये तु सङ्क्रान्तिर्न यदा भवेत् ।
प्राकृतस्तत्र पूर्वः स्यादधिमासस्तथोत्तरः ॥

इति , अत्र त्रिंशन्मासादूर्ध्वं यस्सङ्क्रान्तिरहितो मासः सोऽधिमासः । ततोर्वाग्योऽसंक्रान्तो मासः स प्राकृतः नाधिमास इत्येतावन्मात्रं विवक्षितं न पुनः पौर्वापर्यमिति मन्तव्यम् । यदा त्वेकस्मित् संवत्सरे असंक्रान्तमासद्वयं संक्रान्तिद्वययुतो मासः तत्रापि त्रिंशन्मासादूर्ध्वं योऽसङ्क्रान्तो मासः सोऽधिमासः । शेषौ तु संसर्पांहस्पतिसंज्ञकाविति बोद्धव्यम् । तथाच बार्हस्पत्ये ज्योतिर्ग्रन्थेऽभिहितम्—

यस्मिन्मासे न सङ्क्रान्तिः सङ्क्रान्तिद्वयमेव वा ।
संसर्पांहस्पती मासावधिमासश्च निन्दिताः ॥

इति । यस्मिन्मासे चैत्रादर्वाङ्न संक्रान्तिः संक्रान्तिद्वयमेव वा भवति तौ संसर्पांहस्पतिसंज्ञकौ मासौ, चैत्रात्परतो योऽसंक्रान्तो मासः सोऽधिमाससंज्ञकः । एते च त्रयो मासा निन्दिता इत्यर्थः । एतेष्वधिमासोऽतिनिन्दितः, कालमलरूपत्वात्तस्य । तदपि तत्रैवोक्तं— ‘अधिमासोऽतिदुष्टस्स्यात्’

इति, अत एवास्य मलिम्लुचसंज्ञा लघुहारीतेन दर्शिता—

इन्द्राग्नी यत्र हूयेते मासादिः सम्प्रकीर्तितः ।
अग्नीषोमौ स्मृतौ मध्ये समाप्तौ पितृसोमपौ ॥
तमतिक्रम्य चान्यस्मिन् मासे गच्छेत्कदाचन ।
आद्यो मलिम्लुचो ज्ञेयो द्वितीयः प्राकृतस्स्मृतः ॥

इति । इन्द्राग्नी यत्र हूयेते इत्यनेन वचोभङ्ग्या कृष्णप्रतिपन्निर्दिष्टा । अग्नीषोमौ स्मृतौ मध्य इत्यनेन शुक्लप्रतिपन्निर्दिष्टा । समाप्तौ पितृसोमपावित्यनेनामावास्या । एतेन चान्द्रो मास उपलक्षितः । पूर्वाधिमासादारभ्य त्रिंशन्मासात्परतो यो भवति-तमतिक्रम्यान्यस्मिन्मासे यदा सूर्यो राश्यन्तरं गच्छति तदा पूर्वोसङ्क्रान्तो मासो मलिम्लुचो ज्ञेयः । उत्तरः ससङ्क्रान्तिमासः प्राकृतो ज्ञेय इत्यर्थः । पराशरोपि—

रविणा लङ्घितो मासश्चान्द्रश्चाद्यो मलिम्लुचः ।
तत्र यद्विहितं कर्म उत्तरे मासि कारयेत् ॥

स्मृत्यन्तरेऽपि—

एवं षष्टिदिनो मासः तदर्धं तु मलिम्लुचः ।
त्यक्त्वा तदुत्तरे कुर्यात्पितृदैवादिकाः क्रियाः ॥

मलिम्लुचमप्यर्धं कासांचित्पितृदेवाक्रियाणामनुष्ठाने न त्याज्य-मित्याह बृहस्पतिः—

नित्यनैमित्तके कुर्यात्प्रयतस्स मलिम्लुचे ।

इति। यस्य नित्यस्याकरणे कालात्ययनिमित्तं प्रायश्चित्तमाम्नायते, तद्यथा—'अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेद्यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वाऽतिपादयेत्' इति। तथाभूतस्य नित्यस्य ग्रहणं, न तु नित्यमात्रस्य। तेन दर्शपूर्णमासाग्निहोत्रपञ्चमहायज्ञादेरनुष्ठानं मलिम्लुचे कर्तव्यं, स्वकालातिक्रमे प्रायश्चित्ताम्नानात्। एवञ्च नित्याऽपि सोमयागक्रिया मलिम्लुचे मासि न कार्या, मलिम्लुचमासातिक्रमेऽपि वसन्तादिकालस्य सोमयागाङ्गभूतस्यानतिक्रान्तत्वेनात्र प्रायश्चित्तप्राप्तेरसम्भवात्। एवं यस्य नैमित्तिकस्य गृहदाहेष्ट्यादेर्निमित्तानन्तरकाले कर्तव्यस्य मासान्तरे विहितकालालाभः तथाभूतावश्यकक्रियाविषय एव मलिम्लुचे मासि कुर्यादिति विधानम्। जातेष्ट्यादेर्नैमित्तिकस्यापि शिशुसंरक्षणार्थं निमित्तानन्तरकालमपहाय कालान्तरे कर्तव्यस्य यथा दशरात्रादिसूतककालमध्येऽनुष्ठानमन्याय्यं, तथा मलिम्लुचकालमध्येऽपीति तस्य न मलिम्लुचेऽनुष्ठानम्। एवञ्च नित्यत्वं नैमित्तिकत्वं चाविवक्षितम्। यस्यातिक्रमे प्रायश्चित्तप्राप्तिः यस्य च मासान्तरे विहितकालालाभेनावश्यकं मलिम्लुचेऽनुष्ठानं तत्सर्वं मलिम्लुचे कुर्यादिति बार्हस्पत्यवचनतात्पर्यार्थः प्रत्येतव्यः। तथाच स्मृत्यन्तरे—

अनन्यगति यन्नित्यं कुर्यान्नैमित्तिकं तथा।

इति । गृह्यपरिशिष्टेऽपि—

मलं वदन्ति कालस्य मासं कालविदोऽधिकम् ।
नेहेतात्र त्वशेषेज्यामन्यत्रावश्यकाद्विधेः ॥

इति । अनेनावश्यको विधिरधिकमासेऽनुष्ठेय इत्यर्थादुक्तं भवति । उक्तं च साक्षादपि तत्रैव—

अवषट्कारहोमाश्च पर्व चाग्रयणं तथा ।
मलमासे तु कर्तव्यं.................... ॥

इति । अवषट्कारहोमाः अग्निहोत्रौपासनवैश्वदेवादयः । पर्व दर्शपूर्णमासौ, पार्वणस्थालीपाकश्च । आग्रयणमाग्रयणेष्टिः । यद्यप्याग्रयणं 'वर्षासु श्यामाकैर्यजेत' इति मासद्वयात्मकवर्षाख्यर्तौ विहितं तत् अमलिम्लुचमासेऽपि तत्कालसम्भवादनन्यगतिकं न भवति । तथाऽपि दुर्भिक्षे नवश्यामाकव्यतिरिक्तधान्यासम्भवे जीवनार्थं नवश्यामाकान्नभोजनमकृताग्रयणेनाकर्तव्यमित्याग्रयणानुष्ठानं जीवनार्थमावश्यकमिति युक्तमुक्तमाग्रयणं तथेति । यदा तु दुर्भिक्षाभावादनावश्यकं तदाऽधिमासे नवश्यामाकाग्रयणं न कर्तव्यम् । अनेनैवाभिप्रायेण पैठीनसिना—

सङ्क्रान्तिरहिते मासि कुर्यादाग्रयणं न वा ।

इति विकल्प उक्तः । अन्यान्यपि कानिचित् मलिम्लुचे कार्याणीत्युक्तानि यमेन—

गर्भे वार्धुषिके भृत्ये श्राद्धकर्मणि मासिके ।
सपिण्डीकरणे नित्ये नाधिमासं विवर्जयेत् ॥
तीर्थस्नानं जपो होमो यवव्रीहितिलादिभिः ।
जातकर्मान्त्यकर्माणि नवश्राद्धं तथैव च ॥
मघात्रयोदशीश्राद्धं श्राद्धान्यपि च षोडश ।
चन्द्रसूर्यग्रहे स्नानं श्राद्धं दानं जपादिकम् ॥
कार्याणि मलमासेऽपि नित्यं नैमित्तिकं तथा ।

इति । गर्भे गर्भनिमित्तके गर्भमात्रप्रयुक्त्या विहिते पुंसवनसीमन्तादिक इति यावत् । वार्धुषिके—

अशीतिभागो वृद्धिस्स्यात् मासि मासि सबन्धके ।

इत्यादिवचनोक्तवृद्धिग्रहणे । भृत्ये संवत्सरादिपर्यन्तकालकृते भृत्ये । मासिके श्राद्धकर्मणि, अमावास्याश्राद्धकर्मणीत्यर्थः । अन्ये तु मन्यन्ते—अमावास्याश्राद्धं त्रयोदशेऽपि मासि ऋश्यशृङ्गवचनेन निषिद्धम्, तेन मासिकशब्दो नामावस्याश्रद्धमाह, किंतु प्रथमसंवत्सरविहितमासिकश्राद्धमाहेति । ऋश्यशृङ्गवचनं चैवं पठन्ति—

संवत्सरातिरेको वै मासो यस्स्यात्त्रयोदशः ।
तस्मात्त्रयोदशे श्राद्धं न कुर्यादिन्दुसंक्षये ॥

इति । अपरे तु—

तस्मात्त्रयोदशं श्राद्धं न कुर्यान्नोपतिष्ठते ।

इति पठन्ति । अयमेव पाठो युक्तः । इन्दुसंक्षय इति पाठे पि-

ण्डपितृयज्ञवत्तदनन्तरमवश्यानुष्ठेयस्यामावास्याश्राद्धस्य प्रतिषेधानर्हस्य प्रतिषेधप्रसङ्गात्,

जातकर्मणि यच्छ्राद्धं दर्शश्राद्धं तथैव च ।
प्रतिसंवत्सरं यच्च पूर्वमासे प्रकीर्तितम् ॥

इति वचनविरोधप्रसङ्गाच्च । तस्मात् 'श्राद्धकर्मणि मासिके' इत्यनेन अमावास्याश्राद्धमुक्तमिति व्याख्यानमेव युक्तम् । ऋश्यशृङ्गवचनार्थं उपरिष्टाद्भविष्यति । नित्ये नित्यदाने । होमोऽत्रौपासनहोमः, 'यवव्रीहितिलादिभिः' इति तत्र होतव्यद्रव्यानुवादात् । अन्त्यकर्माणि दहनोदकपिण्डदानास्थिसञ्चयनादीनि । शेषं व्यक्तम् । जातकर्मग्रहणं जातश्राद्धादेरुपलक्षणार्थम् । अत एव स्मृत्यन्तरम्—

श्राद्धजातकनामानि ये च संस्कारसव्रताः ।
मलिम्लुचेऽपि कर्तव्या इष्टीः काम्याश्च वर्जयेत् ।

संस्काराः अन्नप्राशननिष्क्रमणादयः । सव्रता जनार्दनशयनादारभ्य यावदुत्थानं धारणपारणादिकं करिष्यामीत्येवं सङ्कल्पसहिताः । काम्या इति ग्रहणं काम्यपशुबन्धादिकर्मोपलक्षणार्थम्, सर्वेषामपि काम्यानामनावश्यकत्वेन वर्जनीयत्वात् । अत एव हारीतः—

अधिमासे न कर्तव्यं श्राद्धमभ्युदयं तथा ।
तथैव काम्यं यत्कर्म.......................... ॥

इति । यत्काम्यं कर्म इष्ट्यादिकं तत्सर्वमधिमासे न कर्तव्य-

मित्यर्थः । आभ्युदयिकं श्राद्धं चूडाकरणात्प्राक्तनसंस्कारेषु विहिताभ्युदयिकश्राद्धव्यतिरिक्तं द्रष्टव्यं, जातकर्मादौ विशेषेणाभ्युदयिकश्राद्धविधानस्य पूर्वमेव प्रदर्शितत्वात् । अन्यान्यपि च वर्ज्यान्याह वृद्धमनुः—

अग्न्याधेयं प्रतिष्ठां च यज्ञदानव्रतानि च ।
वेदव्रतवृषोत्सर्गचूडाकरणमेखलाः ॥
माङ्गल्यमभिषेकं च मलमासे विवर्जयेत् ।
बाले वा यदि वा वृद्धे शुक्रे चास्तमुपागते ॥
मलमास इवैतानि वर्जयेद्देवदर्शनम् ।

इति । 'अग्न्याधेयं प्रतिष्ठां च यज्ञदानव्रतानि च' इत्यत्र अनावश्यकत्वे सतीति विशेषो द्रष्टव्यः । तेन मलमासेऽपि प्रायश्चित्तभूतमग्न्याधेयमग्न्यनुगत्यनन्तरं कर्तव्यं न प्रतिषिध्यते । एवं प्रतिमादिनाशे पुनःप्रतिष्ठा न प्रतिषिध्यते । एवं प्रायश्चित्तभूतसंसर्गेष्ट्यादियज्ञो न प्रतिषिध्यते । यद्यत्प्रायश्चित्ते देयमिति प्रायश्चित्तदानं च 'ब्राह्मणं तु वसत्यै नापरुन्ध्यात्' इत्यादिव्रतं च । वृषोत्सर्गस्य नैकादशाहिकस्य प्रतिषेधः, षोडशश्राद्धादिवत्तस्यापि प्रेतोपकारकत्वात् । शुक्रास्तमयादावप्यनावश्यकत्वे सत्येव अग्न्याधेयादि प्रतिषिध्यते । मलमास इत्येवाभिधानात् । 'वर्जयेद्देवदर्शनम्' इति प्रतिषेधः प्रथमदर्शनविषय एवेत्याहुः । हारीतोपि—

……………वत्सरात्प्रथमाद्दते ।

सपिण्डीकरणादूर्ध्वं यत्किञ्चिच्छ्राद्धकं भवेत् ॥

इष्टं वाऽप्यथ वा पूर्तं तन्न कुर्यान्मलिम्लुचे ।

इति । सपिण्डीकरणादूर्ध्वं यत्प्रथमसंवत्सरे प्रतिमासं पुनः क्रियमाणं त्रैपुरुषिकं मासिकं श्राद्धं तन्मलिम्लुचेऽपि मासे कार्यमिति वक्तुं 'वत्सरात्प्रथमाद्दते' इत्युक्तम् । अस्मिन्नेव विषये वासिष्ठोपि—'संवत्सरमध्येऽधिमासो भवेत् मासिकार्थं दिनमेकं द्वार्द्धं नयेत्' इति । स्मृत्यन्तरेऽपि—

संवत्सरे विवृद्धेऽपि प्रतिमासं च मासिकम् ।

इति । सपिण्डीकरणात्प्रात् क्रियमाणमासिकविषये तु गभस्तिनोक्तम्—

एकोद्दिष्टं तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते ।

तत्कार्यं पूर्वमासे च कालाधिक्येऽपि धर्मतः ॥

इति । चशब्दादुत्तरमासेऽपि कार्यमिति गम्यते । तदेतत् सपिण्डीकरणात्प्राक्तनमासिकविषयं, एकोद्दिष्टरूपमासिकविषयत्वात् । यत्तु ऋश्यशृङ्गेणोक्तम्—

संवत्सरातिरेको यो मासश्चैव त्रयोदशः ।

असुराणां तु मासोसौ तस्माद्देवविगर्हितः ॥

तस्मात्त्रयोदशं श्राद्धं न कुर्यान्नोपतिष्ठते ।

इति, तत् सपिण्डीकरणात्प्राक्तनमासिकेषु सपिण्डीकरणात्प्राक्कथञ्चिदकृतेषु वचनबलात्सपिण्डीकरणादूर्ध्वमनुष्ठातव्येष्वे-

कोद्दिष्टेषु प्रतिमासं क्रियमाणेषु त्रयोदशे मासि प्राप्तमासिकश्राद्धविषयम्। विगर्हिते मासि प्रतिप्रसवमन्तरेण क्रियमाणं यतो नोपतिष्ठते अतस्त्रयोदशं श्राद्धं न कुर्यादित्यर्थः। अस्य वचनस्योक्ता विषयव्यवस्था देवस्वामिना दर्शिता—'यस्य तारतम्याच्छीघ्रतरमुपस्थिते पिण्डपितृयज्ञादौ देशकालानुरोधतो द्रव्यब्राह्मणाभावात् षोडशश्राद्धान्यकृत्वा संवत्सरादर्वाक् सपिण्डीकरणं कृतं, तस्य कृतेऽपि सपिण्डीकरणे—

मासिकं चोदकुम्भं च देयं तस्यापि वत्सरम्।

इति वाक्यात् यदा त्रयोदशं श्राद्धं प्राप्तमासिकाख्यं प्रेतश्राद्धं तदनेन ऋश्यशृङ्गवाक्येन निषिध्यते' इति ग्रन्थेन। एवंच त्रयोदशमासशालिनि संवत्सरे प्रमीतस्य मासिकानि श्राद्धानि त्रयोदश भवन्ति। यदा तु द्रव्यब्राह्मणाद्यलाभेन सपिण्डीकरणादूर्ध्वमेव मासिकश्राद्धानि क्रियन्ते तदा तानि द्वादश भवन्तीति मन्तव्यम्। एवञ्च यत्कैश्चिदुक्तं—संवत्सरविमोकान्तमानुमासिकानि कुर्वन्मलमासे नैव कुर्यादुत्तरे कुर्यादेव। संवत्सरान्ते सपिण्डीकरणं संवत्सरविमोकं च यथाकालं मासिकानि कुर्वन्नपि मलमासे नैव कुर्यादुत्तरे कुर्यादेवेति, तत्

'मासिकार्थं दिनमेकं वृद्धिं नयेत्'

संवत्सरे विवृद्धेऽपि प्रतिमासं च मासिकम्।
पूर्वमासे च कर्तव्यं कालाधिक्येऽपि धर्मतः॥

इति वचनद्वयादर्शननिबन्धनमित्युपेक्षणीयम् । मासिकश्राद्धाभिप्रायेण वृद्धवसिष्ठेनाप्युक्तं—

श्राद्धीयाहनि संप्राप्ते अधिमासो भवेद्यदि ।
श्राद्धद्वयं प्रकुर्वीत एवं कुर्वन्न मुह्यति ॥

इति । श्राद्धद्वयं प्रकुर्वीत अधिमासे तदुत्तरमासे च मासिकश्राद्धं प्रकुर्वीतेत्यर्थः । यत्तु ज्योतिःपराशरेणोक्तं—

उपाकर्म तथोत्सर्गः प्रसवाहोत्सवाष्टकाः ।
मासवृद्धौ पराः कार्याः वर्जयित्वा तु पैतृकम् ॥

इति, पराः कार्याः उत्तरे मासि कार्या इत्यर्थः । तत्र प्रसवाहोत्सवशब्देन जातेष्टिरेव गृह्यते । न पुनराभ्युदयिकं श्राद्धं जातकर्म च, तयोरपि ग्रहणे—

श्राद्धजातकनामानि ये च संस्कारसव्रताः ।
मलिम्लुचेऽपि कर्तव्या इष्टीः काम्याश्च वर्जयेत् ॥

इति स्मृतिविरोधापत्तेः । पैतृकशब्देन सांवत्सरिकरूपं गृह्यते न तु सामान्यम् ।

प्रतिसंवत्सरश्राद्धे नाधिमासं विवर्जयेत् ।
मलमासेऽपि कर्तव्यं श्राद्धं यत्प्रतिवत्सरम् ॥
प्रतिसंवत्सरं यच्च पूर्वमासे प्रकीर्तितम् ।

इत्यादिवचनेषु तस्यैव स्पष्टमभिधानात् । सर्वाण्येतानि वचनानि मलमासमृतस्य पुनर्मलमासप्राप्तौ द्रष्टव्यानि,

मासपक्षतिथिस्पृष्टे यो यस्मिन्म्रियतेऽहनि ।
प्रत्यब्दं तु तथाभूतं क्षयाहं तस्य तं विदुः ॥

इति स्मरणात् । एवञ्च मलमासमृतस्य मलमाससम्भवे सति मलमासस्पृष्ट एव मृताहः तथाभूतो न तु शुद्धमासस्पृष्ट इति मलमासगतक्षयाह एवाब्दिकश्राद्धं कर्तव्यम् । न तु शुद्धमासगतक्षयाहे, अतथाभूतत्वात् । मलमासासम्भवे तु गुणलोपन्यायात् मलमासास्पृष्टेऽपि क्षयाहे मृताहश्राद्धं कर्तव्यमेवेत्यवगन्तव्यम् । यत्तु सत्यव्रतेनोक्तं—

वर्षे वर्षे तु यच्छ्राद्धं मातापित्रोर्मृतेऽहनि ।
मलमासे न कर्तव्यं व्याघ्रस्य वचनं यथा ॥

इति, तत् अधिकमासादन्यत्र मृतस्य मृताहश्राद्धविषयम् । शुद्धे मासि मृतस्य शुद्धमासस्पृष्ट एव मृताहः तथाभूतो न तु मलमासस्पृष्टः, मलमासगतक्षयाहस्याविहितकालत्वात् । अत एव पैठीनसिः—

मलमासे मृतानां तु श्राद्धं यत्प्रतिवत्सरम् ।
मलमासे तु कर्तव्यं नान्येषां तु कथञ्चन ॥

इति । अन्येषां मलमासादन्यत्र मृतानामित्यर्थः । मलमासेऽपि कर्तव्यं तत्रैव विहितकालसद्भवादित्यभिप्रायः । भृगुरपि—

मलमासमृतानां तु श्राद्धं यत्प्रतिवत्सरम् ।
मलमासेऽपि तत्कार्यं नान्येषां तु कथञ्चन ॥

यत्तु वृद्धवासिष्ठेनोक्तं—

श्राद्धीयाहनि संप्राप्ते अधिमासो भवेद्यदि ।
श्राद्धद्वयं प्रकुर्वीत एवं कुर्वन्न मुह्यति ॥

इति, न तत् सांवत्सरिकश्राद्धविषयं, सांवत्सरिकश्राद्धे उत्तरे मासि मलमासस्पृष्टक्षयाहासम्भवात् । तेन मासिकश्राद्धविषयमेतद्वचनम् । एवञ्च मासिकश्राद्धं मलमासे उत्तरमासे च कार्यम् । सांवत्सरिकं त्वन्यतरमासे, तत्र मलमासमृताना माद्यमासे तदन्यमासमृतानामुत्तरे मासीत्यनुसन्धेयम् । 'नान्येषां तु कथञ्चन' इति योऽयं प्रतिषेधः स तु प्रथमाब्दिकव्यतिरिक्तविषयः, प्रथमाब्दिकस्य मलमासे वचनबलेन कर्तव्यत्वात् । तथाच हारीतः—

असङ्क्रान्तेतु कर्तव्यमाब्दिकं प्रथमं द्विजैः ।

इति । स्मृत्यन्तरेऽपि—

आब्दिकं प्रथमं यत् स्यात्तत्कुर्वीत मलिम्लुचे । इति.
त्रयोदशे च संप्राप्ते कुर्वीत पुनराब्दिकम् ॥

पुनराब्दिकं प्रथमाब्दिकं त्रयोदशे उत्तरे मासि संप्राप्ते कुर्वीतेत्यर्थः । लघुहारीतोऽपि—

प्रत्यब्दं द्वादशे मासि कार्या पिण्डक्रिया द्विजैः ।
क्वचित्त्रयोदशेऽपि स्यादाद्यं मुक्त्वा तु वत्सरम् ॥

पिण्डक्रिया मृताहश्राद्धक्रिया द्वादशे मासि परिपूर्णे सति

त्रयोदशे मासीति यावत् । क्वचिदाधिमासयुक्तसंवत्सरे त्रयोदशे मासि परिपूर्णे सति चतुर्दशे मास इति यावत् । आद्यमाब्दिकं त्वधिमासवत्यपि संवत्सरे द्वादशे मासि परिपूर्णे सति कार्यम्, त्रयोदशे मासि कार्यमित्यर्थः । यत्तु शातातपेनोक्तं—

एकसंज्ञौ यदा मासौ स्यातां संवत्सरे क्वचित् ।
तत्राद्ये पितृकार्याणि देवकार्याणि चोत्तरे ॥

इति, यच्च पैठीनसिना—

द्वौ मासावेकनामानौ स्यातां संवत्सरे यदि ।
पूर्वे तु पितृकार्याणि देवकार्याणि चापरे ॥

इति, तत् येषां पितृकार्याणां मलिम्लुचे विधिः, येषां च देवकार्याणामुत्तरे मासि विधिः, तथाविधपितृदेवकार्यपर मित्यवगन्तव्यम् । यद्यप्यसङ्क्रान्तिः सङ्क्रान्तिद्वययुतो वा संसर्पसंज्ञोऽहस्पातिसंज्ञश्च मासः कदाचिच्चैत्रादर्वाग्भवति, तथाऽपि तत्र न पूर्वोक्तविधिनिषेधवचनानि विधायकानि निषेधकानि वा, तेषां वचनानामाधिमासविषयत्वात् । न च संसर्पांहस्पातिसंज्ञकावधिमासौ

चैत्रादर्वाङ्नाधिमासः परतस्त्वधिको भवेत् ।
दृष्टा हि सर्वशास्त्रेषु तस्मिन्मूर्तिस्त्रयोदशी ॥

इति वचनेन चैत्रात्परत एवाधिमासस्मरणात् । तस्मिन्

चैत्रादुत्तरत्रैव त्रयोदशी मूर्तिरधिमासमूर्तिः सर्वगणितशास्त्रेषु यतो दृष्टेत्यर्थः । एवञ्च संसर्पांहस्पतिसंज्ञकौ न कर्मानर्हकालौ किंतु प्रशस्तावेवेति मन्तव्यम् ॥

इति स्मृतिचन्द्रिकायां अधिमासविषयाणि.

---

## अथान्यान्यपि मृताहविषयाणि कानिचिद्वचनानि लिख्यन्ते.

तत्र गर्गः—

विवाहादौ स्मृतस्सौरो यज्ञादौ सावनस्स्मृतः ।
आब्दिके पितृकार्येऽपि चान्द्रमासः प्रशस्यते ॥

यज्ञादौ माससंवत्सरसाध्ययज्ञव्रतप्रायश्चित्तक्रियादिष्वित्यर्थः । तत्र माससाध्ययज्ञाः 'दर्शपूर्णमासाभ्यां यजेत, मासं वैश्वदेवेन' इत्येवमादिवाक्यैः विहिताः । माससाध्यव्रतानि मासोपवासादीनि । माससाध्यप्रायश्चित्तक्रियास्तु—

गोष्ठे वसन् ब्रह्मचारी मासमेकं पयोव्रतः ।
गायत्रीजपनिरतो मुच्यते स प्रतिग्रहात् ॥

इत्यादिवाक्यविहिताः । संवत्सरसाध्या यज्ञाः गवामयनाद्यास्सत्रयागाः । संवत्सरसाध्यव्रतानि तु 'नाश्नीयात्' इत्यादिश्रुतिविहितानि । संवत्सरसाध्याः प्रायश्चित्तक्रियाः द्वादशवार्षिकाद्या द्रष्टव्याः । आब्दिके सांवत्सरिकश्राद्धे । पि-

तृकार्ये षाण्मासिकश्राद्धादौ । अपिशब्दान्माससंवत्सरसाध्ये यज्ञव्यतिरिक्ते सर्वस्मिन् देवकार्ये चान्द्रो मासः प्रशस्यत इत्युक्तम् । उक्तं च पितामहेन—

दैवे कर्मणि पित्र्ये च मासश्चान्द्रमसः स्मृतः ।

इति । कः पुनर्भेदश्चान्द्रसावनसौराणामित्यपेक्षिते ब्रह्मसिद्धान्त उक्तं—

दर्शाद्दर्शश्चान्द्रस्त्रिंशद्दिवसस्तु सावनो मासः ।
रविसङ्क्रान्तिकचिह्नस्सौरो मासो निगद्यते तज्ज्ञैः ॥

अस्यार्थः स्मृत्यन्तरे स्पष्टीकृतः—

चान्द्रः शुक्लादिदर्शान्तः सावनस्त्रिंशता दिनैः ।
एकराशौ रविर्यावत्कालं मासस्स भास्करः ॥

शुक्लप्रतिपदादिदर्शान्तश्चान्द्रो मास इत्येतद्दाक्षिणापथे द्रष्टव्यम् । उत्तरापथे तु कृष्णप्रतिपदादिपौर्णमास्यन्तः चान्द्रो मास इति वेदितव्यः, तत्र पौर्णमास्यन्ते चान्द्रमासव्यवहारात् । अत एव द्विविधचान्द्रमाससङ्ग्रहार्थं—

यस्मिन्मासे दिने यस्मिन्विपत्तिरुपजायते ।
पर्वान्तस्स तु विज्ञेयो मासो नैमित्तिकं प्रति ॥

इति गार्ग्येण पर्वान्त इति सामान्येनोक्तम् । नैमित्तिकं प्रतिसांवत्सरिकश्राद्धं प्रतीत्यर्थः । दिने तु विशेषः स्मृत्यन्तरे दर्शितः—

मासपक्षतिथिस्पृष्टे यो यस्मिन् म्रियतेऽहनि ।

प्रत्यब्दं तु तथाभूतं क्षयाहं तस्य तं विदुः ॥

इति । तिथिशब्देन चान्द्र एवाहोरात्र उच्यते । न तु सौरस्सावनो वाऽहोरात्रः, 'तदाद्यास्तिथयो द्वयोः' इत्यमरसिंहेन चान्द्राहोरात्रेष्वेव तिथिशब्दानुशासनात् । तदाद्याः प्रतिपदाद्याः तिथिशब्दाभिधेया इत्यर्थः । कः पुनः सावनसौरचान्द्राहोरात्राणां भेद इत्यपेक्षिते ब्रह्मसिद्धान्ते उक्तं—

सावनं स्यादहोरात्रमुदयादोदयाद्रवेः ।
सौरस्त्रिंशस्तु राश्यंशः तिथिस्संयोगमैन्दवम् ॥

मेषादिराशेः त्रिंशमंशं यावता कालेन रविर्भुङ्क्ते तावान् कालस्सौरः अहोरात्रः । प्रतिपदादितिथिपरिमितः कालश्चान्द्रः अहोरात्र इत्यर्थः । स च सावनाहोरात्रवत् सूर्योदयादारभ्य पुनस्सूर्योदयपर्यन्तो यदा भवति तदा सम्पूर्ण इति निगद्यते ।

प्रतिपत्प्रभृतयस्सर्वा उदयादोदयाद्रवेः ।
सम्पूर्णा इति विख्याताः ........... ॥

इति स्मरणात् । यदा त्वेवम्भूतो न भवति तदा खण्डतिथिरिति व्यतिरेकाद्गम्यते । प्रत्यब्दं मरणमासपक्षतिथिस्पृष्टकालाभावेऽपि तत्सदृशकाल एवाब्दिकश्राद्धकाल इति वक्तुं,

प्रत्यब्दं तु तथाभूतं क्षयाहं तस्य तं विदुः ।

इत्युक्तम् । तथाभूतं मरणमासपक्षतिथिस्पृष्टकालसदृशमित्यर्थः- यदा पुनर्दिनद्वयं तथाभूतं पूर्वदिने तु कर्मकाले तिथियोगः,

उत्तरादिने तु कर्मकाले तिथियोगाभावः तदा पूर्वमहः श्राद्धकाल इत्याह सुमन्तुः—

द्वियह्व्यापिनी चेत्स्यान्मृताहस्य तु या तिथिः ।
पूर्वस्यां निर्वपेत्पिण्डमित्याङ्गिरसभाषितम् ॥

पूर्वस्यां पूर्वदिनव्यापिन्यामित्यर्थः । अनेन पूर्वदिने चतुर्थप्रहरोत्तरार्धव्यतिरिक्तापराह्णे तिथियुक्तसमय एव सांवत्सरिकश्राद्धं कार्यमित्युक्तं भवति । यदा तु पूर्वदिने चतुर्थमहरोत्तरार्धव्यतिरिक्तेऽपराह्णे चरममुहूर्ते तिथियोगः तदा उत्तरदिने कुतपादारभ्य मुहूर्तपञ्चके मृततिथियुक्तेऽपि पूर्वदिने तिथियोगसमये श्राद्धमुपक्रम्य रात्रेः प्रागेव समापनीयं, स्वकालोपक्रान्ते कर्मणि कालान्तरेऽप्यविलम्बेन तत्समापनस्य विधिनाऽऽक्षिप्तत्वात् । एवञ्च यद्व्याघ्रपाद्वचनं—

विधिज्ञः श्रद्धयोपेतः सम्यक्पात्रनियोजकः ।
रात्रेरन्यत्र कुर्वाणः श्रेयः प्राप्नोत्यनुत्तमम् ॥

इति, तत् स्वकालोपक्रान्तश्राद्धाविषयमित्यवगन्तव्यम् । तदेतत्सर्वमभिसन्धायापरार्केणाप्युक्तम्— 'सांवत्सरिकादिश्राद्धं तिथियुक्तेऽपराह्णकाले यत्रकुत्रचित्कार्यम् । सा चेत्सायाह्नमात्रव्यापिनी स्यात् तदा सायाह्न एव व्याघ्रपादवचनबलेन श्राद्धं कार्यम् । न पुनरुदयव्यापिन्यामपराह्णपर्यन्तायाम्' इति । यदा तु पूर्वदिने कर्मकालासंस्पर्शिन्यप्यस्तगामिनी तिथिः उत्तरदिने कर्मकालसंस्पर्शिन्यनस्तगामिनी तदाऽपि पूर्वमेवाहः श्राद्ध-

कालः 'श्राद्धादावस्तगामिनी' इति स्मरणात् । अस्तगामिनी तिथिः सांवत्सरिकश्राद्धादौ ग्राह्येत्यर्थः । न च पूर्ववदत्रापि तिथियुक्तसमये श्राद्धमुपक्रम्य रात्रेः प्राक्समापनं युक्तं, चतुर्थप्रहरोत्तरार्धस्य श्राद्धकालत्वाभावात् । तथाचोक्तं मत्स्यपुराणे—

ऊर्ध्वं मुहूर्तात्कुतपाद्यन्मुहूर्तचतुष्टयम् ।
मुहूर्तपञ्चकं ह्येतत् स्वधाभवनमिष्यते ॥

इति । कात्यायनेनाप्युक्तं—

वासरस्य तृतीयेंऽशे नातिसन्ध्यासमीपतः ।

इति । न चात्र चतुर्थप्रहरोत्तरार्धव्यतिरिक्तापराह्णकाले तिथियोगासम्भवेन तिथियुक्तापराह्णकालाभावादननुष्ठानमेव श्राद्धस्येति वाच्यम् । यदाह नारदीयपुराणे वासिष्ठः—

पारणे मरणे नृणां तिथिस्तात्कालिकी स्मृता ।
पित्र्येऽस्तमयवेलायां स्पृष्टा पूर्णा निगद्यते ॥

इति । अस्तमयवेळायां स्पृष्टा मृततिथिस्तत्तिथौ कर्तव्ये पित्र्ये आब्दिकादिश्राद्धे पूर्णा निगद्यत इत्यर्थः । अस्तमयवेळायां स्पृष्टेत्यनेनास्तमयसमये कलामात्रसद्भावेऽपि मृततिथेः पूर्णत्वमुक्तमिति मन्तव्यम् । यत्तु स्मृत्यन्तरं—

दिनान्ते पञ्चनाड्यस्तु पुण्याः प्रोक्ता मनीषिभिः ।
उदये च तथा पित्र्ये दैवे चैव च कर्मणि ॥

इति, पित्र्ये कर्मणि कालत्वेन चोदिततिथिसम्बन्धिन्यो दि-

नान्ते वर्तमानाः पञ्च नाड्यः पुण्याः ततः प्राक्तननाडीनां तिथियोगजन्यपुण्यापादिकाः न तु ततो न्यूनाः। दैवे कर्मणि कालत्वेन चोदिततिथिसम्बन्धिन्य उदये सति वर्तमानाः पञ्च नाड्य पुण्या तत उपरितननाडीनामपि तिथियोगजन्यपु-ण्यापादिकाः न ततोन्यूना इति तस्यार्थः। तदेतत्—

प्रतिपद्धनलाभाय द्वितीया द्विपदप्रदा।

इत्यादिना—

श्राद्धं कुर्वन्नमावास्यां यत्नेन पुरुषश्शुचिः।
सर्वान्कामानवाप्नोति... ................ ॥

इत्यन्तेन काम्यश्राद्धकालतया विहितकृष्णपक्षप्रतिपदादिति-थिद्वैधविषयं, न तु श्राद्धान्तरकालतया विहिततिथिद्वैधविषयं,

पित्र्यं श्राद्धं कृष्णपक्षे दिनेऽस्तमययोगिनि।

इति प्रस्तुत्य तत्रैव विशेषपरत्वाभिधानादस्य वचनस्य। तेन पूर्वोक्तवसिष्ठवचनेन सह न कश्चिद्विरोधः। भविष्यत्पुराणेऽपि—

व्रतोपवासनियमे घटिकैका यदा भवेत्।
सा तिथिस्सकला ज्ञेया पित्र्ये चैवापराह्णिकी ॥

इति। संध्यासमीपस्थापराह्णके घटिकैका यदा भवेत् सा तिथिः पित्र्यर्थे सकला ज्ञेयेत्यर्थः। एवंचैवंविधविषये—

प्रारभ्य कुतपे श्राद्धं कुर्यादारौहिणं बुधः।

इति वचनार्थ एव कार्यः, तदतिक्रमे कारणाभावात्। ए-कोद्दिष्टरूपमृताहश्राद्धे तु नवमुहूर्तादुपरितनमुहूर्ते मृतदिनासम्भ

वेऽपि मध्याह्नव्यापित्वात् 'सा तिथिस्सकला ज्ञेया' इति न्यायेन न कुतपे प्रारभ्य श्राद्धं रौहिणे समापनीयम्। 'एकोद्दिष्टं तु मध्याह्ने' इति स्मरणात्। यदा तु पूर्वदिने अस्तमयात्पूर्वक्षणे तिथियोगः उत्तरदिने त्वस्तमयादुपरि त्रिमुहूर्तयुक्ता तदा उत्तरमाह श्राद्धकालं सुमन्तुः—

उदिते दैवतं भानौ पित्र्यं चास्तमिते रवौ।
द्विमुहूर्ता त्रिरह्नो या सा तिथिर्हव्यकव्ययोः॥

अस्यार्थः—उदिते भानौ सत्यहस्सम्बन्धिनी दैवकर्माङ्गभूता तिथिर्या द्विमुहूर्ता भवति सा संपूर्णतिथिवत्कृत्स्नस्याह्नो हव्यदानकालतामापादयति। तेन तस्मिन्नहनि दैवतं कर्म कुर्यात्। पितृकर्माङ्गभूता तिथिरस्तमिते रवौ सति या त्रिमुहूर्तमनुवर्तते सा कव्यदानकालतां स्वसम्बद्धस्याह्न आपादयति। तेन तत्सम्बद्धेऽह्नि पैतृकं पितृसम्बन्धि सांवत्सरिकादि श्राद्धं कुर्यादिति। तेनोत्तरदिनेऽस्तमयादुपरि त्रिमुहूर्तानुवृत्त्यभावे अस्तगामिनी पूर्वतिथिरेव ग्राह्येत्युक्तं भवति। एवञ्च यदुक्तं नारदीयपुराणे—

दर्शं च पूर्णमासं च पितुस्सांवत्सरं दिनम्।
पूर्वविद्धमकुर्वाणो नरकं प्रतिपद्यते॥

इति, तत् उत्तरदिने अस्तमयादुपरि मुहूर्तत्रयानुवृत्त्यभावे द्रष्टव्यम्। यदा तु पूर्वेद्युरस्तगामिनी तिथिर्न भवति उत्तरेद्युरप्यस्तमिते रवौ त्रिमुहूर्तव्यापिनी न भवति किं त्वस्तगा-

मिनी भवति तदाऽपि सैव ग्राह्या 'श्राद्धादावस्तगामिनी' इति स्मरणात्। यदा तु दिनद्वयेऽप्यस्तगामिनी तिथिर्न भवति तत उत्तरेद्युरेवास्तगामित्वरूपगुणाभावेऽपि गुणलोपन्यायेन सांवत्सरिकश्राद्धं कर्तव्यं, तिथिपुक्तापराह्णकालसम्भवात्। अकरणे विहितातिक्रमेण प्रत्यवायापत्तेश्च ॥

इति स्मृतिचन्द्रिकायां मृताहविषयाणि.

---

अथ मासपक्षतिथिस्पृष्टमृताहापरिज्ञानविषयाणि.

तत्र बृहस्पतिः—

न ज्ञायते मृताहश्चेत् प्रमीते प्रोषिते सति।
मासश्चेत्प्रतिविज्ञातः तद्दर्शस्स्यान्मृतेऽहनि॥
यदा मासो न विज्ञातो विज्ञातं दिनमेव तु।
तदा मार्गशिरे मासि माघे वा तद्दिनं भवेत्॥
दिनमासौ न विज्ञातौ मरणस्य यदा पुनः।
प्रस्थानदिनमासौ तु ग्राह्यौ पूर्वोक्तया दिशा॥

दिनशब्देन मृततिथिरेवाधिगन्तव्या। प्रोषिते पित्रा ऽगल्भस्वजनसमीपे प्रमीते सति कालविशेषज्ञानाद्यभावेन मृताहो यदि न विज्ञायेत मासमात्रमेव तु ज्ञातं तदा मृताहे यत्कार्यं तत्सर्वं मृतमासस्यामावास्यायां कर्तव्यमिति प्रथमश्लोकस्यार्थः। 'तद्दर्शस्स्यान्मृतेऽहनि' इत्यत्र दर्शग्रहणं तन्मा-

ससम्बन्धिन्या एकादश्या अपि प्रदर्शनार्थम् । अत एव मरीचिः—

श्राद्धविघ्ने समुत्पन्ने अविज्ञाते मृतेऽहनि ।
एकादश्यां तु कर्तव्यं कृष्णपक्षे विशेषतः ॥

पूर्वोक्तया दिशेत्यस्यायमर्थः—यदि प्रस्थानमासमात्रं ज्ञातं तदा तन्मासस्यामावास्यायां सांवत्सरिकश्राद्धं कार्यम् । यदि प्रस्थानतिथिपक्षावेव ज्ञातौ तदामार्गशीर्षे माघे वा मासि ज्ञातपक्षतिथिस्पृष्टदिने कार्यम् । यदा तु प्रस्थानादिनमासाद्यपि न ज्ञातं तदा मरणवार्ताश्रवणमासपक्षतिथिस्पृष्टदिने कार्यम् । 'अपरिज्ञाते अमावास्यायां श्रवणदिने वा' इति प्रचेतसोक्तत्वात् । यदा तु मरणवार्ताश्रवणस्याप्यभावः तदा त्वाह जातूकर्ण्यः—

पितरि प्रोषिते यस्य न वार्ता नैव चागतिः ।
ऊर्ध्वं पञ्चदशाद्वर्षात्कृत्वा तत्प्रतिरूपकम् ॥
कुर्यात्तस्य च संस्कारं यथोक्तविधिना ततः ।
तदादीन्येव सर्वाणि शेषकार्याणि सञ्चरेत् ॥

इति । सर्वाणीति वचनान्मृताहकार्यमपि दहनमासपक्षतिथिस्पृष्टदिने कर्तव्यमिति गम्यते ॥

इति स्मृतिचन्द्रिकायां मासपक्षतिथिस्पृष्टमृताहापरिज्ञानविषयाणि

---

## अथ काम्यश्राद्धकालाः.

तत्र विष्णुः—

सङ्क्रान्तिविषुवे चैव विशेषेणायनद्वयम् ।
व्यतीपातोऽथ जन्मर्क्षं चन्द्रसूर्यग्रहस्तथा ॥
इत्येतान् श्राद्धकालांस्तु काम्यानाह प्रजापतिः ।
श्राद्धमेतेषु यद्दत्तं तदानन्त्याय कल्पते ॥

इति । श्राद्धकालान् काम्यानाहेत्यनेन सङ्क्रान्त्यादिकाललक्षणो गुणः काम्यफलसाधको न पुनः श्राद्धलक्षणं कर्मेति दर्शयति । श्राद्धलक्षणकर्मणस्तु काम्यफलं 'पितॄन् श्राद्धेन तर्पयेत्' इति शास्त्रेण दर्शितम् । यथा जातेष्टिः पित्रा क्रियमाणा पुत्रस्य पूतत्वादिकं फलं निष्पादयतीति 'पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति' इति शास्त्रप्रामाण्यादाश्रितं, तथा पुत्रादिनाऽपि क्रियमाणं श्राद्धं तत्पित्रादीनां तृप्तिरूपं फलं साधयतीति 'पितॄंच्छ्राद्धेन तर्पयेत्' इति शास्त्रप्रामाण्यादाश्रयणीयम् । सङ्क्रान्त्यादिकाललक्षणगुणसाध्यं फलमत्र श्राद्धसाध्यपितृतृप्त्याश्रितातिशयाधिक्यरूपमिति रात्रिसत्रन्यायेनावगन्तव्यम् ।

श्राद्धमेतेषु यद्दत्तं तदानन्त्याय कल्पते ।

इति वाक्यशेषे श्राद्धसाध्यपितृतृप्तेरानन्त्यश्रवणात् । आनन्त्यशब्देन वस्तुत आनन्त्यासम्भवात् तृप्त्याश्रितातिशयाधिक्यमुच्यते । एवंचैतदुक्तं भवति—सङ्क्रान्त्यादौ पितृतृप्त्य-

तिशयकाले पुत्रादिना श्राद्धं कार्यमिति । सङ्क्रान्तिशब्दो गोबलीवर्दन्यायेनात्र विषुवद्वयायनद्वयव्यतिरिक्तसूर्यसङ्क्रान्तिषु वर्तते । काः पुनर्विषुवादयस्सङ्क्रान्तय इत्यपेक्षिते ज्योतिर्वासिष्ठः—

मृगकर्कटसङ्क्रान्ती द्वे तूदग्दक्षिणायने ।
विषुवे च तुलामेषे तयोर्मध्ये ततः पराः ॥

सूर्यसङ्क्रान्तय इति शेषः । तयोरयनद्वयविषुवद्वययोर्मध्य इत्यर्थः । तत्र दक्षिणायनतदूर्ध्वविषुवयोर्मध्ये द्वे सूर्यसङ्क्रान्ती विषुवतदूर्ध्वोत्तरायणयोर्मध्ये द्वे, उत्तरायणविषुवयोर्मध्ये द्वे, विषुवतदूर्ध्वदक्षिणायनोर्मध्ये द्वे, इत्येवमष्टौ सूर्यसङ्क्रान्तयो वेदितव्याः । तासु विषुवायनेभ्यः उपरिभवास्तु सङ्क्रान्त्यन्तरेणाव्यवहितास्सङ्क्रान्तयो विष्णुपदसंज्ञिकाः ज्ञेयाः, ताभ्य उपरिभवास्तु षडशीतिमुखसंज्ञिका ज्ञेयाः । तथाच स एव—

वृषवृश्चिककुम्भेषु सिंहे चैव यदा रविः ।
एतद्विष्णुपदं नाम विषुवादधिकं फलम् ॥
कन्यायां मिथुने मीने धनुष्यपि रवेर्गतिः ।
षडशीतिमुखाः प्रोक्ता षडशीतिगुणाः फलैः ॥

इति । प्रथमश्लोकस्यैवं योजना—वृषवृश्चिककुम्भसिंहेषु यदा रविस्सङ्क्रमति तदा तत्सङ्क्रमणचतुष्टयं विष्णुपदसंज्ञकमिति । एवं निरूपितविषुवायनविष्णुपदषडशीतिमुखनामकाः कालाः यद्यपि निमेषादपि स्वल्पतराः, तथाऽपि तत्सम्बद्धपूर्वापरकालानुगृहीतास्सन्तो दीर्घकालसाध्यकर्मानुष्ठानाय विधीयन्त इति

नायोग्यत्वपराहता इति मन्तव्यम् । तथाचोक्तं तेनैव—

सङ्क्रान्तिसमयस्सूक्ष्मः दुर्ज्ञेयः पिशितेक्षणैः ।
तद्योगाच्चाप्यधश्चोर्ध्वं त्रिंशन्नाड्यः पवित्रिताः ॥

इति । एवञ्च सङ्क्रान्तौ श्राद्धं कुर्यादित्यादिवाक्येषु सङ्क्रान्तिशब्दाभिधेयसूक्ष्मकालयोगात्पवित्रितकाले श्राद्धादिकं कर्तव्यमित्यर्थादवगम्यते । यत्तु ज्योतिर्बृहस्पतिनोक्तं—

भविष्यत्ययने पुण्याः त्रिंशदेव तु दक्षिणे ।
अतीत उत्तरे नाड्य इति प्राहुर्मनीषिणः ॥

इति, तस्यायमर्थः—त्रिंशदेव तु नाडिकाः पुण्याधिक्यापादिकाः पवित्रतरा इति यावत् । एवञ्च—

तद्योगाच्चाप्यधश्चोर्ध्वं त्रिंशन्नाड्यः पवित्रिताः ।

इत्यनेन सह न कश्चिद्विरोधः । 'अतीत उत्तरे नाड्यः' इत्यत्रानुषङ्गन्यायेन त्रिंशदिति यद्यपि सम्बन्धः प्रतिभाति, तथाऽपि वचनान्तराविरोधाय विंशतिरित्यध्याहृत्य तेन सम्बन्धः कार्यः । अन्यथा—

त्रिंशत्कर्कटके नाड्यो मकरे विंशतिस्स्मृताः ।
वर्तमाने तुलामेषे नाड्यस्तूभयतो दश ॥

इति वसिष्ठवचनविरोधात् । कर्कटके अनागते त्रिंशत् मकरे अतीते विंशतिर्नाड्यः पवित्रतमा इत्यर्थः ।

अतीतानागते पुण्ये द्वे तूदग्दक्षिणायने ।

इति तेनैवाभिधानात् । उभयतो दशेयत्रापि पवित्रतमा इति शेषो द्रष्टव्यः । यद्प्यनन्तरं तेनैवोक्तं—

उपरागे च तत्कालमतीते चोत्तरायणे ।

इति, तत्र चशब्दादनागतेऽप्युत्तरायणे त्रिंशतिर्नाड्यः पुण्या इति सूचयितुं पुनरतीते चोत्तरायणे इत्युक्तं, न पुनरुत्तरायणे अतीत एव विंशतिर्नाड्यः पुण्या इति वक्तुमिति नपूर्वोक्तेन विरोधः । एवञ्च दक्षिणायने सङ्क्रान्तिसमयेऽनागते त्रिंशन्नाड्यः पुण्याधिक्यापादिकाः, उत्तरायणे सङ्क्रान्तिसमये उभयतो विंशतिर्नाड्यश्च पुण्याधिक्यापादिकाः, विषुवद्वये तु सङ्क्रान्तिसमये उभयतो दश नाड्यः पुण्याधिक्यापादिका इत्यनुसन्धेयम् । यत्तु स्मृत्यर्थसारेऽभिहितं 'उत्तरायणे पश्चाच्चत्वारिंशद्घटिकाः पुण्याः पूर्वं च चत्वारिंशद्घटिकाः पुण्या आहुः' इति, तस्य मूलं चिन्त्यं, प्रसिद्धस्मृतिसमुदाये तस्य मूलभूतवचनादर्शनात् । यत्तु मरीचिनोक्तं—

नाड्यष्षोडश पूर्वेण सङ्क्रान्तेरपरेण च ।
राहोर्दर्शनमात्रेण पुण्यकालः प्रकीर्तितः ॥

इति, तत्र सङ्क्रान्तेरिति यद्यपि सङ्क्रान्तिसामान्यस्यावधित्वं प्रतिभाति, तथाऽपि विषुवद्वयायनद्वयव्यतिरिक्तविषयमिति सामान्यविशेषन्यायेनावगन्तव्यम् । अत एव वासिष्ठेनोक्तं—

पुण्याख्या विष्णुपद्यां च प्राक्पश्चादपि षोडश ॥

इति । चशब्दात्—

षडशीतिमुखायां च प्राक्पश्चादपि षोडश ॥

इति गम्यते । पुण्याख्याः पुण्यतराख्या इत्यर्थः । यत्तु गर्गेणोक्तं—

भविष्यत्ययने विष्णौ वर्तमाने तथा विषौ ।
षडशीतिमुखे चैव अतीते चोत्तरायणे ॥

इति, विषौ वर्तमाने मध्ये इत्यर्थः । तत् फलभूयस्त्वाभिप्रायेण न तु नियमार्थमिति न पूर्वोक्तविरोधः । अतस्स्मृत्यन्तरं—

मध्ये विषुवति दानं विष्णुपदे दक्षिणायने चादौ ।
षडशीतिमुखेऽतीते उदगयने चापि भूरि फलम् ॥

एवं पुण्यत्वेन पुण्यतमत्वेन चोक्तनाडीष्वपि सङ्क्रान्तितदभिधेयसूक्ष्मसमयसन्निधितारतम्यानुसारेण प्रथमद्वितीयतृतीयादिनाडीनां फलातिशयहेतुत्वे तारतम्यमवसेयम् । अत एव वसिष्ठेन—

यायास्संनिहिता नाड्यः तास्ताः पुण्यतमास्स्मृताः ।

इत्युक्तम् । यत्पुनस्तेनैवोक्तं—

अह्नि सङ्क्रमणे पुण्यमहः कृत्स्नं प्रकीर्तितम् ।

इति, तत् अत्यन्तविप्रकृष्टनाडीनां पुण्यत्वं नास्तीति व्यतिरेकमात्रपरमिति मन्तव्यम् ।

तद्योगाच्चाप्यधश्चोर्ध्वं त्रिंशन्नाड्यः पवित्रिताः ।

इत्यस्य क्वचिद्विषयेऽपवादमाह स एव—

रात्रौ सङ्क्रमणे पुण्यं दिनार्धं स्नानदानयोः ।

इति । व्यवहितमपि दिनार्धमेव पुण्यं न तु संनिहिता रात्रिगता-नाड्यः पुण्या इत्यर्थः । एतच्चायनव्यतिरिक्तविषयम् । यदाह स एव—

अर्धरात्रादधस्तस्मिन्मध्याह्नस्योपरि क्रिया ।
ऊर्ध्वे सङ्क्रमणे चोर्ध्वमुदयात्प्रहरद्वयम् ॥
पूर्णे चेदर्धरात्रे तु यदा संक्रमणं रवेः ।
प्राहुर्दिनद्वयं पुण्यं मुक्त्वा मकरकर्कटौ ॥

इति, एतत्तु विष्णुपदषडशीतिमुखव्यतिरिक्तविषुवमात्रविषयं,

विष्णुपद्यां धनुर्मीननृयुकन्यासु वै सदा ।
पूर्वोत्तरगते रात्रौ भानोस्संक्रमणं भवेत् ॥
पूर्वाह्णे पञ्च नाड्यश्च पुण्याः प्रोक्ता मनीषिभिः ।
अपराह्णे तु पञ्चैव श्रौते स्मार्ते च कर्मणि ॥

इति विष्णुपदषडशीतिमुखेषु तेनैवान्यथाभिधानात् । नृयुक् मिथुनराशिः । पूर्वोत्तरगते पूर्वोत्तरभागस्थे काले । अर्धरात्रे सङ्क्रमणे दिनद्वये पञ्च नाड्यः पुण्या इत्यूह्यम्, प्रत्यासत्तिविशेषाभावलक्षणन्यायसाम्यात् । अयनद्वये तु दिवा रात्रौ वा न संनिहितनाडीनां सति सम्भवे परित्यागः । ननु—

रात्रौ स्नानं न कुर्वीत दानं चैव विशेषतः ।

इत्यादिवचनेन रात्रौ स्नानदानादिनिषेधाद्रात्रावयनेऽपि सान्निहितानां नाडीनां परित्यागः कार्यः, वक्तव्यो वा विशेषः, उच्यते—

राहुदर्शनसङ्क्रान्तिविवाहात्ययवृद्धिषु ।
स्नानदानादिकं कुर्यान्निशि काम्यव्रतेषु च ॥

इतिवचनेन सङ्क्रान्त्यादावपि प्रतिप्रसवस्तावदस्ति । न चायं प्रतिप्रसवः सङ्क्रान्तिषु युज्यते, अयनद्वयव्यतिरिक्तसङ्क्रान्तौ रात्रौ गतायां दिन एव सङ्क्रान्तिकृत्याभिधायकवचनाविरोधापत्तेः । तेनायनद्वयविषय एवायं प्रतिप्रसव इति कल्पनीयम् । तस्मादयनद्वये रात्रावपि न संनिहितनाडीनां परित्यागः ॥

प्रकृतमुच्यते—सङ्क्रान्त्यादयः काम्याः श्राद्धकालाः सति सम्भवे कुतपादिश्राद्धकालेन सह समुच्चीयन्ते, सति सम्भवे सर्वेषां श्राद्धाङ्गानामुपसंहारस्यावश्यकत्वात् । असम्भवे तु चन्द्रसूर्यग्रहणवदसमुच्चयेऽपि न फलसिद्धिविरोधः, असंभवादिना अङ्गाननुष्ठानस्य विध्यनुमतत्वात् । व्यतीपातयोगस्तु कुतपादिकालयोगी ग्राह्यः, सम्भवात् । जन्मनक्षत्रं कुतपादिकालयोगि सति सम्भवे ग्राह्यम् । कृष्णपक्षे तु अस्तमयव्यापिनक्षत्रयुक्तदिनं ग्राह्यम् । नक्षत्रं तु श्राद्धार्थे यदा दिनद्वयव्यापि शुक्लपक्ष औदयिकं 'यत्पूर्वाह्णव्यापि तद्ग्राह्यम्' इति देवस्वामिनोक्तत्वात् । चन्द्रसूर्यग्रहे तु ग्रहणकाल एव श्राद्धं कर्तव्यं,

त्रिदशाः स्पर्शसमये तृप्यन्ति पितरस्तथा ।
मनुष्या मध्यकाले तु मोक्षकाले तु राक्षसाः ॥

देवकार्ये पितृकार्ये च ग्रहणकालविधानात् । मार्कण्डेयपुराणेऽपि काम्यश्राद्धकाला दर्शिताः—

कृत्तिकासु पितॄनर्चन् स्वर्गमाप्नोति मानवः ।
अपत्यकामो रोहिण्यां सौम्ये चौजस्वितां लभेत् ॥
आर्द्रायां शौर्यमाप्नोति क्षेत्रादि तु पुनर्वसौ ।
पुष्टिं पुष्ये पितॄनर्चन् आश्लेषासु वरान् सुतान् ।
मघासु स्वजनश्रैष्ठ्यं सौभाग्यं फल्गुनीषु च ।
प्रदानशीलो भवति सापत्यश्चोत्तरासु च ॥
प्राप्नोति श्रेष्ठतां सत्सु हस्ते श्राद्धप्रदो नरः ॥
रूपवन्ति च चित्रासु तथाऽपत्यान्यवाप्नुयात् ।
वाणिज्यलाभदा स्वाती विशाखा पुत्रकामदा ॥
कुर्वतां चानुराधाश्च दद्युश्चक्रप्रवर्तनम् ।
ज्येष्ठा स्वर्गाधिपत्यं च मूले चारोग्यमुत्तमम् ।
अषाढासु श्रियः प्राप्तिमुत्तरासु विशोकताम् ॥
श्रवणे च शुभान् लोकान् धनिष्ठासु धनं महत् ।
वेदवित्स्यादभिजिति भिषक्सिद्धिं तु वारुणे ॥
अजाविकं प्रोष्ठपदे विन्दते गास्तदुत्तरे ।
रेवतीषु तथा कुप्यं अश्विनीषु तुरङ्गमान् ॥
श्राद्धं कुर्वन् तथाऽऽप्नोति भरणीष्वायुरुत्तमम् ।
तस्मात्काम्यानि कुर्वीत ऋक्षेष्वेतेषु तत्त्ववित् ॥

इति । सौम्यं सोमदेवताकं मृगशीर्षमिति यावत् । ओजः आत्मशक्त्यतिशयः । शौर्यं निर्भयत्वेन वर्तनम् । क्षेत्रादि च क्षेत्रफलं चेत्यर्थः । पुष्टिः शरीरपुष्टिः । वरान् सुतान् गुणो-

पेतान् सुतान्। सौभाग्यं जनप्रियताम्। सापत्यश्च अपत्य-वान् भवतीत्यर्थः। सत्सु सत्पुरुषेषु। रूपवन्ति सुरूपाणि। चक्रप्रवर्तनं प्रतिहतिराहित्येन आज्ञायाः प्रवर्तनम्। अभिजित् अभिजित्संज्ञकं नक्षत्रम्। तत्तु वेदे निरूपितं—'अभिजिन्नाम नक्षत्रमुपरिष्टादषाढानामधस्ताच्छ्रोणायै' इति। भिषक्सिद्धिः औषधफलावाप्तिः। वारुणं शतभिषङ्नक्षत्रम्। कुप्यं त्रपुसीसादिद्रव्यम्। ऋक्षेष्वेतेषु पूर्वोक्तेषु नक्षत्रेषु। तत्त्ववित् सम्यक्छ्राद्धविधानवित्। विष्णुधर्मोत्तरेऽपि—

अरोग्यमथ सौभाग्यं समरे विजयं तथा।
सर्वकामांस्तथा विद्यां धनं जीवितमेव च॥
आदित्यादिदिनेष्वेवं श्राद्धं कुर्वन् सदा नरः।
क्रमेणैतान् समाप्नोति नात्र कार्या विचारणा॥

इति। एतानारोग्यादीनात्यादिदिनक्रमेण तत्तद्दिनश्राद्धं कुर्वन्नरः प्राप्नोतीत्यर्थः। एतदुक्तं भवति—आदित्यवारे श्राद्धमारोग्यकामः कुर्यात्, सोमवारे सौभाग्यकामः, भौमवारे सङ्ग्रामविजयकामः, बुधवारे सर्वकामः, बृहस्पतिवारे विद्याकामः, शुक्रवारे धनकामः, शनिवारे जीवितकाम इति। याज्ञवल्क्येनापि काम्यश्राद्धकाला दर्शिताः—

कन्यां कन्यावेदिनश्च पशूंश्चैव सुतानपि।
द्यूतं कृषिं च वाणिज्यं द्विशफैकशफांस्तथा॥
ब्रह्मवर्चस्विनः पुत्रान् स्वर्णरौप्ये सकुप्यके।

ज्ञातिश्रैष्ठ्यं सर्वकामानाप्नोति श्राद्धदस्सदा ॥
प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्दशीम् ।

इति । कन्या रूपलक्षणशीलवती, प्रायेण तादृश्या एवातिकाम्यत्वात् । कन्यावेदिनो जामातरः श्रुतवन्तो रोगरहिताः । पशून् शीललक्षणसम्पन्नान्, एवम्भूतानामेव काम्यत्वात् । काम्यं तु कृष्णपक्षे प्रतिपादि श्राद्धं कन्याकामः कुर्यात्, द्वितीयायां वरकामः, तृतीयायां पशुकामः, चतुर्थ्यां पुत्रकामः, पञ्चम्यां तु विजयकामः, षष्ठ्यां कृषिफलकामः, सप्तम्यां वाणिज्यलाभकामः, अष्टम्यां द्विशफगवादिपशुकामः, नवम्यामेकशफाश्वादिपशुकामः, दशम्यां वृत्ताध्ययनबहुलपुत्रकामः, एकादश्यां स्वर्णरूप्यकामः, द्वादश्यां त्रपुसीसादिद्रव्यकामः, त्रयोदश्यां ज्ञातिश्रैष्ठ्यकामः, अमावास्यायां योगसिद्ध्यधिकरणोक्तन्यायानुसारेण क्रमेण सर्वकाम इति । अत्र—

कृष्णपक्षेऽपराह्णे तु रौहिणं तु न लङ्घयेत् ।

इति स्मृत्यन्तरोक्तो विशेषो द्रष्टव्यः । रौहिणः अह्नो नवमो मुहूर्तः । एवञ्च कुतपादिघटिकात्रयसंयुक्तायां प्रतिपदादितिथौ काम्यश्राद्धं कार्यं, न तु कुतपाद्यसंयुक्तायामिति मन्तव्यम् । प्रतिपदादितिथिद्वैधे तु पूर्वस्यामुत्तरस्यां वा कुतपादिघटिकात्रययुक्तायामेव श्राद्धं कार्यम् । तथाचोक्तं देवस्वामिना—'यस्मिन् काले यद्विहितं तत्कर्म उपक्रमोपसंहारयुक्तं तस्मिन् काले तस्यां तिथौ यस्मिन् अहनि संभावयितुं शक्यते तदुत्तरं

पूर्वं वा ग्राह्यम्' इति । उभयदिनेऽपि यदि सम्भावयितुं शक्यते तदा तु स्वतः पूर्वदिनं ग्राह्यं, कथंचित्तत्रानुष्ठानाभावे उत्तरादिनं ग्राह्यम् । उपक्रमोपसंहारयोरुभयोरुभयत्रासम्भवविषये तु यद्देवस्वामिनोक्तं—'यस्मिन् समाप्तिः तस्यां तिथौ तस्मिन् काले सम्भवति तस्मिन्नहन्युपक्रम्य समापनीयम्' इति । समाप्तिः उपसंहारः । तस्मिन्नहन्यस्वकालेऽप्युपक्रम्य स्वकाले समापनीयमित्यर्थः । तदेतदयुक्तं—कालस्याप्यधिकारिविशेषणत्वेन स्वकालेऽनागते कर्मण्यधिकाराभावादस्वकाले कर्मोपक्रमस्यान्याय्यत्वात् । तस्मादस्मिन्विषये स्वकाले उपक्रम्यास्वकाले समापनीयम् । स्वकालोपक्रान्ते कर्मणि कालान्तरेऽपि समापनस्य विधिनाऽऽक्षिप्तत्वात् । यदा तु स्वकालेऽप्युपक्रमो न सम्भवति तदा स्मृत्यन्तरोक्तं द्रष्टव्यम् ।

पित्र्यं श्राद्धं कृष्णपक्षे दिनेऽस्तमययोगिनि ।
शुक्ले तूदयसंयुक्ते दानं यज्ञादिकं तथा ॥

इति । कृष्णपक्षे 'प्रतिपद्धनलाभाय' इत्यादिना यद्विहितं श्राद्धं तदस्तमययोगिप्रतिपदादितिथ्यन्विते दिने कर्तव्यम् । शुक्लपक्षे तिथिविशेषोल्लेखेन विहितं दानं देवकार्यादिकं उदययोगितिथिविशेषान्वितदिने कर्तव्यमित्यर्थः । अस्तमययोगित्वे उदययोगित्वे च विशेषस्तत्रैव—

दिनान्ते पञ्च नाड्यस्तु पुण्याः प्रोक्ता मनीषिभिः ।
उदये च तथा पित्र्ये दैवे चैव च कर्मणि ॥

इति। पित्र्ये कर्मणि दिनान्ते पञ्च नाड्यः पुण्याः प्रोक्ताः, दैवे कर्मण्युदये पञ्च नाड्यः पुण्याः प्रोक्ता इत्यन्वयः। खण्डतिथिस्तु काम्यकर्मणि प्रथमोपक्रमे परित्याज्या, संपूर्णतिथावेवोपक्रमसम्भवात्। उपक्रान्तस्य काम्यकर्मणः श्राद्धादेः काम्यसिद्धिपर्यन्तमेकसंवत्सरपर्यन्तं वा स्वकाले पुनःपुनरनुष्ठाने कर्तव्ये खण्डतिथावप्युक्तदिनेऽवश्यं कर्मानुष्ठानं कर्तव्यम्। तथाच देवस्वामिना नक्षत्रश्राद्धमुदाहृत्योक्तं—'नक्षत्रेषु काम्यश्राद्धेषु तत्कामप्रदनक्षत्रप्राप्तौ यावत्तत्कामप्राप्ति तस्मिन् ऋक्षे श्राद्धं कुर्यादब्दमेकं यावत्' इति। अत्र हारीतः—

काम्यश्राद्धानि काम्यार्थी सम्यग्यत्नेन साधयेत्।
शरीरारम्भहेतुत्वात् मुमुक्षुस्तानि नाचरेत्॥
कामप्राप्तानि विहितश्राद्धान्युक्तानि यानि तु।
तानि विध्यन्तरोक्तत्वात्स्वर्गमोक्षार्थमाचरेत्॥
यथाकथञ्चिन्नित्यानि कुर्यादिन्दुक्षयादिषु।
पात्रद्रव्यादिसम्पत्सु सत्सु काम्यफलं लभेत्॥

विध्यन्तरोक्तत्वादिति—'द्विविध एव संस्कारो भवति ब्राह्मो दैवश्च। गर्भाधानादिः स्मार्तो ब्राह्मः, पाकयज्ञहविर्यज्ञसौम्याश्चेति दैवः। ब्राह्मसंस्कारसंस्कृत ऋषीणां समतां समानलोकतां सायुज्यं गच्छति। दैवेनोत्तरेण संस्कृतः देवानां समानलोकतां सायुज्यं गच्छति' इत्येवमादिरूपेण विध्यन्तरेण,

श्राद्धकृत्सत्यवादी च गृहस्थोपि विमुच्यते ।
इत्येवमादिरूपेण विध्यन्तरेण चोक्तत्वादिति ॥

इति स्मृतिचन्द्रिकायां काम्यश्राद्धकालाः

---

## अथ गौणश्राद्धकालाः.

तत्र ऋश्यशृङ्गः—

दैवे पितॄणां श्राद्धे तु आशौचं जायते यदि ।
आशौचादौ व्यतिक्रान्ते तेभ्यश्श्राद्धं प्रदीयते ॥

मुख्यकाले पाकोपक्रमात् प्राक् यदा श्राद्धाधिकारिण आशौचं जायते तदा मुख्यकाले प्रत्यासन्ने आशौचेन दूषिते आशौचापगमानन्तरकाल एव पैतृकं कर्म कार्यमित्यर्थः । यत्तु स्मृत्यन्तरं—

तदहश्चेत् प्रदुष्येत केनचित्सूतकादिना ।
सूतकानन्तरं कुर्यात्पुनस्तदहरेव वा ॥

इति, तत् श्राद्धाहे सूतकेन प्रदुष्टे सूतकानन्तरं कुर्यादिति पक्षस्तावत् ऋश्यशृङ्गवचनाविरुद्ध एव । 'पुनस्तदहरेव वा' इति पक्षस्त्वादिशब्दोक्तनिमित्तान्तरेण विहितमुख्यकालाभावविषय इति पूर्ववचनाविरोधाय कल्पनीयम् । एतच्च पक्षान्तरं क्षयाहे प्रतिमासं क्रियमाणश्राद्धविषयम् । तत्र मासस्पृष्टकालाभावेऽपि पक्षतिथिमात्रस्पृष्टस्यापि ग्राह्यत्वात् । अत एव स्मृत्यन्तरं—

एकोद्दिष्टे तु संप्राप्ते यदि विघ्नः प्रजायते ।

अन्यस्मिन् तत्तिथौ तस्मिन् श्राद्धं कुर्यात्प्रयत्नतः ।

अन्यस्मिन् अनन्तरे मासि । तत्तिथौ मृततिथौ । यस्मिन् शुक्ले कृष्णे वा मृतः तस्मिन् पक्षे श्राद्धं विघ्नवशादतिक्रान्तं कुर्यादित्यर्थः । यदि विघ्न इत्यत्रापि ऋश्यशृङ्गवचनाविरोधायाशौचव्यतिरिक्तनिमित्तेनेति शेषो द्रष्टव्यः । आशौचनिमित्तेन तु विघ्निते मासिकविषयेऽपि सूतकानन्तरमेव श्राद्धानुष्ठानं ऋश्यशृङ्गोक्तमनुसन्धेयम् । अत एव देवस्वामिनाऽप्युक्तं— 'एतदृश्यशृङ्गवचनं सूतकाशौचविषयम् । निमित्तान्तरतस्तदहर्विघाते—

एकोद्दिष्टे तु सम्प्राप्ते यदि विघ्नः प्रजायते ।

इत्यादिस्मृत्यन्तरवचनम्' इति । यत्पुनस्स्मृत्यन्तरं—

श्राद्धविघ्ने समुत्पन्ने अन्तरा मृतसूतके ।

अमावास्यां प्रकुर्वीत शुद्धावेके मनीषिणः ॥

इति अन्तरा मृतसूतके श्राद्धप्रयोगमध्ये पाकोपक्रमात्पूर्वं सूतके मृतके वा जाते अमावास्यायां शुद्धौ शुध्यनन्तरम् । एतत् सांवत्सरिकश्राद्धविषयम् । अमावास्याग्रहणं कृष्णैकादश्याश्चोपलक्षणार्थम् । अत एव मरीचिः—

श्राद्धविघ्ने समुत्पन्ने अविज्ञाते मृतेऽहनि ।

एकादश्यां तु कर्तव्यं कृष्णपक्षे विशेषतः ॥

इति । कृष्णपक्षे या एकादशी तस्यां विशेषतः कर्तव्यमि-

त्यन्वयः। पितृकार्ये स्वतः कृष्णपक्षस्यैव ग्राह्यत्वात् कृष्णै-
कादशीतोऽप्यमावास्यायाः पितृकार्ये श्रैष्ठ्यं दण्डापूपिकान्या-
यसिद्धमिति बोद्धव्यम्। यत्तु षट्त्रिंशन्मतं—

मासिकेऽब्दे तु संप्राप्ते त्वन्तरा मृतसूतके।
वदन्ति शुद्धौ तत्कार्यं दर्शे वाऽपि विचक्षणाः॥

इति, तदेतत् 'तान्येव तु पुनः कुर्यात्' इति विहितानुमा-
सिकश्राद्धविषयम्। एकोद्दिष्टमासिके पूर्वमेवानुकल्पकालस्यो-
क्तत्वात्। तत्र शुद्ध्यनन्तरकालो मुख्यकालत्वाच्छ्रेष्ठः। दर्श-
कालस्ततो जघन्यः, मुख्यकालप्रत्यासत्त्यभावादिति मन्तव्यम्।
तथाच ऋश्यशृङ्गः—

शुचिभूतेन दातव्यं या तिथिः प्रतिपद्यते।
सा तिथिस्तस्य कर्तव्या न त्वन्या वै कदाचन॥

इति। अयमर्थः—शुचिभूतेन तावद्दातव्यम्। तेन मुख्यकाले
शुद्ध्यसम्भवे, शुद्ध्यनन्तरं या तिथिः प्रतिपद्यते लभ्यते सा
तिथिस्तस्य कर्तव्या कर्मोपक्रमात्प्राक् साध्यतया कथञ्चिद-
नुष्ठेया न त्वन्या, मुख्या तिथिराशौचदूषिता कदाचन ना-
नुष्ठेयेति। आशौचदूषिता मुख्या तिथिर्नानुष्ठेयेत्याह स एव—

तिथिच्छेदो न कर्तव्यो विनाऽऽशौचं यदृच्छया।
पिण्डं श्राद्धं च दातव्यं विच्छित्तिं नैव कारयेत्॥

यदृच्छया स्वेच्छया। श्राद्धं ब्राह्मणतर्पणम्। चशब्देनाशौ-

करणमपि कर्तव्यमिति समुच्चिनोति। श्राद्धशब्देनात्र ब्राह्मणतर्पणमात्रमुपचारादुच्यते, न मुख्यार्थतया, अग्नौकरणब्राह्मणतर्पणपिण्डदानात्मककर्मत्रयसमुदायस्यैव मुख्यार्थत्वात्। तथाच देवस्वामिना श्राद्धशब्दार्थ एवमेव सम्यङ्निरूपितः—

पिण्डाभावेऽपि नित्यादौ श्राद्धशब्दप्रयोगतः।
श्राद्धशब्दो न पिण्डेषु नापि च द्विजभोजने॥
अतिथ्यादौ भुजासत्यां श्राद्धशब्दाप्रयोगतः।
पितॄनुद्दिश्य वित्तादित्यागमात्रं न चैव हि॥
तर्पणादेरपि प्राप्तेस्त्यागस्तत्रापि दृश्यते।
विद्वन्मतान्युपादाय मम त्वेतद्धृदि स्थितम्॥
होमश्च पिण्डदानं च तथा ब्राह्मणतर्पणम्।
श्राद्धशब्दाभिधेयं स्यादेकस्मिन्नौपचारिकः॥

इति। 'विच्छित्तिं नैव कारयेत्' इति ऋश्यशृङ्गवचनस्यायमर्थः—कृत्स्नस्य श्राद्धशब्दार्थस्य कर्तुमशक्यत्वेऽपि तदेकदेशमात्रं वा यथासामर्थ्यं कुर्यात्। सर्वथा कर्मविच्छित्तिं नैव कुर्यादिति। अत एव निगमः—'आहिताग्नेः पित्रर्चनं पिण्डैरेव ब्राह्मणानपि वा भोजयेत्' इति। अत्र यथासामर्थ्यं व्यवस्था। ततश्च द्वितीयपक्षासामर्थ्ये प्रथमोक्तः पक्षः॥

इति स्मृतिचन्द्रिकायां गौणश्राद्धकालाः,

## अथ श्राद्धदेशाः.

तत्र विष्णुधर्मोत्तरे—

दक्षिणाप्रवणे देशे तीर्थादौ वा गृहेऽपि वा ।
भूसंस्कारादिसंयुक्ते श्राद्धं कुर्यात्प्रयत्नतः ॥

तीर्थं ऋषिसेवितं जलं, तत्समीपे । आदिशब्देन ऋषिसेविताश्रमादि * गृह्यते । भूसंस्कारादिसंयुक्ते भूसंस्कारो गोमयादिलेपनादिः । आदिशब्देन केशाद्यशुचिद्रव्यापसारणं गृह्यते । तथाचोक्तं तत्रैव—

गोमयेनोपलिप्तेषु विविक्तेषु गृहेषु च ।
कुर्याच्छ्राद्धमथैतेषु नित्यमेव यथाविधि ॥

इति । एतेषु पूर्वोक्तेषु गृहेषु गृहादिषु गोमयेनोपलिप्तेषु केशादिद्रव्यवियुक्तेषु श्राद्धं नित्यं कुर्यादित्यर्थः । मनुरपि—

शुचिं देशं विविक्तं तु गोमयेनोपलेपयेत् ।
दक्षिणाप्रवणं चैव प्रयत्नेनोपपादयेत् ॥

इति । अयमर्थः—स्वतश्शुचिं तीर्थादिप्रदेशं गृहप्रदेशं वा परकृताशुचिपरिहारार्थं विविक्तं केशाद्यसंयुक्तं कृत्वा भूसंस्कारातिशयार्थं गोमयेनोपलेपयेत् । स्वतो दक्षिणाप्रवणत्वाभावेऽपि पितृयजनत्वसिद्धये दक्षिणाप्रवणत्वं चोद्धननादिना प्रयत्नेनोपपादयेत् कुर्यादिति । अत्र यमः—

परकीयप्रदेशेषु पितॄणां निर्वपेत्तु यः ।

---

* ऋषिदेवताश्रयादि इति पाठान्तरम्.

तद्भूमिस्वामिपितृभिश्श्राद्धकर्म विहन्यते ॥

तेन तत्र श्राद्धं न कुर्यादित्यभिप्रायः । परकीयप्रदेशाः परपरिगृहीतगृहगोष्ठादिप्रदेशाः, न पुनस्तीर्थादिप्रदेशाः । तथाच पुराणम्—

अटवीपर्वताः पुण्या नदीतीराणि यानि च ।
सर्वाण्यस्वामिकान्याहुः न हि तेषु परिग्रहः ॥
वनानि गिरयो नद्यः तीर्थान्यायतनानि च ।
देवखाताश्च गर्ताश्च न स्वामी तेषु विद्यते ॥

इति । देवखाताश्च गर्ताश्च देवखातगर्ताश्चेत्यर्थः । कृत्रिमगर्तस्यास्वामिकत्वनियमासम्भवात् । यस्मादेतेषु परपरिग्रहाभावः, तस्मादेतेषु स्वगृहेष्विव श्राद्धं देयमित्युक्तम् । विष्णुधर्मोत्तरे—

तस्माच्छ्राद्धानि देयानि पुण्येष्वायतनेषु च ।
नदीतीरेषु तीर्थेषु स्वभूमौ च प्रयत्नतः ॥

इति । स्वभूम्यामपि कृत्रिमप्रदेशादन्यत्र देयानि, तत्र प्रतिषेधात् । तथाच शङ्खः—

गोगजाश्वादिपृष्ठेषु कृत्रिमायां तथा भुवि ।
न कुर्याच्छ्राद्धमेतेषु पारक्याशुचिभूमिषु ॥

कृत्रिमायां भुवि वेदिकायामित्यर्थः । अनेन अकृत्रिमायामेव भुवि पितृतृप्तिर्भवतीत्यर्थादुक्तम् । उक्तं चसाक्षाद्देवलेन—

स्थलीषु गिरिपृष्ठेषु तीर्थेष्वायतनेषु च ।

गोष्ठेषु च विविक्तेषु तुष्यन्ति पितरस्तथा ॥

स्थलीषु अकृत्रिमोन्नतदेशेष्वित्यर्थः। 'जानपदकुण्डगोळस्थल' इत्यादिना पाणिनीयसूत्रेण स्थलशब्दादकृत्रिमार्थे ङीष्प्रत्ययविधानात्। शङ्खोपि कृत्रिमस्थले निषेधमाह— 'नेष्टकाचिते पितॄंस्तर्पयेत्' इति। यमस्तु वर्ज्यप्रदेशमाह—

रूक्षं क्रिमिहतं क्लिन्नं सङ्कीर्णानिष्टगन्धिकम्।
देशं त्वनिष्टशब्दं च वर्जयेच्छ्राद्धकर्मणि ॥

रूक्षं अस्निग्धम्। क्लिन्नं सकर्दमम्। सङ्कीर्णं पदार्थान्तरैराकीर्णम्। अनिष्टगन्धिकं पूतिगन्धिकम्। अनिष्टशब्दं अश्राव्यशब्दम्। मदालसावाक्यमपि—

वर्ज्या जन्तुमती रूक्षा क्षितिः प्लुष्टा तथाऽग्निना।
अनिष्टदुष्टशब्दोग्रा दुर्गन्धा श्राद्धकर्मणि ॥

अग्निना प्लुष्टा दग्धा। उग्रा व्याघ्रादिसंनिकृष्टा।

इति स्मृतिचन्द्रिकायां श्राद्धदेशाः.

---

## अथ काम्यश्राद्धदेशाः.

तत्र व्यासः—

पुष्करे त्वक्षयं श्राद्धं जपहोमतपांसि च।
महोदधौ प्रयागे च काश्यां च कुरुजाङ्गले ॥

इति। पुष्करे पुष्कराख्यतीर्थे। काशी वाराणसी। कुरुजाङ्गलशब्दौ जनपदविशेषवचनौ। शङ्खोपि—

वाराणस्यां कुरुक्षेत्रे भृगुतुङ्गे हिमालये ।
नर्मदाबाहुदातीरे सर्वमानन्त्यमश्नुते ॥
गङ्गाद्वारे प्रयागे वा नैमिशे पुष्करे तथा ।
सन्निहत्यां गयायां च दत्तमक्षय्यतां व्रजेत् ॥

नैमिशे सरस्वतीतीरवर्तिनि नैमिशारण्ये । सन्निहतिः कुरुक्षेत्रवर्ती तीर्थविशेषः । गया प्रसिद्धा । गयाक्षेत्रस्य तु प्रमाणं पुराणे दर्शितं—

महानदी देवनद्योः सर्वतीर्थाद्यनन्तरम् ।
उदक्कनकनन्दाया गयामध्यं प्रकीर्तितम् ॥
पञ्चक्रोशं गयाक्षेत्रं क्रोशमात्रं गयाशिरः ।

पञ्चक्रोशप्रमाणके गयाक्षेत्रे सारभूतं क्रोशमात्रं गयाशिर इति प्रसिद्धमित्यर्थः । तच्च तत्रैव निरूपितं—

महानद्याः पश्चिमेन यावद्गृध्रेश्वरो गिरिः ।
उत्तरे ब्रह्मयूपस्य यावद्दाक्षिणमानसम् ॥
एतद्गयाशिरो नाम त्रिषु लोकेषु विश्रुतम् ।

इति । गयाशिरोवदन्यान्यपि गयायां विश्रुतानि महानद्यादीनि श्राद्धस्थलानि तत्रैव दर्शितानि—

महानदी ब्रह्मसदोऽक्षयो वटः प्रभासमुद्यन्तमथो गयाशिरः।
सरस्वती धेनुकधर्मपृष्ठमेते कुरुक्षेत्रसमा गयायाम् ॥

इति । उद्यन्ताख्यः पर्वतविशेषः । सरस्वती प्राची सरस्वतीति विश्रुता । व्यासोपि—

ब्रह्मारण्यं धर्मपृष्ठं धेनुकारण्यमेव च ।
त्रिष्वेतेषु पितॄनर्चन् वंशान् सप्त समुद्धरेत ॥

ब्रह्मकैवर्तेऽपि—

गयायां मुण्डपृष्ठं तु अरविन्दं च पर्वतम् ।
तृतीयं क्रौञ्चपादं तु दृष्ट्वा पापैः प्रमुच्यते ॥

गयायास्तच्छिरसो मुण्डपृष्ठस्य च माहात्म्यं तत्रैव दर्शितं—

स्वर्गपाताळमर्त्येषु नास्ति तीर्थं गयासमम् ।
पितरो यान्ति देवत्वं प्राप्तपिण्डा गयाशिरे ॥
गयाशीर्षे यदा पिण्डं नाम्ना येषां प्रकुर्वते ।
नरकस्था दिवं यान्ति स्वर्गस्था मोक्षगामिनः ॥
मुण्डपृष्ठे पदं न्यस्तं महादेवेन धीमता ।
बहून्यब्दसहस्राणि तपस्तप्त्वा सुदारुणम् ॥
अल्पेनाप्यत्र कालेन नरो धर्मपरायणः ।
पापं विमोचयत्याशु जीर्णां त्वचमिवोरगः ॥

इति । अक्षयवटस्य माहात्म्यं तत्रैव दर्शितं—

तत्राक्षयवटो नाम त्रिषु लोकेषु विश्रुतः ।
पितॄणां तत्र वै दत्तमक्षयं भवति प्रभो ॥
वटवृक्षं समासाद्य शाकेनाप्युदकेन वा ।
एकस्मिन् भोजिते विप्रे कोटिर्भवति भोजिता ॥

धेनुकारण्यमाहात्म्यं पुराणान्तरे दर्शितं—

ततो गच्छेत राजेन्द्र धेनुकां लोकविश्रुताम् ।

तत्र चिह्नं प्रदृश्येत अद्यापि हि न संशयः ॥
कपिलायास्सवत्साया दृश्यन्ते कुरुसत्तम।
विचरन्त्याः पदानि स्युः दृश्यन्ते पञ्च कृत्तवत् ॥
पदानि तानि संस्पृश्य कपिलाया नराधिप।
तेषु दृष्टेषु यत्पुंसः पापं तत्संप्रणश्यति ॥

गृध्रेश्वरमाहात्म्यं तत्रैव दर्शितं—

ततो गृध्रनगं गच्छेत् स्थानं देवस्य धीमतः।
स्नात्वा तु भस्मना तत्र अधिगच्छेन्महेश्वरम् ॥
ब्राह्मणेन भवेच्चीर्णं व्रतं द्वादशवार्षिकम्।
इतरेषां तु वर्णानां सर्वपापक्षयो भवेत् ॥

इति। गृध्रेश्वरगिरिमाहात्म्यं तत्रैव दर्शितं—

ततो गच्छेत्सम त्वन्नपर्वतं गिरिवारितम्।
सावित्र्यास्तस्य दृश्यन्ते पदानि भरतर्षभ ॥
तत्र सन्ध्यामुपासीत ब्राह्मणस्संशितव्रतः।
तेनोपासिता भवति सन्ध्या द्वादशवार्षिकी ॥
धर्मपृष्ठस्य माहात्म्यं तच्च तत्रैव दर्शितम्।
ततो गच्छेत राजेन्द्र धर्मपृष्ठं समाहितः ॥
यत्र धर्मो महाराज नित्यमास्ते युधांवर।
तत्राधिगम्य राजेन्द्र हयमेधफलं भवेत् ॥

तीर्थान्तराणां च गयायां प्रसिद्धानां माहात्म्यं दर्शितम्—

ततो विशालामासाद्य नदीं त्रैलोक्यविश्रुताम्।

अग्निष्टोममवाप्नोति स्वर्गलोकं च गच्छति ॥
अथ माहेश्वरं धाम समासाद्य नरश्शुचिः ।
हयमेधमवाप्नोति कुलं चैव समुद्धरेत् ॥
दिवौकसां पुष्करिणीं समासाद्य नरश्शुचिः ।
न दुर्गतिमवाप्नोति विष्णुलोकं च गच्छति ॥
तत्र कोटिस्तु तीर्थानां विश्रुता भरतर्षभ ।
कूर्मरूपेण राजेन्द्र दानवेन दुरात्मना ॥
ह्रियमाणोद्धृता राजन् विष्णुना प्रभविष्णुना ।
तत्राभिषेकं कुर्वीत तीर्थकोट्यां युधांवर ॥
पौण्डरीकमवाप्नोति विष्णुलोकं च गच्छति ।
गोप्रचारसमीपस्था आम्रा ब्रह्मप्रकल्पिताः ॥
तैस्सिक्तैः पुरुषस्येह पितरो मोक्षमाप्नुयुः ।
एको मुनिः कुम्भकराग्रहस्तः
आम्रेषु नित्यं सलिलं ददाति ।
आम्राश्च सिक्ताः पितरश्च तृप्ताः
एका क्रिया द्व्यर्थकरी बभूव ॥
या सा वैतरणी नाम त्रिषु लोकेषु विश्रुता ।
साऽवतीर्णा गयाशीर्षे पितॄणां तारणाय वै ॥
तत्र स्नात्वा महाराज गोदानं यः प्रयच्छति ।
एकविंशतिं वंश्यांस्तान् तारयेन्नात्र संशयः ॥
तत्र धेनुप्रदानेन पितरो मोक्षमाप्नुयुः ।

इति। पौण्डरीकं पौण्डरीकाख्ययज्ञफलम्। ब्रह्मकैवर्तेऽपि—

ब्रह्महा च कृतघ्नश्च गोघाती पञ्चपातकी।
सर्वे निष्कृतिमायान्ति गयायां पिण्डपातनात्॥
ब्रह्मघ्नश्च सुरापश्च बालवृद्धगुरुद्रुहः।
नाशमायाति वै पापं गयायामनुयाति यः॥
आत्मजत्वमवाप्तस्तु गयाकूले यथातथा।
यन्नाम्ना पातयेत्पिण्डं तं नयेद्ब्रह्म शाश्वतम्॥

इति।

मकरे वर्तमाने तु ग्रहणे चन्द्रसूर्ययोः।
दुर्लभं त्रिषु लोकेषु गयायां पिण्डपातनम्॥

ब्रह्मणा सह शाश्वतं ब्रह्मप्राप्त्यापादकं ब्रह्मलोकं नयेदित्यर्थः। व्यासोपि—

गयां गत्वा तु यः कश्चित्पितॄन् संतर्पयेन्नरः।
दश पूर्वापरान् वंश्यानात्मानं च पुनाति सः॥

पुराणान्तरे—

स्नानं देहपरित्यागो गङ्गायां तु विशिष्यते।
श्राद्धं पिण्डप्रदानं च गयायां तु विशिष्यते॥
ब्रह्मज्ञानं गयाश्राद्धं गोगृहे मरणं तथा।
वासः पुंसां कुरुक्षेत्रे मुक्तिरुक्ता चतुर्विधा॥
गयाशीर्षे वसेन्नित्यं स्नानं फल्गौ समाचरेत्।
गयाशीर्षे सदा पिण्डमेतत्स्वर्गेऽपि दुर्लभम्॥

फल्गुतीर्थे नरस्स्नात्वा देवं दृष्ट्वा गदाधरम् ।
गयाशिरः परिक्रम्य मुच्यते ब्रह्महत्यया ॥
गयायां पितृरूपेण स्वयमेव जनार्दनः ।
तं दृष्ट्वा पुण्डरीकाक्षं मुच्यते च ऋणत्रयात् ।
येनाक्रान्तं सकृदपि धर्मपृष्ठं गयाशिरः ॥
नश्यति ब्रह्महत्यादि पातकं नात्र संशयः ।
त्रिर्ददत्पृथिवीं कृत्स्नां न मुच्येत्पैतृकादृणात् ॥
यावच्छ्राद्धं न वै पुत्रः कुर्याद्गत्वा गयाशिरः ।
गयायां धर्मपृष्ठे च सदसि ब्रह्मणस्तथा ॥
गयाशीर्षे पदे चैव पितॄणां दत्तमक्षयम् ।
शमीपत्रप्रमाणेन पिण्डं दद्याद्गयाशिरे ॥
नरकस्था दिवं यान्ति स्वर्गस्था मोक्षमाप्नुयुः ।

इति । शमीपत्रग्रहणं स्ववित्तानुसारेण पिण्डदानमावश्यकमिति ज्ञापनार्थं, अत एवोक्तं तत्रैव—

वित्तशाठ्यं न कुर्वीत गयां प्राप्य सदा नरः ।
वित्तशाठ्यं च कुर्वाणो न तीर्थफलभाग्भवेत् ॥

अतो वित्तानुसारेण शरीरबलानुसारेण च गयाश्राद्धं कार्यम् । एतदपि तत्रैवोक्तं—

अतो निर्वर्तयेच्छ्राद्धं यथाशक्ति यथाबलम् ।
कामान् स लभते दिव्यान् स्वर्गद्वारं तु तत्स्मृतम् ॥

इति। तेन सति सम्भवे सवर्णादिभ्योऽपि कृपया पिण्डदानादिकं देयं एतदपि तत्रैवोक्तम्—

सवर्णा ज्ञातयो ये च बान्धवास्सुहृदश्च ये।
तेभ्यो भूप गयाभूमौ पिण्डा देया विधानतः॥
दौहित्रेभ्यश्च पुत्रेभ्यः कनिष्ठेभ्योपि सर्वशः।
ये मृताश्चान्यजन्मानः पिण्डांस्तेभ्यो विनिर्वपेत्॥
तेऽपि यान्ति दिवं सर्वे पिण्डे दत्त इति श्रुतिः।

सवर्णादीनां गोत्रादीनाम ज्ञाने तु तेषां पिण्डदानमन्त्रोपि तत्रैव दर्शितः—

पितृवंशसमुत्पन्ना मातृवंश्यास्तथैव च।
गुरुश्वशुरबन्धूनां ये चान्ये मानवा द्विजाः॥
ये मे कुले लुप्तपिण्डाः पुत्रदारविवर्जिताः।
विरूपा आमगर्भाश्च ज्ञाताज्ञातास्तथैव च॥
क्रियालोपगता ये च ये चान्ये गर्भसंस्थिताः।
तेभ्यो दत्तो मया पिण्डो ह्यक्षय्यमुपतिष्ठताम्॥

आमगर्भा अपक्वगर्भा अपूर्णगर्भा इति यावत्। सवर्णादिभ्यः पिण्डदानवदात्मार्थमपि तिलरहितं पिण्डं जनार्दनदेवसंनिधौ निक्षेपद्द्रव्यस्थापनवन्निर्वपेत्। एतदपि तत्रैवोक्तम्—

आत्मनस्तु महाबुद्धे गयायां तु तिलैर्विना।
पिण्डनिर्वापणं कार्यं मृतानां तु तिलैस्सह॥

इति। गयायां यत्रयत्र श्राद्धादिकं क्रियते तत्रतत्रत्याएव

विप्राः जातिमात्रोपजीविनोपि ब्राह्मणार्थे परिग्राह्याः। तथा च पुराणान्तरं—

यदि पुत्रो गयां गच्छेत् कदाचित्कालपर्ययात् ।
तानेव भोजयेद्विप्रान् ब्राह्मणा ये प्रकल्पिताः॥
एषां ब्रह्मसमं स्थानं सोमपानं तथैव च ।
ब्रह्मकारितसंस्थाना विप्रा ब्रह्मसमास्स्मृताः ॥
अमानुषा गयाविप्रा ब्राह्मणा ये प्रकल्पिताः ।
तेषु तुष्टेषु संतुष्टाः पितृभिस्सह देवताः ॥
पितृरूपान् गयाविप्रान् पूजयित्वा समाहितः ॥
सर्वपापविशुद्धात्मा स्वर्गलोके महीयते ॥
तेषां च हस्तदत्तं वै गयायां च विशेषतः ।
तदक्षय्यं भवेत्तस्य पितॄणां नात्र संशयः ॥
न विचार्यं कुलं शीलं विद्या च तप एव च ।
पूजितैस्तैस्तु सन्तुष्टाः देवास्सपितृगुह्यकाः ॥

इति । 'यदि पुत्रो गयां गच्छेत्' इत्यत्र पुत्रग्रहणं पौत्रादीनां पित्रादिगतश्रेयस्कामानां सर्वेषां गयागन्तॄणामुपलक्षणार्थं अत एव ब्रह्मकैवर्ते—

उद्यतस्तु गयां गन्तुं श्राद्धं कृत्वा विधानतः ।
विधाय कर्मशेषं च ग्रामं कृत्वा प्रदक्षिणम् ॥
ततो ग्रामान्तरं गच्छेच्छ्राद्धशेषान्नभुङ्नरः ।
ततः प्रतिदिनं गच्छेत्प्रतिग्रहविवर्जितः ॥

इति सामान्येनैवोक्तम् । अत एव महाभारते व्यासेनापि सामान्येनैवोक्तं—

गृहे श्राद्धं प्रकुर्वीत सम्यक्सङ्कल्प्य बुद्धिमान् ।
पितृतीर्थं समुद्दिश्य सङ्कल्प्य पितृसन्निधौ ॥
प्रतिग्रहं परान्नं च कालिं चैव द्विजोत्तमः ।

इति । पितृसन्निधौ पित्रर्थं निमन्त्रितब्राह्मणसन्निधौ पितृतीर्थं समुद्दिश्य गयायात्रार्थं श्राद्धं करिष्ये इति सम्यग्भक्तिपूर्वकं सङ्कल्प्य स्वगृहे यात्रार्थं श्राद्धं कुर्यादित्यर्थः । कालिः कलहः । वर्ज्यान्तरमपि तेनैवोक्तम्—

केशश्मश्रुनखादीनां वपनं न च शस्यते ।
अतो न कार्यं वपनं गयाश्राद्धार्थिना सदा ॥

इति । एवं गयायात्रां कुर्वतः फलमपि तत्रैवोक्तम्—

ये भारतेऽस्मिन् पितृकर्मतत्पराः
सन्धार्य केशानतिभक्तिनम्राः ।
ऋणक्षयार्थं पितृतीर्थमागताः
तेषामृणं संक्षयमेष्यति ध्रुवम् ॥

इति । भारते भारतवर्षे ऋणक्षयार्थं देवर्षिपितृऋणक्षयार्थं पितृतीर्थं गया ॥

इति स्मृतिचान्द्रिकायां काम्यश्राद्धदेशाः

---

## श्राद्धे भोजनीयब्राह्मणनिरूपणम्.

तत्र मनुः—

तत्र ये भोजनीयास्स्युर्ये च वर्ज्या द्विजोत्तमाः ।
यावन्तश्चैव यैश्चान्नैस्तान् प्रवक्ष्याम्यशेषतः ॥

तत्र श्राद्धकर्मणीत्यर्थः । द्विजोत्तमाः द्विजेषु त्रैवर्णिकेषूत्तमाः ब्राह्मणा इति यावत् । भोजनीयानभोजनीयांश्च ब्राह्मणान् वेत्तुं गुणदोषादिपरीक्षणं कार्यमित्याह स एव—

दूरादेव परीक्षेत ब्राह्मणं वेदपारगम् ।

इति । भोजनीयब्राह्मणस्य प्रपितामहादारभ्य भोजनीयपर्यन्तं परीक्षा दूरात्परीक्षा । वेदपारगग्रहणमुपादेयगुणानामुपलक्षणार्थम् । अत एव छागलेयः--

उक्तलक्षणसंयुक्तैः विद्याशीलगुणान्वितैः ।
पुरुषत्रयविख्यातैस्सर्वं श्राद्धं प्रकल्पयेत् ॥

उक्तलक्षणैर्विप्रैस्सर्वं पार्वणाभ्युदयिकादिश्राद्धं प्रकल्पयेन्निर्वर्तयेदित्यर्थः । पुराणेऽपि—

जातकर्मादिभिर्यस्तु संस्कारैस्संस्कृतश्शुचिः ।
वेदाध्ययनसम्पन्नष्षट्सु कर्मस्ववस्थितः ॥
शौचाचारे स्थितस्सम्यक् विघसाशी गुरुप्रियः ।
नित्यं व्रती सत्यपरः स वै ब्राह्मण उच्यते ॥
तपश्श्रुतं च योनिश्चाप्येतद्ब्राह्मण्यकारणम् ।
सत्यं दानं तपो द्रोहमानृशंस्यं क्षमा घृणा ॥

तपश्च दृश्यते यत्र स ब्राह्मण इति स्मृतः ।

इति । षट्सु यजनयाजनाध्ययनाध्यापनदानप्रतिग्रहात्मकेषु । विघसो यज्ञशेषः। अतिथिप्रभृतिभिः भुक्तशेषश्च। योनिरन्वयशुद्धिः। आनृशंस्यं अक्रूरता । हारीतोपि—कुलीनाश्श्रुतशीलवन्तो वृत्तस्थाः सत्यवादिनोऽव्यङ्गाः पाङ्क्तेयाः' इति । स्वयमेव कुलादीन् विवृणोति—स्थितिः अविच्छिन्नवेदवेदिता अयोनिसंकरित्वं आर्षेयत्वं चेति कुलगुणाः । वेदा अङ्गानि धर्मोऽध्यात्मं विज्ञानं स्मृतिश्चेति षड्विधं श्रुतम् । ब्रह्मण्यता देवपितृभक्तता समता सौम्यता अपरोपतापिता अनसूयता अनुद्धतता अपारुष्यं मित्रता प्रियवादित्वं कृतज्ञता शरण्यता प्रशान्तिश्चेति त्रयोदशविधं शीलम् । क्षमा दया दमो दानं अहिंसा गुरुपूजनं शौचं स्नानं जपो होमः तपः स्वाध्यायस्सत्यवचनं सन्तोषो दृढव्रतत्वं उपव्रतत्वमिति षोडशगुणं वृत्तमिति । स्थितिः संततिरूपेण च कालस्थितिः । अविच्छिन्नवेदवेदितेत्यत्र वेदिशब्देन हविरासादनार्थदेशविशेषवाचिना हविस्साध्यो याग उपलक्ष्यते । एतदुक्तं भवति—पूर्वपुरुषेष्वपि वेदाध्ययनयागानुष्ठानयोः सत्ता कुलगुणा इति । आर्षेयत्वं स्वीयप्रवरागतऋषिजातत्वम् । धर्मो धर्मशास्त्रम् । विज्ञानं वैशेषिकादिशास्त्रज्ञानम् । स्मृतिः वेदादीनामविस्मरणम् । उपव्रतत्वं दशम्यादावेकभक्तनिष्ठत्वम् । विष्णुरपि—

ये क्षान्तदान्ताः श्रुतिपूर्णकण्ठाः
जितेन्द्रियाः प्राणिवधे निवृत्ताः ।
प्रतिग्रहे सङ्कुचिताग्रहस्ताः
ते ब्राह्मणास्तारयितुं समर्थाः ॥

इति । मत्स्यपुराणेऽपि—

अर्थज्ञो वेदवित्सत्री ज्ञातवंशः कुलान्वितः ।
पुराणवेत्ता सर्वज्ञः स्वाध्यायजपतत्परः ॥
शिवभक्तः पितृपरः सूर्यभक्तोऽथ वैष्णवः ।
ब्रह्मण्यो योगविच्छान्तो विजितात्माऽथ शीलवान् ॥

इति । श्राद्धे नियोजनीया इति शेषः । मनुरपि—

गायत्रीमात्रसारोपि वरं विप्रस्सुयन्त्रितः ।
नायन्त्रितश्चतुर्वेदी सर्वाशी सर्वविक्रयी ॥

मत्स्योपि—

गायत्रीजप्यनिरतं हव्यकव्ये नियोजयेत् ॥
पापं तिष्ठति नो तस्मिन्नब्बिन्दुरिव पुष्करे ॥

व्यासोपि—

चीर्णव्रता गुणैर्युक्ता भवेयुर्ये च कर्षकाः ।
सावित्रीज्ञाः क्रियावन्तः ते राजन् केतनक्षमाः ॥
सावित्रीं तु जपेद्यस्तु द्विकालं भरतर्षभ ।
भैक्षवृत्तिः क्रियावांश्च स राजन् केतनक्षमः ॥

केतनं निमन्त्रणम् । क्षमो योग्यः । यमोपि—

पूर्वमेव परीक्षेत ब्राह्मणान् वेदपारगान् ।
शरीरप्रभवैर्दोषैर्विशुद्धांश्चरितव्रतान् ॥

पूर्वमेव निमन्त्रणात्प्रागेवेत्यर्थः । चरितव्रतान् स्नातकान् । तथा च स एव—

गृहस्थो ब्रह्मचारी च यजुर्वेदविदेव च ।
वेदविद्याव्रतस्नातः ब्राह्मणः पङ्क्तिपावनः ॥

चशब्दाद्यतिरप्युक्तः । उक्तं च साक्षाद्वसिष्ठेन—
'यतीन् गृहस्थान् साधून्वा' इति । भोजयेदिति शेषः । ब्रह्माण्ड-पुराणेऽपि—

शिखिभ्यो धातुरक्तेभ्यः त्रिदण्डिभ्यश्च दापयेत् ।

इति । शिखिनो ब्रह्मचारिणः । धातुरक्ता धातुरक्तवस्त्रधारिणः वानप्रस्थाः । अत्र परः परश्श्रेष्ठः । अत एव नारदः—

यो वै यतीननादृत्य भोजयेदितरान् द्विजान् ।
विजानन् वसतो ग्रामे कव्यं तद्याति राक्षसान् ॥

ग्रामे स्वग्रामे वसतो यतीन् जानन्नपि ताननादृत्येतरान् द्विजान् वानप्रस्थादीन् यो भोजयेत्, तत्तदीयं कव्यं पित्रर्थं सङ्कल्पितं अन्नादिकं राक्षसानेव गच्छतीत्यर्थः । तेन सति सम्भवे यतीन् भोजयेत् । तेषामभावे वानप्रस्थान्, तेषामभावे ब्रह्मचारिणः, तेषामभावे गृहस्थानिति मन्तव्यम् । अत एव ब्रह्माण्डपुराणे—

अलाभे ध्यानिभिक्षूणां भोजयेद्ब्रह्मचारिणम् ।
तदलाभे ह्युदासीनं गृहस्थमपि भोजयेत् ॥

ध्यानमस्यास्तीति ध्यानी वानप्रस्थः । भिक्षुर्यतिः । उदासीनो दातुरसंबन्धी । तथाचापस्तम्बः—

'ब्राह्मणान् भोजयेत् ब्रह्मविदः योनिगोत्रमन्त्रान्तेवास्यसम्बन्धान्' इति । योनिसम्बन्धा मातुलादयः, गोत्रसम्बन्धाः सपिण्डादयः, मन्त्रसम्बन्धा वेदाध्यापकादयः, अन्तेवासिसम्बन्धाः शिष्यशास्त्रोपाध्यायादयः । एवंविधसम्बन्धव्यतिरिक्तान् ब्राह्मणान् गृहस्थान् भोजयेत् । ब्रह्मज्ञान् ब्राह्मणान् यत्नेन भोजयेदित्यर्थः । तथा च पितृगाथा—

अपि स्यात् स कुले जन्तुः भोजयेद्यस्तु योगिनम् ।
विप्रं श्राद्धे प्रयत्नेन तेन तृप्यामहे वयम् ॥

प्रयत्नेन भोजयेदित्यनेन अत्यन्तश्रैष्ठ्यं योगिन उक्तम् । उक्तंच सुस्पष्टं पुराणे—

गृहस्थानां सहस्रेण वानप्रस्थशतेन च ।
ब्रह्मचारिसहस्रेण यो योगी स विशिष्यते ॥

पद्मपुराणेऽपि—

साङ्गान् यश्चतुरो वेदानधीते संस्कृतोऽर्थवित् ।
जन्मवाक्कर्मसंशुद्धः स श्राद्धे प्रथमो मतः ॥
तादृशादयुताच्छ्रेयान्नरो योगं समाश्रितः ।

वृद्धशातातपोपि—

योगिनं भोजयेन्नित्यं दृष्टतत्त्वं मनीषिणम् ।
तेषां तु दत्तमक्षय्यं भवतीति न संशयः ॥

यत्तूशनसोक्तम्—

यथाकथञ्चिदपि यो योगधर्मं समाश्रितः ।
सम्यग्वर्णाश्रमास्तेभ्यः तत्पात्रं परमं विदुः ॥

ये सम्यग्वर्णाश्रमाचाराः तेभ्यस्तत्पूर्वार्धेनोक्तं परमं पात्रमित्यर्थः । एतद्योगिनां प्रशंसामात्रं, शातातपेन 'दृष्टतत्त्वं मनीषिणम्' इति विशेषितत्वात् ।

ये तु वृत्ते स्थिता नित्यं ज्ञानिनो ध्यानिनस्तथा ।

इति ब्रह्माण्डपुराणे वृत्तस्थानामेव ज्ञानिनां ध्यानिनां च भोजनीयत्वाभिधानाच्च । आत्मादिस्वरूपपरिच्छित्तिः ज्ञानम् । ध्यानं तु विजातीयप्रत्ययतिरस्कारेणात्मादेस्स्वरूपसाक्षात्करणम् । एवञ्च यदुक्तं वृद्धशातातपेन—

ज्ञानी यस्य गृहेऽश्नाति उदकं वा पिबेद्यदि ।
कृतं तेनेह यत्कृत्यं तारितं च कुलत्रयम् ॥
योगिनं समतिक्रम्य गृहस्थं यदि भोजयेत् ।
न तत्फलमवाप्नोति स्वर्गस्थमपि पातयेत् ॥
योगिनं तु व्यतिक्रम्य पूजयन्ति परस्परम् ।
भोक्तारस्त्वथ दातारो नरके स्युस्सबान्धवाः ॥

इत्येतत्सर्वं वृत्तस्थदृष्टतत्त्वयोगिविषयमिति मन्तव्यम् । तत्र मनुः—

एषामन्यतमो यस्य भुञ्जीत श्राद्धमर्चितः ।
पितॄणां तस्य तृप्तिस्स्याच्छाश्वती साप्तपौरुषी ॥
एष वै प्रथमः कल्पः प्रदाने हव्यकव्ययोः ।
अनुकल्पस्त्वयं ज्ञेयः सदा सद्भिरनुष्ठितः ॥
मातामहं मातुलं च स्वस्रीयं श्वशुरं गुरुम् ।
दौहित्रं विट्पतिं बन्धुं ऋत्विग्याज्यौ च भोजयेत् ॥

इति । एषां पूर्वोक्तानां वेदपारगादीनां एषः भिन्नो विप्रवर्गः प्रथमः श्रेष्ठः । अनुकल्पः प्रथमकल्पादधमकल्पः । 'मुख्य स्स्यात्प्रथमः कल्पोऽनुकल्पस्तु ततोऽधमः' इत्यमरसिंहाभिधानात् । अयं 'मातामहं मातुलं च' इत्यादिना वक्ष्यमाणः अधमः कल्पः सदा सद्भिरनुष्ठित इत्यर्थः । गुरुरत्र विद्यागुरुः, न तु पिता । विट्पतिः जामाता अतिथिर्वा, अतिथिरित्यन्ये वदन्तीति देवस्वामिनाऽभिधानात् । प्रथमकल्पलाभेऽनुकल्पानुष्ठाने तु दोषमाह स एव—

प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते ।
न सांपरायिकं तस्य दुर्मतेर्विद्यते फलम् ॥

प्रभुः संपादने समर्थः । साम्पराय उत्तरकालः । 'युद्धायत्योः साम्परायः' इत्यमरसिंहाभिधानात् । एवञ्चायमर्थः—साम्पराये भविष्यत्काले स्वर्गादिकं फलं न विद्यते न सिद्ध्यति । विष्णुपुराणेऽप्यनुकल्प उक्तः—

पितृव्यगुरुदौहित्रान् ऋत्विक्स्वस्रीयमातुलान् ।
पूजयेद्धव्यकव्येन वृद्धानतिथिबान्धवान् ॥

स्वस्रीयो भागिनेयः। अत्र पितृव्यमृत्विजं च हव्येन पूजयेत्। गुरुदौहित्रादीतरान् कव्येनेति सम्बन्धः कार्यः। 'षड्भ्यस्तु पुरुषेभ्योऽर्वागश्राद्धेयास्तु गोत्रिणः' इति षड्भ्योऽर्वाचीनस्य पितृव्यादेः कव्येन पूजनस्यात्रिणा निषेधात्, तथा—

पिता पितामहो भ्राता पुत्रो वाऽथ सपिण्डकः।
न परस्परमर्घ्यास्स्युर्न श्राद्धे ऋत्विजस्तथा॥
ऋत्विक्पुत्रादयो ह्येते सकुल्या ब्राह्मणा द्विजाः।
वैश्वदेवे नियोक्तव्याः यद्येते गुणवत्तराः॥

इति हव्येन पूजनीयत्वस्य तेनैव विधानाच्च। यद्यामन्त्रयीतेत्यनुवृत्तौ कात्यायनेनोक्तम्—'अभावे शिष्यान् स्वाचार्यान्' इति। अत्रापि वैश्वदेवार्थमिति शेषो द्रष्टव्यः। 'गुणवदलाभे सोदर्योऽपि भोजयितव्यः' इत्यभिधायानन्तरं 'एतेनान्तेवासिनो व्याख्याताः' इत्यापस्तम्बेनाभिधानात्। सोदर्योऽपि वैश्वदेवस्थाने भोजयितव्यो न पुनः पित्रादिब्राह्मणस्थान इति हि प्राक्प्रतिपादितम्। तेन अन्तेवासिनामपि तत्स्थान एव निषेधः। यत्तु पङ्क्तिपावनानुक्त्वा बोधायनेनोक्तं 'तदभावे रहस्यं ऋचो यजूंषि सामानि श्राद्धमहिमानः तस्मादेवंविदं सपिण्डमप्याशयेत्' इति, तदप्यात्रेयवचनानुरोधाय षड्भ्यः पुरुषेभ्योऽर्वाचीनसपिण्डविषयं न भवति, किन्तु समनोदकविषयं, सपिण्डशब्दस्य समानोदकेऽप्युपचारेण प्रयोगसम्भवात्। अत्रिणा तु स्पष्टमुक्तं—

षड्भ्यस्तु परतो भोज्याः श्राद्धे स्युः गोत्रजा अपि ।

इति। अथवा सपिण्डशब्दो मुख्योस्तु, किंतु श्रेष्ठस्य समानोदकस्याप्यभावे त्रिभ्यः सपिण्डपुरुषेभ्यः परो यः सपिण्डः श्रेष्ठः तमाशयेदित्यर्थोऽवगन्तव्यः। तथाच सपिण्ड इत्यनुवृत्तौ गौतमः— 'भोजयेदूर्ध्वं त्रिभ्यो गुणवन्तं' इति। मनुस्त्वनुकल्पान्तरमाह—

काम श्राद्धेऽर्चयेन्मित्रं नाभिरूपमपि त्वरिम् ।
द्विषता हि हविर्भुक्तं भवति प्रेत्य निष्फलम् ॥

इति। अभिरूपमपि विद्वांसमपीत्यर्थः । काममित्यभिधानात् अनुकल्पोऽयमिति गम्यते । अयं त्वनुकल्पः पूर्वोक्तानामनुकल्पानामभावे द्रष्टव्यः,

न श्राद्धे भोजयेन्मित्रं धनैः कार्योऽस्य सङ्ग्रहः ।
नारिं न मित्रं यं विन्द्यात् तं श्राद्धे भोजयेद्द्विजम् ॥
यस्य मित्रप्रधानानि श्राद्धानि च हवींषि च ।
तस्य प्रेत्य फलं नास्ति श्राद्धेषु च हविष्षु च ॥

इति निन्दार्थवादेन स्वेनैव निषिद्धस्य मित्रस्य 'कामं श्राद्धेऽर्चयेन्मित्रं' इति पुनरनुशयाभ्युपगमेनानुकल्पादप्यधमत्वावगमात्। वसिष्ठोपि सगुणानामनुकल्पानामभावे निर्गुणानामनुकल्पतया स्वीकारमाह—

आनृशंस्यं परो धर्मो याचते यत्प्रदीयते ।
अयाचतः सीदमानान् सर्वोपायैर्निमन्त्रयेत् ॥

आनृशंस्यं परः उत्कृष्टो धर्मः । तेन सगुणानामनुकल्पाना-

मभावे निर्गुणायापि याचते यत्प्रदीयते तदप्यनुकल्पो भवति। अयाचतस्सीदमानान् अयाचनशीलत एव कारणात् सीदतो निर्गुणानपि सगुणानामनुकल्पानामलाभे सर्वोपायै र्यादृशैस्ते निमन्त्रणमभ्युपगच्छन्ति तादृशैरुपायैर्निमन्त्रयेदित्यर्थः। सर्वोपायैर्निमन्त्रयेदित्यादरेण निमन्त्रणं वदन् अयाचनेन सीदतामलाभे याचते प्रदानमिति दर्शयति। एवंविधविप्रेषु सदाचारवैकल्यदर्शनेपि निन्दा न कार्येत्याह स एव—

युगेयुगे तु ये धर्माः तेषु धर्मेषु ये द्विजाः।
तेषां निन्दा न कर्तव्या युगरूपा हि ते द्विजाः॥

युगेयुगे तु ये धर्माः युगानुरूपाः रागद्वेषादितारतम्यनिबन्धना येऽप्यसत्यभाषणादयो दुस्स्वभावाः तेषु धर्मेषु ये द्विजाः तेषां निन्दा न कर्तव्या। युगानुरूपविप्रेष्वपि यथासम्भवं श्रेष्ठा एव ग्राह्याः। अत एव भविष्यपुराणे अप्रशस्तविप्राणां दानादावपरिग्राह्यत्वमुक्तम्—

वैश्वदेवेन ये हीना आतिथ्येन च वर्जिताः।
सर्वे ते वृषला ज्ञेया प्राप्तवेदा अपि द्विजाः॥
न यस्य वेदो न जपो न विद्या च विशां पते।
स शूद्र इव मन्तव्य इत्याह भगवान्विभुः॥
अव्रतानाममन्त्राणा मदयानां च भारत।
प्रतिग्रहो न दातव्यो न शिला तारयेच्छिलाम्॥
ब्राह्मणातिक्रमो नास्ति मूर्खे वेदविवर्जिते।

ज्वलन्तमग्निमुत्सृज्य न हि भस्मनि हूयते ॥

वैश्वदेवग्रहणं पञ्चमहायज्ञानामुपलक्षणार्थम् । शिला शिलान्तरम् । वेदविवर्जिते भोजनाद्यप्रदानेऽपि नास्ति ब्राह्मणातिक्रम इत्यर्थः । एतदत्यन्तासम्बन्धिब्राह्मणविषयम् । कथञ्चित्सम्बन्धिब्राह्मणविषयेऽपि तत्रैवोक्तं—

गायत्रीमात्रसारोपि ब्राह्मणः पूज्यतां गतः ।
गृहासंनो विशेषेण न भवेत्पतितस्स चेत् ॥

गृहासंनः प्रातिवेश्यादिः । विशेषेणेति वदन् कथञ्चित्सम्बन्ध्यपि नातिक्रमणीय इति दर्शयति । श्रेष्ठसन्निकृष्टातिक्रमे तु षट्त्रिंशन्मते दोष उक्तः—

सन्निकृष्टमधीयानं ब्राह्मणं यो व्यतिक्रमेत् ।
भोजने चैव दाने च हन्यात्त्रिपुरुषं कुलम् ॥

यस्तु सन्निकृष्टोऽनधीयानः तस्यातिक्रमेऽपि न दोषः । तथाच तत्रैवोक्तं—

यस्य त्वेकगृहे मूर्खो दूरस्थश्च गुणान्वितः ।
गुणान्विताय दातव्यं नास्ति मूर्खे व्यतिक्रमः ॥

व्यतिक्रमो व्यतिक्रमदोषो नास्तीत्यर्थः । मूर्खग्रहणं निर्गुणस्याप्युपलक्षणार्थम् ।

व्यतिक्रान्तुर्न दोषोस्ति निर्गुणं प्रति कर्हिचित् ।

इति भविष्यपुराणेऽभिधानात् । यत्पुनः पुराणान्तरेऽभिहितं—

यस्त्वासन्नमतिक्रम्य ब्राह्मणं पतितादृते ।

दूरस्थं भोजयेन्मूढो गुणाढ्यं नरकं व्रजेत् ॥
तस्मात्सम्पूजयेदेनं गुणं तस्य न चिन्तयेत् ।
केवलं चिन्तयेज्जातिं न गुणान्विततान् सदा ॥
संनिकृष्टं द्विजं यस्तु युक्तजातिं प्रियंवदम् ।
मूर्खं वा पतितं वाऽपि वृत्तहीनमथापि वा ॥
नातिक्रमेन्नरो विद्वान् दारिद्र्याभिहतं तथा ।

इति, तत् अनुकल्पतयोक्तशरीरतस्सन्निकृष्टदौहित्रजामात्रादिविषयम् । पूर्वोक्तं तु देशतस्सन्निकृष्टप्रातिवेश्यादिविषयमिति न विरोधः । अतएव शरीरतस्सन्निकृष्टमेकमुदाहृत्योक्तं मनुना—

व्रतस्थमपि दौहित्रं श्राद्धे यत्नेन भोजयेत् ।

इति । व्रतस्थं व्रतमात्रस्थं अध्ययनरहितमिति यावत् । द्विविधसन्निकृष्टविषयेऽपि गुणादिभिश्श्रेष्ठेऽतिक्रान्ते सति भवत्येव दोषः । तदप्युक्तं पुराणे—

सप्त पूर्वान् सप्त परान् पुरुषानात्मना सह ।
अतिक्रम्य द्विजवरं नरके पातयेत् खग ॥
तस्मान्नातिक्रमेत् प्राज्ञः ब्राह्मणान् प्रातिवेशिकान् ।
सम्बन्धिनस्तथा सर्वान् दौहित्रं विट्पतिं तथा ॥
भागिनेयं विशेषेण तथा बन्धून् खगाधिप ।
नातिक्रमेन्नरस्त्वेतानमूर्खानपि गोपते ॥
अतिक्रम्य महारौद्रं रौरवं नरकं व्रजेत् ।

इति । अमूर्खानपीत्यपिशब्दः पादपूरणार्थः ।

अज्ञातकुलनामानं तत्कालं समुपस्थितम् ।
बुभुक्षुमागतं श्राद्धं याचमानमकिञ्चनम् ॥
ब्राह्मणं प्राहुरतिथिम् ............... ।

इत्युक्तातिथिलक्षणलक्षितोऽपि विप्रो नातिक्रमणीयः ॥

अतिथिर्यस्य नाश्नाति तच्छ्राद्धं न प्रशस्यते ।

इति शातातपस्मरणात् । अतिथेरप्यासन्नस्यैव गुणविद्यापरीक्षणं न कर्तव्यम् । तथा पुराणं—

अविज्ञातं द्विजं श्राद्धे न परीक्षेत्सदा बुधः ।
सिद्धा हि विप्ररूपेण चरन्तीह महीतले ॥

अविज्ञातं अविज्ञातकुलनामादिकमतिथिमिति यावत् । सिद्धाः विदितात्मतत्त्वाः ॥

इति स्मृतिचन्द्रिकायां श्राद्धभोजनीय ब्राह्मणनिरूपणम्.

---

## अथ भोजनीयतयोक्तश्रोत्रियादिब्राह्मणेषु ये दोषसद्भावाद्वर्ज्यास्ते निरूप्यन्ते.

अत्र मनुः—

ये स्तेनाः पतिताः क्लीबाः ये च नास्तिकवृत्तयः ।
तान् हव्यकव्ययोर्विप्राननर्हान्मनुरब्रवीत् ॥
जटिलं चानधीयानं दुर्वालं कितवं तथा ।
याजयन्ति च ये पूगान् तांश्च श्राद्धे न भोजयेत् ॥

चिकित्सकान् देवलकान् मांसविक्रयिणस्तथा ।
विपणेन च जीवन्तो वर्ज्यास्स्युर्हव्यकव्ययोः ॥
प्रेष्यो ग्रामस्य राज्ञश्च कुनखी श्यावदन्तकः ।
प्रतिरोद्धा गुरोश्चैव त्यक्ताग्निर्वार्धुषिस्तथा ॥
यक्ष्मी च पशुपालश्च परिवेत्ता निराकृतिः ।
ब्रह्मद्विट् परिवित्तिश्च गणाभ्यन्तर एव च ॥
कुशीलवोऽवकीर्णी च वृषलीपतिरेव च ।
पौनर्भवश्च काणश्च यस्य चोपपतिर्गृहे ॥
भृतकाध्यापको यश्च भृतकाध्यापितश्च यः ।
शूद्राशिष्यो गुरुश्चैव वाग्दुष्टः कुण्डगोळकौ ॥
अकारणपरित्यक्ता मातापित्रोर्गुरोस्तथा ।
ब्राह्मैर्यौनैश्च सम्बन्धैः संयोगं पतितैर्गतः ॥
अगारदाही गरदः कुण्डाशी सोमविक्रयी ।
समुद्रयायी वन्दी च तैलिकः कूटकारकः ॥
पित्रा विवदमानश्च केकरो मद्यपस्तथा ।
पापरोग्यभिशस्तश्च दाम्भिको रसविक्रयी ॥
धनुश्शराणां कर्ता च यश्चाग्रेदिधिषूपतिः ।
मित्रध्रुक् द्यूतवृत्तिश्च पुत्राचार्यस्तथैव च ॥
भ्रामरी गण्डमाली च श्वित्र्यथो पिशुनस्तथा ।
उन्मत्तोऽन्धश्च वर्ज्यास्स्युर्वेदनिन्दक एव च ॥
हस्तिगोश्वोष्ट्रदमको नक्षत्रैर्यश्च जीवति ।

पक्षिणां पोषको यश्च युद्धाचार्यस्तथैवच ॥
स्रोतसां भेदको यश्च तेषां चावरणे रतः ।
गृहसंवेशको दूतो वृक्षारोपक एवच ॥
श्वक्रीडी श्येनजीवीच कन्यादूषक एवच ।
हिंस्रो वृषलपुत्रश्च गणानां चैव याजकः ॥
आचारहीनः क्लीबश्च नित्यं याचनकस्तथा ।
कृषिजीवी श्लीपदी च सद्भिर्निन्दित एव च ॥
औरभ्रको माहिषकः परपूर्वापतिस्तथा ।
प्रेतनिर्यातकश्चैव वर्जनीयाः प्रयत्नतः ॥
एतान्विगर्हिताचारानपाङ्क्तेयान्नराधमान् ।
द्विजातिप्रवरो विद्वानुभयत्र विवर्जयेत् ॥

इति । अत्र यद्यद्व्याख्यागम्यं तत्तद्व्याख्यायते—स्तेना ब्राह्मणसुवर्णव्यतिरिक्तद्रव्यापहर्तारः, ब्राह्मणस्वर्णहर्तॄणां पतितपदेनैव वर्ज्यत्वस्याभिधानात् । स्वकर्मत्यागिनो वा स्तेनाः ।

ये व्यपेताः स्वकर्मभ्यः स्तेनास्ते परिकीर्तिताः ।

इति यमस्मरणात् । पतिता महापातकिनः । क्लीबास्तु षड्विधाः देवलेन दर्शिताः—

षण्डको वातजश्चैव षण्ढः क्लीबो नपुंसकः ।
कीलकश्चेति षोढाऽयं क्लीबभेदो विभाषितः ॥

षण्डकादीनां लक्षणं स्वयमेव दर्शयति—

तेषां स्त्रीतुल्यवाक्चेष्टः स्त्रीधर्मा षण्डको भवेत् ।

पुमान् भूत्वा स्वलिङ्गानि पश्चाच्छिन्द्यात्तथैव च ॥
वातजो नाम षण्डः स्यात् स्त्रीषण्डो वाऽपि नामतः ।
असल्लिङ्गोऽथ षण्डस्स्यात् षण्डस्तु म्लानमेहनः ॥
अमेध्याशी पुमान् क्लीबो नष्टरेता नपुंसकः ।
स कीलक इति ज्ञेयो यः क्लैब्यादात्मनः स्त्रियम् ॥
अन्येन सह संयोज्य पश्चात्तामेव सेवते ।

इति । नास्ति लोकान्तरफलदं कर्म नास्ति देवतेत्यादिमतिमन्तो नास्तिकाः । तेभ्यो वृत्तिर्जीवनं येषां श्रोत्रियादीनां ते नास्तिकवृत्तयः । जटिलो ब्रह्मचारी अनधीयानो वेदाध्ययनरहितः । नन्वनधीयानजटिलस्य अश्रोत्रियत्वेन प्राप्त्यभावादयुक्तः प्रतिषेधः । उच्यते—

व्रतस्थमपि दौहित्रं श्राद्धे यत्नेन भोजयेत् ।

इत्यनेनानुकल्पतया भोजनीयब्राह्मणेषु दौहित्रः ब्रह्मचारी व्रतमात्रस्थः अनधीयानोपि भोजनीयतयोक्तः । तत्र दौहित्रग्रहणमतन्त्रमिति भ्रान्त्या कथञ्चित्प्राप्तोत्र निषिध्यत इति नातीव व्यर्थः । केचित्–अनधीयानगृहस्थस्याश्रोत्रियस्यापि प्राप्त्यर्थमित्याहुः । तदयुक्तं,

वेदविद्याव्रतस्नातान् श्रोत्रियान् गृहमेधिनः ।
भोजयेद्धव्यकव्येन विपरीतांस्तु वर्जयेत् ॥

इति विशेषेण वर्ज्यतयोक्तस्य गृहस्थस्य प्राप्त्यसम्भवात् । दुर्वालः खल्वाटकः, कपिलकेशो वा अत्यन्तकोपनो वा ।

तदेतत्सर्वं सङ्ग्रहकारेणोक्तं—

निश्चिताध्ययनेनैव गुणेन स्वीकृतोऽखिलः ।
मूर्खो यो ब्रह्मचारी तु जटिलस्तं न भोजयेत् ॥
दौहित्रादिवदत्रापि भ्रान्त्या प्राप्तो निषिध्यते ।
ईदृशस्य गृहस्थस्य प्राप्तचर्थमपरे विदुः ॥
तन्न युक्तमविद्वांश्च गृहस्थश्च निरुध्यते ।
खल्वाटकश्च दुर्वालः कपिलश्चण्ड एव वा ॥

इति। पूगयाजकाः बहूनां प्रत्येकं याजकाः । श्राद्धग्रहणमत्र दैवेऽभ्यनुज्ञानार्थम् । दैवस्यापि प्रदर्शनार्थत्वे तु व्यर्थमेव स्यात्। पूर्वापरपर्यालोचनयैव दैवे पित्र्ये च प्रतिषेधावगतेः। अत एव सङ्ग्रहकारः—

दुर्वालादीन् श्राद्ध एव सूत्रेणाह च गौतमः ।

इति। मन्वादीनां मतत्वेनेति शेषः । तथाच ब्राह्मणपरीक्षाधिकारे गौतमः—'हविष्षु चैवं दुर्वालादीन् श्राद्धे एवैके' हविष्षु दैवेऽपि च एवं पित्र्यवत् परीक्ष्य दुर्वालादीन् विवर्जयेत्। एके तु मन्वादयः दुर्वालादीन् न पित्र्ये भोजयेत् न पुनर्दैवेऽपीति मन्यन्त इति । चिकित्सका वृत्त्यर्थं धर्मार्थं च। तैत्तिरीयकश्रुतौ—'तस्माद्ब्राह्मणेन भेषजं न कार्यमपूतो ह्येषोऽमेध्यो यो भिषक्' इत्यविशेषेण भिषजो निन्दादर्शनात्। देवलकस्य स्वरूपं देवलेन दर्शितं—

देवार्चनपरो विप्रो वित्तार्थी वत्सरत्रयम् ।
स वै देवलको नाम हव्यकव्येषु गर्हितः ॥
देवकोशोपजीवी तु नाम्ना देवलको भवेत् ।
अपाङ्क्तेयस्स विज्ञेयः सर्वकर्मसु सर्वदा ॥

इति । विपणो वाणिज्यं, तेनानापद्यपि जीवन्तो ब्राह्मणाः विपणजीविनः । विपणजीवितयैव प्रतिषिद्धस्य मांसविक्रयिणः पुनः प्रतिषेधोऽत्यन्तवर्ज्यत्वख्यापनार्थः । तेन अध्ययनादिविक्रायिणां श्रोत्रियादीनामनुकल्पतयोपादेयत्वमवगम्यते । अथवा आपद्यपि मांसविक्रयिणो वर्ज्याः । प्रेष्यः परिचारकः । कुनखी स्वभावादेव मृतनखः । श्यावदन्तः स्वभावात्कृष्णदन्तः । अनयोः पुराकृतकर्मशेषसम्बन्धादेव प्रतिषेधः । गुरोः प्रतिरोद्धा स्पर्धी । त्यक्ताग्निः शास्त्रोक्तत्यागकारणमन्तरेण त्यक्तश्रौतस्मार्ताग्निः । वार्धुषिकः स्वल्पवृद्ध्या धनमादाय अधिकवृद्ध्या पुरुषान्तरे धनप्रयोक्ता, स्वल्पमूल्येन पण्यं क्रीत्वा तद्विक्रयेण बहुमूल्यसाधको वा । तथाच स्मृतिः—

समार्घं धनमुद्धृत्य महार्घं यः प्रयच्छति ।
स वै वार्धुषिको नाम ब्रह्मवादिषु गर्हितः ॥
समार्घं पण्यमादाय महार्घं यः प्रयच्छति ।
स वै वार्धुषिको नाम ब्रह्मवादिषु गर्हितः ॥

यक्ष्मी क्षयरोगी । पशुपालः अनापदि पाशुपाल्यवृत्त्युपजीवी ब्राह्मणः । परिवेत्तृपरिवित्त्योस्स्वरूपं मनुना स्वेनैव प्रदर्शितं—

दाराग्निहोत्रसंबन्धं कुरुते योऽग्रजे स्थिते ।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः ॥

अग्निहोत्रशब्देनाग्निहोत्राद्युत्तरक्रतुप्रयोज्यमाधानमुक्तम् । उक्तं च साक्षाद्गर्गेण—

सोदर्ये तिष्ठति ज्येष्ठे न कुर्याद्दारसङ्ग्रहम् ।
आवसथ्यं तथाऽऽधानं पतितस्तु तथा भवेत् ॥

आवसथ्यमावसथ्याधानं, दायविभागकाले क्रियमाणमौपासनाधानमिति यावत् । विवाहकाले क्रियमाणौपासनाग्नेश्च 'न कुर्याद्दारसङ्ग्रहम्' इत्यनेनैवार्थान्निरस्तत्वात् । अतः,

औपासनं समादध्यात्स्वकाले परिवेदयन् ।

इति ब्रह्मगर्भवचनेऽपि स्वकालशब्देन दायविभागकाल उक्तः, न तु विवाहकालोपीत्यवगन्तव्यम् । आधानं गार्हपत्याद्याधानम् । पतितो भवेत् उपपातकी भवेदित्यर्थः । उपपातकिपरिगणनवचने परिवेत्तृपरिवित्त्योः कीर्तितत्वात् । सोदर्यग्रहणादसोदर्ये तिष्ठति ज्येष्ठे कनिष्ठस्य दारसङ्ग्रहादौ कृतेऽपि न पातित्यदोष इति गम्यते । शातातपेन तु असोदर्यविषये दोषाभावः साक्षादुक्तः—

पितुः पुत्राश्च सापत्नाः परनारीसुतास्तथा ।
दाराग्निहोत्रसंयोगे न दोषः परिवेदने ॥

इति । सापत्नाः असोदरभ्रातरः । परनारीसुताः स्वपित्रा परक्षेत्रे उत्पादिताः द्व्यामुष्यायणभूताः । पितृव्यपुत्रादिषु ज्ये-

ष्ठेषु दाराग्निहोत्रसंयोगरहितेषु तिष्ठत्स्वपि कनिष्ठेन दाराग्निहोत्रसंयोगे कृते परिवेदनदोषो नास्तीत्यर्थः। परनारीपुत्र ग्रहणं दत्तपुत्रादेरपि प्रदर्शनार्थम्। अत एव यमः—

पितृव्यपुत्रान् सापत्नान् परपुत्रांस्तथैव च।
दाराग्निहोत्रधर्मेषु नाधर्मः परिविन्दतः॥

परपुत्राः दानक्रयादिना स्वापतुः पुत्रत्वमापन्नाः भ्रातरः। सोदर्ये ज्येष्ठे दाराग्निहोत्रसंयोगरहिते तिष्ठति परिवेदने कचिद्दोषो नास्तीत्याह शातातपः—

क्लीबे देशान्तरस्थे च पतिते भिक्षुकेऽपि वा।
योगशास्त्राभियुक्ते च न दोषः परिवेदने॥

भिक्षुकः परिव्राजकः। योगशास्त्राभियुक्तो विरक्तः। कात्यायनोपि—

देशान्तरस्थक्लीबैकवृषणांश्च सहोदरान्।
वेश्यातिसक्तपतितशूद्रतुल्यातिरोगिणः॥
जडमूकान्धबधिरकुब्जवामनखोडकान्।
अतिवृद्धानभार्यांश्च कृषिसक्तान्नृपस्य च॥
धनवृद्धिप्रसक्तांश्च कामतोकारिणस्तथा।
कुहकोन्मत्तचोरांश्च परिविन्दन्न दुष्यति॥

खोडकः भग्नचरणद्वयः। अभार्याः नैष्ठिकब्रह्मचारिणः। कामतोकारिणः स्वेच्छयैव विवाहनिवृत्तिकारिणः। अत्र ये विवाहेऽनधिकारिणः क्लीबादयः तेषां कालप्रतीक्षणाभावेनापि

नास्ति परिवेदनदोषः । ये तु विवाहाधिकारिणो देशान्तरस्थविरक्तवेश्यातिसक्तशूद्रतुल्यातिवृद्धकृषिसक्तराजधनवृद्धिप्रसक्तकामतोकारिकुहकचोराः, तेषां कालप्रतीक्षणेन परिवेदने तु न दोषः । तत्र देशान्तरस्थे अष्टवर्षादिकालः प्रतीक्षणीय इत्याह वसिष्ठः—

'अष्टौ दश द्वादश वर्षाणि ज्येष्ठभ्रातरमनिविष्टम
प्रतीक्षमाणः प्रायश्चित्ती भवति'

इति । देशान्तरगतस्य विवाहादावधिकारसम्भवादित्यभिप्रायः । अनिविष्टमकृतविवाहमित्यर्थः । अत्र द्वादशवर्षप्रतीक्षणं धर्मार्थं वाऽर्थार्थं वा देशान्तरगते ज्येष्ठे द्रष्टव्यम् । तथाच स्मृतिः—

द्वादशैव तु वर्षाणि ज्यायान्धर्मार्थयोर्गतः ।
न्याय्यः प्रतीक्षितुं भ्राता श्रूयमाणः पुनःपुनः ॥

भ्राता सहोदरः । धर्मार्थयोरिति विद्याया अपि प्रदर्शनार्थम् । अतएव गौतमेन 'नष्टे भर्तरि' इति प्रक्रम्य 'द्वादश वर्षाणि ब्राह्मणस्य विद्यासम्बन्धेन' इति भार्यायाः भर्तृप्रतीक्षणकालमुक्त्वा उक्तं 'भ्रातरि चैवं ज्यायसि यवीयान् कन्याग्न्याधेयेषु' इति । नष्टे भर्तरि कुत्र गत इत्यज्ञाते भर्तरि अत्यन्तदूरदेशान्तरगत इति यावत् । द्वादशवर्षाणि ब्राह्मणस्य विद्यासंबन्धेन ब्राह्मणस्य भर्तुः विद्याग्रहणार्थं देशान्तरगमने सति भार्यया द्वादशवर्षाणि प्रतीक्षणीयानीत्यर्थः । भ्रातरीति । ज्येष्ठे भ्रातरि अकृतविवाहे अकृताग्न्याधेये वा विद्याग्रहणार्थं देशान्तरगते

कनिष्ठो भ्राता कन्यापरिग्रहे अग्न्याधाने चैवं द्वादश वर्षाणि प्रतीक्ष्य तदुपरि प्रवर्तेतेत्यर्थः। कार्यान्तरार्थं देशान्तरगतविषये तु अष्टौ दश वेति पक्षद्वयम्। अत्रेदं विवक्षितं—देशान्तरगतस्याभिलषितकार्यं निर्वर्त्य प्रत्यागमनयोग्यकालेऽप्यनागतस्य इह लोके स्थितिसन्देहेन विवाहसम्भावनानिवृत्तौ न परिवेदनं दोषावहमिति। एवमेव विरक्तवेश्यातिसक्तादिष्वपि तत्तत्स्वभावस्य द्वादशवर्षादिचिरकालानुवृत्त्या विवाहसम्भावनानिवृत्तौ परिवेदनं न दोषावहमित्यभिप्रायो वेदितव्यः। अनेनैवाभिप्रायेण सुमन्तुनाऽप्युक्तम्—

व्यसनासक्तचित्तो वा नास्तिको वा तथाऽग्रजः।
कनीयान् धर्मकामस्तु आधानमथ कारयेत्॥

आधानग्रहणं विवाहस्याप्युपलक्षणार्थम्। क्लीबादयस्तु भ्रातरः किञ्चित्कालमपि न प्रतीक्षणीयाः, तेषां विवाहादौ स्वत एवायोग्यत्वेनानाधिकारात्। तथाच स्मृतिः—

उन्मत्तः किल्बिषी कुष्ठी पतितः क्लीब एव च।
राजयक्ष्म्यामयावी च न न्याय्यस्स्यात्प्रतीक्षितुम्॥
खञ्जवामनकुब्जेषु गद्गदेषु जडेषु च।
जात्यन्धे बधिरे मूके न दोषः परिवेदने॥

इति। एवमाधानाधिकारिणि ज्येष्ठे स्थितेऽपि तदनुमत्या परिवेदने तु न दोषः। तथाच वृद्धवसिष्ठः—

अग्रजश्च यदाऽनग्निरादध्यादनुजः कथम्।

अग्रजानुमतः कुर्यादग्निहोत्रं यथाविधि ॥

आधानाधिकार्यप्यग्रजो यदा आधानादिविधिमतिक्रम्यानाहिताग्निर्यावज्जीवमास्त इति कनिष्ठस्य निश्चयः तदा तदनुमतिं लब्ध्वाऽऽधानं कुर्यादित्यर्थः । अयमेवार्थः सुमन्तुनाऽप्युक्तः—

ज्येष्ठभ्राता यदा तिष्ठेदाधानं नैव कारयेत् ।
अनुज्ञातो हि कुर्वीत शङ्खस्य वचनं यथा ॥

ज्येष्ठभ्रातृग्रहणं पितुरापि प्रदर्शनार्थम् । तथाच स एव—

पितुर्यस्य तु नाधानं कथं पुत्रस्तु कारयेत् ।
अग्निहोत्राधिकारोस्ति शङ्खस्य वचनं यथा ॥

पितृग्रहणं पितामहस्यापि प्रदर्शनार्थम् । अत एवोशना—

पिता पितामहो यस्य अग्रजो वाऽथ कस्यचित् ।
तपोऽग्निहोत्रमन्त्रेषु न दोषः परिवेदने ॥

पूर्वोक्त एव विषये सत्यामनुज्ञायामेतदपि वचनं द्रष्टव्यम् । मन्त्रशब्दो वेदोपलक्षणार्थः । तथाच शातातपः—

नाग्नयः परिविन्दन्ति न वेदा न तपांसि च ।
न च श्राद्धं कनिष्ठस्य या च कन्या विरूपिका ॥

यथा वेदांस्तपांसि श्राद्धं च अधिकृत्य ज्येष्ठे अध्ययनतपश्श्राद्धराहित्येन स्थितेऽपि तदनुज्ञामन्तरेणापि कनिष्ठेनानुष्ठितानि परिवेदनहेतवो न भवन्ति, तथाऽग्नयोपि ज्येष्ठादरभ्यनुज्ञया कनिष्ठेनाहिता इत्यर्थः । या च कन्या विरूपिकेत्य

स्यायमर्थः—विवाहाधिकारिण्यां ज्येष्ठायां कन्यायां विरूपायां अनूढायां स्थितायां तदनुज्ञां विनाऽपि कनिष्ठाया विवाहादिकालातिक्रमभीत्या कृतो विवाहो न दोषायेति। एवं चैवंविधविषयव्यतिरिक्तविषये कन्यास्वपि परिवेदने वरपरिवेदनोक्तं सर्वमनुसन्धेयम्। अनुजस्य तु ज्येष्ठभ्रात्रनुज्ञयाऽपि विवाहदोषोऽस्तीत्याह हारीतः—

सोदराणां तु सर्वेषां परिवेत्ता कथं भवेत्।
दारैस्तु परिविद्यन्ते नाग्निहोत्रेण नेज्यया॥

विवाहादावधिकारिभूतज्येष्ठेनानुज्ञातसोदरविषयमेतत्—'दारैस्तु परिविद्यन्ते' इति। वृद्धयाज्ञवल्क्यस्तु ज्येष्ठोपि कदाचिदाधानेन परिवेत्ता भवतीत्याह—

आवसथ्यमनादृत्य त्रेतायां यः प्रवर्तते।
सोऽनाहिताग्निर्भवति परिवेत्ता तथोच्यते॥

इति। अयमर्थः—यथा दायविभागकाले औपासनाधानं यस्य स्वगृह्योक्तं, असौ तदकृत्वा ब्रह्मौदनपाकं निर्मन्थ्याग्निना कृत्वा गार्हपत्याद्याधानं यदि कुरुते सोऽनाहिताग्निर्भवति। प्रथमाधाने निर्मन्थ्याग्निना ब्रह्मौदनपाकस्याशास्त्रार्थतया गार्हपत्यादिशब्दवाच्यालौकिकसंस्कारस्यानुत्पत्तेः। तथाच प्रथममाधेयमौपासनाग्निमनाधाय गार्हपत्याद्याधानकरणात्परिवेत्तेत्यपि गीयत इत्यलं परिवेत्तृपरिविचित्तिशब्दार्थकथनप्रपञ्चेन॥

निराकृतिशब्दार्थस्तु देवलेन दर्शितः—

अधीत्य विस्मृते वेदे भवेद्विप्रो निराकृतिः ।

इति । कात्यायनस्त्वन्यथा निराकृतिशब्दार्थमाह—

यस्त्वाधायाग्निमालस्यादेवादीनिह नेष्टवान् ।
निराकर्ताऽमरादीनां स विज्ञेयो निराकृतिः ॥

इति । ब्रह्मद्विट् ब्राह्मणानां द्वेष्टा । परिवित्तिशब्दस्तु परिवेत्तृशब्दव्याख्यानावसरे व्याख्यातः । गणः मद्यपायी ब्राह्मणादिः, तन्मध्यगो गणाभ्यन्तरः । कुशीलवो गायकनर्तकादिः । अवकीर्णिनमाह देवलः—

गूढलिङ्ग्यवकीर्णी स्यात् यश्च भग्नव्रतस्तथा ।

इति । गूढलिङ्गी दण्डमेखलादिब्रह्मचारिलिङ्गत्यागी । भग्नव्रतः स्त्र्युपगमेन स्खलितब्रह्मचर्यः ।

व्रती यस्त्रियमभ्येति सोऽवकीर्णी निरुच्यते ।

इति यमस्मरणात् । वृषलीपतिरपि देवलेन दर्शितः—

वन्ध्या तु वृषली ज्ञेया वृषली च मृतप्रजा ।
अपरा वृषली ज्ञेया कुमारी या रजस्वला ॥
यस्त्वेनामुद्वहेत्कन्यां ब्राह्मणो ज्ञानदुर्बलः ।
अश्राद्धेयमपाङ्क्तेयं तं विद्याद्वृषलीपतिम् ॥

कन्यावस्थायां या रजस्वला जाता तां य उद्वहेत् तमश्राद्धेयं अपाङ्क्तेयं वृषलीपतिं विद्यादित्यन्वयः । एवञ्च तृतीयवृषलीपतिरेवात्र मनुनोक्त इति मन्तव्यम् । पुनर्भूः द्विरूढा तस्याः यो द्वितीयविवाहे सति पतिः तेन तस्यामुत्पादितः पुत्रः पौनर्भवः ।

काण एकचक्षुः । 'यस्य चोपपतिर्गृहे' इत्येतद्देवलेन स्पष्टीकृतं—

परदाराभिगो मोहात्पुरुषो जार उच्यते ।
स एवोपपतिर्ज्ञेयो यस्सदा संवसेद्गृहे ॥

वेतनेन भृत उपाध्यायो भृतकः । स्वार्थे कप्रत्ययः । भृतकश्चासावध्यापकश्चेति भृतकाध्यापकः । भृतकेनाध्यापकेनाध्यापितश्शिष्यो भृतकाध्यापितः । एतावुपपातकिनौ ।

भृतकाध्यापको यश्च भृतकाध्यापितश्च यः ।
तावुभौ पतितौ विप्रौ स्वाध्यायक्रयविक्रयात् ॥

इति देवलस्मरणात् । पतितौ उपपातकिनावित्यर्थः । उपपा॰ मध्ये एतयोरापि गणनात् । शूद्रस्य शिष्यः शूद्रशिष्यः शूद्रस्येति शेषः, तस्य बुद्धिस्थत्वात् । वाग्दुष्ट॰ दर्शितः—

हुंकारं हसनं चैव लोके यच्च विगर्हितम् ।
अनुकुर्यादनुब्रूयाद्वाग्दुष्टं तं नरं विदुः ॥

कुण्डगोलकौ स्वेनैव मनुना दर्शितौ—

परदारेषु जायेते द्वौ सुतौ कुण्डगोळकौ ।
जीवे भर्तरि कुण्डस्स्यान्मृते भर्तरि गोळकः ॥

समब्राह्मणभूताभ्यां जायापतिभ्यामुत्पादितः सुतो ब्राह्मणो भवति, न पुनर्ब्राह्मणभूतजारेण ब्राह्मणजातीयजारिण्यां समुत्पादितः ।

सर्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु ।

आनुलोम्येन सम्भूताः जात्या ज्ञेयास्तथैव ते ॥

इति जातिनिर्णये मनुनैवाभिधानात् । तेन कुण्डगोळकयोरब्राह्मणयोः श्राद्धे अभोजनीयत्वेन कथञ्चिदपि प्राप्तिर्नास्तीति 'वाग्दुष्टः कुण्डगोळकौ' इत्यत्र कुण्डगोळकयोरुपादानं व्यर्थं स्यात् । अत्रोत्तरमुक्तं सङ्ग्रहकारेण—

नियोगोत्पादितौ श्राद्धे निषिद्धौ कुण्डगोळकौ ।
अब्राह्मण्यात्कुतः प्राप्तिः शूद्रवज्जारजातयोः ॥

इति । यद्यपि जारजातयोः कुण्डगोळकयोः ब्राह्मणत्वाभावेन शूद्रवदेव श्राद्धप्राप्त्यभावात् निषेधो न सम्भवति । तथाऽपि नियोगोत्पादितयोः कुण्डगोळकयोः परदारोत्पन्नयोरपि शास्त्रीयमार्गानुसारेणोत्पादितत्वात् ब्राह्मण्यमस्तीति तावेव कुण्डगोळकौ मनुना श्राद्धे निषिद्धावित्यर्थः । तदेतदयुक्तं—नियोगोत्पादितयोरजारजातत्वेनाकुण्डगोळकत्वात् । अजारजत्वं च नियुक्तस्याजारत्वात् । तथाच देवलः—

परदाराभिगो मोहात्पुरुषो जार उच्यते ।

इति । मोहादिति पदं नियोगात् परदाराभिगः पुरुषो न जार इत्याह । अजारजातौ न कुण्डगोळकौ । तथा च स एव—

अमृते जारजः कुण्डो मृते भर्तरि गोळकः ॥

इति । जारज इति वदन्नियुक्तो न कुण्डो न गोळकश्चेत्याह । बृहस्पतिना त्वनियुक्तजावेव कुण्डगोळकाविति स्पष्टमुक्तं—

पारदार्यमधर्म्यं तु तज्जातौ कुण्डगोळकौ ।
अश्राद्धेयावभोज्यान्नौ क्षेत्रजाद्यास्तथा सुताः ॥

इति । यदधर्म्यं पारदार्यं तज्जातावेव कुण्डगोळकौ, न पुनः पारदार्यमात्रजावित्यर्थः । अतश्च नियोगे सति पारदार्यस्याधर्म्यत्वाभावात्तदुत्पन्नौ न कुण्डगोळकौ । किंतु क्षेत्रजावेव । अतस्तयोः पृथक् प्रतिषेधार्थं 'क्षेत्रजाद्यास्तथा सुताः' इत्युक्तम् । तस्मात्—

नियोगोत्पादितौ श्राद्धे निषिद्धौ कुण्डगोळकौ ।

इति सङ्ग्रहकारोक्तमयुक्तमेव । अतोऽन्यथा समाधिरभिधीयते— 'वाग्दुष्टः कुण्डगोळकौ' इत्यत्र कुण्डगोळकशब्दौ गौण्या वृत्त्या नियोगोत्पादितक्षेत्रजपुत्रयोर्वर्तेते । तत्र जीवति भर्तरि परदारेषु जातत्वसाम्यात्कुण्डशब्दो वर्तते । मृते भर्तरि जाते क्षेत्रजे मृते भर्तरि परदारेषु जातत्वसाम्यात् गोळकशब्दः । एवमुक्तकुण्डगोळकयोर्ब्राह्मणत्वेन श्राद्धे प्राप्तिसम्भवात्प्रतिषेधोऽर्थवान् । एवं तर्हि पूर्वोक्ते 'पारदार्यमधर्म्यं तु' इत्यादिबार्हस्पत्यवचने 'क्षेत्रजाद्यास्तथा सुताः' इत्यनेनैव क्षेत्रजपुत्रप्रतिषेधस्य सिद्धत्वात् 'कुण्डगोळकावश्राद्धेयौ' इत्येतन्मुख्यकुण्डगोळकप्रतिषेधार्थमित्यवश्यं वक्तव्यम् । तच्चायुक्तं, मुख्यकुण्डगोळकयोरब्राह्मणत्वेन शूद्रवदप्राप्तेः प्रतिषेधानर्थक्यात् । उच्यते—कुण्डगोळकयोर्जात्यन्तरत्वेन व्यवहाराभावात् ब्राह्मण्यां ब्राह्मणोत्पादितत्वमात्रेण ब्राह्मणोऽयमिति श्राद्धादौ स्वीकारो

भवति । तेन मन्दानुग्रहार्थं परमार्थतोऽप्राप्तयोरपि तयोः प्रतिषेधो बृहस्पतिना कृत इत्यलं कुण्डगोळकप्रतिषेधप्रयोजनसमर्थनप्रपञ्चेन ॥

अकारणपरित्यक्तेत्यस्यायमर्थः—‘त्यजेत्पितरं राजघातकम्’ इत्यादिशास्त्रोक्तत्यागकारणेऽविद्यमानेऽपि मातापित्रोर्गुरोर्वा परित्यक्तेति । गुरुरत्राचार्यो न पिता, तस्य स्वशब्देनैवोपात्तत्वात् । त्यागो ‘जीवतोर्वाक्यकरणम्’ इत्यादिशास्त्रोक्तशुश्रूषाद्यकरणम् ।

ब्राह्मैर्यौनैश्च सम्बन्धैस्संयोगं पतितैर्गतः ।

इति प्रतिषेधो व्यर्थः, ‘ये स्तेनपतिताः क्लीबाः’ इत्यत्र पतितग्रहणेन पञ्चविधपतितप्रतिषेधस्य प्रागेव कृतत्वात् । सत्यं, ब्राह्मैर्यौनैश्च सम्बन्धैस्संयोगमुपपातकिभिर्यो गतस्तस्यागत्या कदाचिद्भोजनीयत्वाङ्गीकारार्थोऽयं पुनः प्रतिषेध इति न व्यर्थः । सङ्ग्रहकारस्तु पञ्चविधपतितव्यतिरिक्तपतितप्रतिषेधकतया श्लोकार्थमुक्त्वा वैयर्थ्यं परिहृतवान्—

ब्राह्मैर्यौनैश्च संम्बन्धैस्संबद्धा ब्रह्महादिभिः ।
सद्यो ये पतितास्तैर्यस्संयोगं पतितैर्गतः ॥
पतितस्स निषिद्धत्वात्तृतीयोऽत्र निषिध्यते ।

इति । ब्रह्महादिसम्बन्धात्सद्यो ये पतिताः तैः पतितैर्यस्संयोगं गतः सोऽत्र तृतीयः प्रतिषिध्यते । ‘तत्संयोगी च पञ्चमः’ इत्युक्तस्य पतितस्य प्रागेव निषिद्धत्वादित्यर्थः ॥

अगारदाही तु द्विधा देवलेन दर्शितः—

अगारदाही स ज्ञेयः प्रेतदग्धा धनेन यः ।

स चाप्यगारदाही स्याद्द्वेषाद्यो वेश्मदाहकः ॥

इति । कुण्डाशी कुण्डगोळकयोरन्नभोक्ता । तथाच कुण्डगोळकावभिधाय मनुनैवाभिहितम्—

यस्तयोरन्नमश्नाति स कुण्डाश्युच्यते द्विजः ।

इति । सोमविक्रयी सोमलताया विक्रेता । समुद्रयायी वहित्रमारुह्येति शेषः । वन्दी नृपादिस्तुतिपाठकः । तैलिकः तैलवृत्त्युपजीवी । कूटकारकः कूटस्य अपरमार्थस्यालेख्यादेः कारकः । पित्रा विवदमानः स्मृत्याचारव्यपेतमार्गेण पित्रा सह विप्रातिपद्यमानः । केकरोऽर्धदृष्टिः । मद्यपः सुराव्यतिरिक्तमद्यपः । सुरापस्य पतितपदेन प्रागेव प्रतिषेधात् । पापरोगी 'उन्मादस्त्वग्दोषो राजयक्ष्मा श्वासो मधुमेहो भगंदरो महोदरमश्मरीत्यष्टौ पापरोगाः' इति देवलोक्तपापरोगेष्वन्यतमरोगवान् । अभिशस्तः दोषकारितया केनाचित्सभायामावेदितः । दाम्भिकः धर्माचरणे शाठ्यवान् । रसविक्रयी क्षारादिरसविक्रयी । धनुश्शराणां कर्ता धनुषः शराणां च कर्ता । अग्रेदिधिषूपतिः अग्रेदिधिष्वाः पतिः । का पुनः अग्रेदिधिषूरित्यपेक्षिते देवलः—

ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेऽनुजा ।

सा चाग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषूर्मता ॥

इति । मित्रध्रुक् मित्रद्रोही । द्यूतवृत्तिः द्यूतजीवनः । पुत्राचार्यो नाम ग्रामगतगृहस्थकुमाराणामक्षरशिक्षकः ॥ तथाच सङ्ग्रहकारः-

पुत्राचार्यस्स विज्ञेयो ग्रामे योऽक्षरपाठकः ।

इति । अथवा पुत्र एवाचार्यो यस्य स पुत्राचार्यः । तथाच स एव—

पुत्रादवाप्तविद्यो वा पुत्राचार्यो निगद्यते ।

इति । भ्रामरी भ्रमरवद्वृत्त्यर्थमेवार्थार्जकः । तथाच स एव—

यः पोषयति वृत्त्यर्थं विभवान् भ्रामरी तु सः ।

इति । गण्डमाली गण्डमालाख्यरोगवान् । श्वित्री कुष्ठव्याधिना श्वेतत्वक् । पिशुनः स्वभावतो वृत्त्यर्थं वा परदोषसूचकः । उन्मत्तादयः प्रसिद्धाः । पक्षिणां पोषकः बद्धानां क्रीडार्थं पोषयिता । युद्धाचार्यो धनुर्वेदोपाध्यायः । स्रोतसां भेदकः प्रवाहस्य दिगन्तरे नेता, तेषां चावरणे रतः आवरणे गतिप्रतिबन्धार्थं मृदादिना मार्गनिरोधने रतः । गृहसंवेशकः वर्धकिवृत्त्या वर्तमानः । दूतस्सन्देशहरः । वृक्षारोपकः मूल्यं गृहीत्वेति शेषः । 'पञ्चाम्रवापी नरकं न याति' इत्यादिशास्त्रेण धर्मार्थं वृक्षारोपणविधानात् । श्वक्रीडीत्यादयो निगदव्याख्याताः । वृषलस्तु स्वेनैव मनुना निरूपितः—

वृषो हि भगवान् धर्मः तस्य यः कुरुतेऽलयम् ।
वृषलं तं विदुर्देवास्तस्माद्धर्मं न लोपयेत् ॥

इति। अलं निवारणम्। एवंच व्यवहारद्रष्टृषु यो धर्मबाधनं कुरुते स वृषलः। तत्पुत्रो वृषलपुत्रः। स च ब्राह्मण एवेति नायमप्राप्तप्रतिषेध इति मन्तव्यम्। गणानां याजकः अनेकयजमानकाहीनद्वादशाहादियज्ञयाजकः। तथाच स्मृतिः— 'तस्माद्द्वादशाहेन न याज्य पाप्मनो व्यावृत्त्यै' इति। एवंच 'याजयन्ति च ये पूगान्' इत्यनेन सहास्यापौनरुक्त्यं सिद्धम्। आचारहीनो दुराचारः। क्लीबोऽनुत्साही समर्थोऽपि स्वाश्रमधर्मानुष्ठानरहित इत्यर्थः। एवंच 'ये स्तेनपतितक्लीबाः' इत्यनेन अपौनरुक्त्यं स्फुटम्। नित्यं याचनकः सत्यपि विभवे याचकः। श्लीपदी श्लीपदाख्यरोगवान्, उच्छूनपद इति यावत्। उरभ्राः अवयः ता एव जीविकार्थं पाल्याः यस्यासावौरभ्रकः। एवं माहिषकः। अथवा व्यभिचारिणीसुतो माहिषकः। यदाह देवलः—

महिषीत्युच्यते भार्या या चैव व्यभिचारिणी।
तस्यां यो जायते गर्भः स वै माहिषकस्स्मृतः॥

इति। तस्यां यस्स्वभर्तुर्जायते पुत्रः स माहिषकस्स्मृत इत्यर्थः। पूर्वमन्यस्मै दत्ता परपूर्वा तस्याः पतिः परपूर्वापतिः। प्रेत निर्यातको मूल्येन प्रेतनिर्हारकः। धर्मार्थं तु प्रशस्त एव। कस्माद्वचनादेतदवगतमित्यपेक्षिते सङ्ग्रहकारः—

एतान्विगर्हिताचारानित्यस्मादवगम्यते।
धर्मार्थं प्रेतनिर्याणमदृष्टं वृक्षरोपणम्॥

इति । एतान् स्तेनपतितक्लीबादिप्रेतनिर्यातकपर्यन्तान् उभयत्र दैवे पित्र्ये चेत्यर्थः । ब्रह्मपुराणेऽपि वर्ज्या ब्राह्मणा उक्ताः—

भोक्तुं श्राद्धेषु नार्हन्ति दैवोपहतचेतसः ।
षण्डो मूकश्च कुनखी खल्वाटो दन्तरोगवान् ॥
श्यावदन्तः पूतिनासः छिन्नाङ्गश्चाधिकाङ्गुलिः ।
गळरोगी च गडुमान् स्फुटिताङ्गश्च सज्वरः ॥
खञ्जतूपरमन्दाश्च तथाऽन्ये दीर्घरोगिणः ।

इति । गडुमान् वातवशादुरसि पृष्ठे च उन्नतास्थिसंस्थानान्वितः । खञ्जः भग्नचरणः । तूपरो यौवनकाले श्मश्रुविहीनः । मन्दः अलसः । यमोपि—

न खरैरुपयातस्य न रक्तोल्बणवाससः ।
द्व्यङ्गुलातीतकर्णस्य भुञ्जते पितरो हविः ॥

कर्णवेधस्थाने ताळपत्रादिप्रवेशेनाभिवर्धनं द्व्यङ्गुलाधिकं निषिद्धम् । तेन द्व्यङ्गुलातीतकर्णोऽप्यनर्हः । शङ्खोपि—

अनध्यायेष्वधीयानाः शौचाचारविवर्जिताः ।
शूद्रान्नपरिपुष्टाङ्गाः ब्राह्मणाः पङ्क्तिदूषकाः ॥

शातातपोपि—

अग्निष्टोमादिभिर्यज्ञैर्ये यजन्त्यल्पदक्षिणैः ।
तेषामन्नं न भोक्तव्यमपाङ्क्तेयाः प्रकीर्तिताः ॥

प्रचरन्ति च ये मूढास्तं क्रतुं हीनदक्षिणम् ।
ते मृता नरकं यान्ति पूयशोणितकर्दमम् ॥

अल्पदक्षिणैः 'सप्तैकविंशतिषष्टिशतद्वादशसहस्रम्' इत्यादिसूत्रोक्तगोसङ्ख्यात्रिकल्पेषु वित्तशाठ्येन स्वीकृताल्पसङ्ख्याकदक्षिणैरित्यर्थः । आपस्तम्बोऽपि—

नीलीकर्षण[1] कारी तु नीलवस्त्रोपधारकः ।
किञ्चित्तस्य न दातव्यं चण्डालसदृशो हि सः ॥

नीलीसंसर्गजदोषवान् वर्ज्य इत्यर्थः । मरीचिरपि वर्ज्यमाह—'वैधव्यो विधवापतिः' इति । श्राद्धानर्ह इति शेषः । वैधव्यः वैधवेयः । पुनः परिणीतविधवापुत्र इति यावत् । विधवापतिः विधवायाः पुनःपरिणीतायाः पतिः । देवलोऽपि—

चातुराश्रम्यबाह्येभ्यो दत्तं भवति निष्फलम् ।

इति । पुराणेऽपि—

चत्वारस्त्वाश्रमाः पूज्या दैवे श्राद्धे च सर्वदा ।
चातुराश्रम्यबाह्येभ्यः श्राद्धं नैव प्रदापयेत् ॥
अनाश्रमी तपस्तेपे यस्तु तं न निमन्त्रयेत् ।
प्रवृत्ता वा निवृत्ता वाऽनाश्रमाः पङ्क्तिदूषकाः ॥

मनुस्तु पङ्क्तिदूषकानाह—

वीक्ष्यान्धो नवतेः काणः षष्टेश्श्वित्री शतस्य च ।
पापरोगी सहस्रस्य दातुर्नाशयते फलम् ॥
यावतस्संस्पृशेदङ्गै ब्राह्मणान् शूद्रयाजकः ।

---

[1] नीलीसंसर्ग.

तावतां न भवेद्दातुः फलं दानस्य पौर्तिकम् ॥

अन्धस्य दर्शनाभावेन पङ्क्तिगतत्वमात्रेण नवतिनाशकत्वं, न तु वीक्षणेन। संस्पृशेदित्यनेनैकपङ्क्तिगतत्वं लक्ष्यते। मुख्यार्थस्वीकारे स्पर्शनाभावे पङ्क्तिदूषकताभावस्स्यात्। स चायुक्तः। शूद्रयाजकः स्थपतीष्ट्यामृत्विक्, स्ववृत्त्यर्थं प्रतार्य शूद्रार्थं पाकयज्ञादिकर्ता वा। यदि पुनरज्ञानादगत्या वा पङ्क्तिदूषकपरिग्रहः क्रियते तदा त्वाह मनुः—

अपाङ्क्तेयहता पङ्क्तिः पाव्यते यैर्द्विजातिभिः।
तान्निबोधत कार्त्स्न्येन द्विजाग्र्यान् पङ्क्तिपावनान् ॥
अग्र्या वेदेषु सर्वेषु सर्वप्रवचनेषु च।
श्रोत्रियान्वयजाश्चैव विज्ञेयाः पङ्क्तिपावनाः ॥
त्रिणाचिकेतः पञ्चाग्निस्त्रिसुपर्णष्षडङ्गवित्।
ब्रह्मदेयानुसंतानश्छन्दोगो ज्येष्ठसामगः ॥
वेदार्थवित्प्रवक्ता च ब्रह्मचारी सहस्रदः।
शतायुश्चैव विज्ञेया ब्राह्मणाः पङ्क्तिपावनाः ॥

ब्रह्मदेयानुसंतानो ब्राह्मविवाहोढायाः पुत्रः। पङ्क्तिपावनाः पङ्क्त्युपविष्टकाणादिनिबन्धनदोषापनोदकाः। तेन वैश्वदेवार्थमपरीक्ष्य स्वीकृता वाऽऽपत्स्वगत्या स्वीकृताः काणादयः सर्ववेदाग्र्यादिभिः पङ्क्तिपावनैर्मिश्रिता यथा भवन्ति तथा नियोक्तव्या इत्यभिप्रायः। अत एव सुमन्तुः—

काणाः कुब्जाश्च खञ्जाश्चाप्यचर्माणः कचैर्विना।

सर्वे श्राद्धे नियोक्तव्या मिश्रिता वेदपारगैः ॥

अचर्माणः शिपिविष्टाः । कचैर्विना खल्वाट इत्यर्थः । सङ्ग्रहकारस्तु मिश्रणे विशेषमाह—

काणादीन् भोजयेद्दैवे श्राद्धे दाने तु वर्जयेत् ।

इति । श्राद्धे दाने श्राद्धदान इत्यर्थः । पैठीनसिरपि पङ्क्तिपावनानाह—'अथातः पङ्क्तिपावना भवन्ति त्रिणाचिकेतः त्रिमधुः त्रिसुपर्णः चीर्णव्रतश्छन्दोगो ज्येष्ठसामगो ब्रह्मदेयानुसन्तानस्सहस्रदो रुद्राध्यायी चतुर्वेदषडङ्गविदथर्वशिरोऽध्यायी पञ्चाग्निर्वेदजापी चेति पङ्क्तिपावनाः । तेषामेकैकः पुनाति नियुक्तः पङ्क्तिमूर्धनि सहस्रैरप्युपसेविताम्' इति ॥

इति स्मृतिचन्द्रिकायां वर्जनीयब्राह्मणनिरूपणम्.

---

## अथ श्राद्धदिनात्प्राचीनदिनकृत्यम्.

तत्र वराहपुराणम्—

वस्त्रशौचादि कर्तव्यं श्वः कर्ताऽस्मीति जानता ।
स्थानोपलेपनं भूमिं कृत्वा विप्रान् निमन्त्रयेत् ॥
दन्तकाष्ठानि विसृजेत् ब्रह्मचारी शुचिर्भवेत् ।

श्राद्धभूमिं परिगृह्य परिगृहीतस्थानोपलेपनं कृत्वा वस्त्रशुद्ध्यादिकं अह्नि कर्तव्यम् । रात्रौ तु विप्रान् निमन्त्रयेत् । देवपितृकार्यसंपत्त्यर्थमप्रत्याख्येयेन नियोगेनोपकल्पयेदित्यर्थः । अप्रत्याख्येयो नियोगो निमन्त्रणमिति गीयते ।

* मदालसावाक्यमपि—

निमन्त्रयीत पूर्वेद्युः पूर्वोक्तान् द्विजसत्तमान् ।
दैवे नियोगे पित्र्ये च तांस्तथैवोपकल्पयेत् ॥

तथैव दैवे नियोगे यूयं, पित्र्ये नियोगे यूयमिति विशेषनिर्धारणयैवेत्यर्थः । देवलोपि—

श्वः कर्ताऽस्मीति निश्चित्य दाता विप्रान्निमन्त्रयेत् ।
निरामिषं सकृद्भुक्त्वा भुक्ते सर्वजने गृहे ॥

स्वगृहे यज्जनजातमस्ति तस्मिन् सर्वस्मिन् भुक्तवति सति पश्चान्निमन्त्रयेदित्यर्थः । यमोपि—

जातिक्रियावबोधाद्यैर्युक्तान् दान्तानलोलुपान् ।
प्रार्थयीत प्रदोषान्ते भुक्तानशयितान् द्विजान् ॥

अवबोधो वेदार्थादेरवगतिः । अशयितान् अकृतशयनक्रियान् । प्रार्थना च कथं कर्तव्येत्यपेक्षिते प्रचेताः—

कृतापसव्यः पूर्वेद्युः पितॄन् पूर्वं निमन्त्रयेत् ।
भवद्भिः पितृकार्यं नस्सम्पाद्यं च प्रसीदत ॥
सव्येन वैश्वदेवार्थं प्रणिपत्य निमन्त्रयेत् ।

कृतापसव्यः प्राचीनावीती भूत्वा नः अस्माकं श्वः पितृकार्यं भविष्यति तद्भवद्भिः आहवनीयकार्यकर्तृत्वेनानुगृह्य सम्पाद्यं, ततश्चाहवनीयार्थं प्रसीदतेत्येवं निमन्त्रयेदित्यर्थः । सव्येन सव्यांसस्थयज्ञोपवीतेनान्वितः । प्रणिपत्य निमन्त्रणं शूद्रकर्तृकश्राद्धविषयम् ।

* सुदासोवाक्यमपि. इति पाठान्तरम्.

दक्षिणं चरणं विप्रः सव्यं वै क्षत्रियस्तथा ॥

पादावादाय वैश्यो द्वौ शूद्रः प्रणतिपूर्वकम् ।

निमन्त्रयीत पूर्वेद्युः...................... ।

इति पुराणस्मरणात् । दक्षिणचरणग्रहणे तु प्रदेशविशेषो मात्स्ये दर्शितः—

दक्षिणं जानुमालभ्य त्वं मया तु निमन्त्रितः ।

इति ब्रूयादिति शेषः । 'पितॄन् पूर्वं निमन्त्रयेत्' इति नियमार्थम् ।

दैवे नियोगे पित्र्ये च तांस्तथैवोपकल्पयेत् ।

इति दैवपूर्वकनिमन्त्रणस्यापि मदालसावाक्येन स्मृतत्वात्,

उपवीती ततो भूत्वा देवतार्थे द्विजोत्तमान् ।

अपसव्येन पित्र्ये तु स्वयं शिष्योऽथवा सुतः ॥

इति बृहस्पतिस्मरणाच्च । निमन्त्रणं प्राक्कर्तव्यम् । तदाह पैठीनसिः—'श्वः श्राद्धं करिष्यामीति संकल्प्य ब्राह्मणान् सप्त पञ्च वा श्रोत्रियान्निमन्त्रयेत्' इति । सप्त पञ्च वेति पैतृकवैश्वदेवब्राह्मणानां मिळितानां सङ्ख्या । अस्यैव वाक्यस्यान्त्यभागे 'प्राङ्मुखान् वैश्वदेवानुपवेशयेत् पितॄन् दक्षिणपूर्वेण' इत्यभिधानात् । अत्र पैतृके वैश्वदेवे च कथं ब्राह्मणसङ्ख्यया विभाग इत्यपेक्षिते अङ्गिराः—

अयुजो भोजयेच्छ्राद्धे न समा दैविके समाः ।

न समास्समसङ्ख्याकाः पित्रर्थे न ग्राह्या इत्यर्थः । अतएव मनुः—

'द्वौ दैवे पितृकृत्ये त्रीन्' इति। एतत् पञ्चसंख्यापक्षे द्रष्टव्यम्। सप्तसङ्ख्यापक्षे तु चत्वारो दैवे त्रयः पित्र्ये इति विभाग ऊह्यः। ननु द्वौ दैवे पञ्च पित्र्य इति विभागः कस्मान्न भवति? तथाहि—'दैवे युग्मान् यथाशक्ति पित्र्य एकैकस्य' इति कात्यायनेन पित्र्ये एकैकस्य यथाशक्त्ययुग्मानिति वदता पितृपितामहप्रपितामहानां प्रत्येकमयुग्मब्राह्मणकल्पनं न पुनस्स मुदायस्येति दर्शितम्। ततश्च पञ्चानां 'समं स्यादश्रुतत्वात्' इति न्यायेन प्रत्येकमयुग्मसंख्यया समविभाग ऊहनीयः। न यथेष्टम्। न च पित्रादिषु त्रिषु पञ्चानां समतया विभागः सम्भवति, सम्भवति तु त्रयाणाम्। तस्माच्चत्वारो दैवे, पित्र्ये तु त्रय इत्येव विभागः कार्यः। पित्रर्थब्राह्मणेष्वेवाधिकसङ्ख्यामप्याह शौनकः—'एकैकमेकैकस्य द्वौद्वौ त्रींस्त्रीन् वा' इति। द्वौद्वौ इति वृद्धिश्राद्धाभिप्रायम्। पार्वणश्राद्धे तु 'अयुजो भोजयेच्छ्राद्धे न समान्' इति समसङ्ख्यानिषेधात्। एकैकमेकैकस्येति पक्षे पितृकृत्ये त्रयो निमन्त्रणीयाः। त्रींस्त्रीनेकैकस्येति पक्षे तु पितृकृत्ये नव निमन्त्रणीयाः। त्रींस्त्रीनेकैकस्येति पक्षाभिप्रायेण गौतमेनाप्युक्तम्—'नवावरान् भोजयेत्' इति। यत्तु मनुनोक्तं—

पूर्वेद्युर्वा परेद्युर्वा श्राद्धकर्मण्युपस्थिते।
निमन्त्रयीत त्र्यवरान् सम्यग्विप्रान् यथोदितान्॥

इति, अत्र प्रत्येकमिति शेषो द्रष्टव्यः। ततश्च गौतमवचन-

समानार्थत्वान्न तेनास्य विरोधः। प्रत्येकमित्यध्याहारपरिहाराय पितृकृत्ये त्र्यवरानिति व्याख्याने तु 'द्वौ दैवे पितृकृत्ये त्रीन्' इति स्वोक्तेन पौनरुक्त्यं प्रसज्येतेति तथा व्याख्यानमयुक्तम्। त्र्यवरानित्यभिधानात् प्रत्येकं पञ्चसङ्ख्या मध्यमः पक्षः, प्रत्येकं सप्तसङ्ख्या तूत्तमः पक्ष इति मन्तव्यम्। अत एव गौतमः—'अयुजो वा यथोत्साहम्' इति। पित्रादिषु प्रत्येकं पञ्चसङ्ख्या सप्तसंख्या वा यथोत्साहं यथाविभवमयुजो विप्रान् भोजयेदित्यर्थः। एवञ्च सुसमृद्धतमस्य सत्क्रियादिसमर्थस्य सप्तभिस्सप्तभिर्विप्रैः पितृकृत्यं कार्यं, सुसमृद्धतरस्य पञ्चभिःपञ्चभिर्विप्रैः, सुसमृद्धस्य त्रिभिस्त्रिभिः, समृद्धस्य त्रिभिरेवेति बोद्धव्यम्। यत्पुनर्मनुनोक्तं—

द्वौ दैवे पितृकृत्ये त्रीन् एकैकमुभयत्र वा।
भोजयेत्सुसमृद्धोऽपि न प्रसज्येत विस्तरे॥
सत्क्रियां देशकालौ च शौचं ब्राह्मणसम्पदम्।
पञ्चैतान् विस्तरो हन्ति तस्मान्नेहेत विस्तरम्॥

यच्च बृहस्पतिना—

एकैकमथवा द्वौ त्रीन् दैवे पित्र्ये च भोजयेत्।
सत्क्रियाकालपात्रादि न सम्पद्येत विस्तरे॥

इति, यदपि पुराणे—

देशकालबलालाभादेकैकमुभयत्र वा।
शेषान्वित्तानुसारेण भोजयेदन्यवेश्मनि॥

यस्मात् ब्राह्मणबाहुल्यात् दोषो बहुतरो भवेत् ।
श्राद्धनाशो मौननाशः श्राद्धतन्त्रस्य विस्मृतिः ॥
उच्छिष्टोच्छिष्टसंस्पर्शो निन्दा चाप्यन्नभोक्तृषु ।
वितण्डया परीवादो जल्पास्तेऽपि पृथग्विधाः ॥

इति, शेषान् आमन्त्रितान् ,अतिथिप्रभृतीन् । तदेतत्सुसमृद्धस्यापि यस्य ब्राह्मणबाहुल्ये सत्क्रियादिसंपादनासामर्थ्यं तद्विषयम् । यस्य तु सम्पादनसामर्थ्यमस्ति तद्विषयं शौनकादिवचनमिति सर्वमनवद्यम् । न चात्रानाढ्यतया व्यवस्था संभवति, 'द्वौ दैवे पितृकृत्ये त्रीन् एकैकमुभयत्र वा । भोजयेत्सुसमृद्धोपि' इति मनुना आढ्यविषयेऽप्यल्पसंख्याऽभिधानात् । यत्तु शङ्खेनोक्तं—

भोजयेदथवाऽप्येकं ब्राह्मणं पङ्क्तिपावनम् ।

इति, तदेतदनेकब्राह्मणाद्यलाभविषयम् । एवं निरूपितसङ्ख्यान्वितान् विप्रान् स्वगृह एव स्थितान् उपगम्य निवेदयेत् । तथाचोक्तमत्रिणा—

प्रथमेऽह्नि निवासस्थान् श्रोत्रियादीन्निमन्त्रयेत् ।
कथयेत्तु तदैवैषां नियोगं पितृदैविकम् ॥
सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः ।
भवितव्यं भवद्भिर्नः श्वो भूते श्राद्धकर्मणि ॥

इति । प्रथमेऽह्नि पूर्वेद्युरित्यर्थः । निवासस्थान् स्वकीयनिवासस्थितान् । मात्स्येऽपि—

एतान्निमन्त्र्यनियमान् श्रावयेत्पैतृकान् बुधः ।

अक्रोधनैश्शौचपरैः सततं ब्रह्मचारिभिः ॥

भवितव्यं भवद्भिश्च मयाऽपि श्राद्धकारिणा ।

अक्रोधनैरित्यादिवचनं पठन् पैतृकान् पितृकर्माङ्गभूतान् निमन्त्रितविप्रान् श्रावयेदित्यर्थः । अक्रोधादिनियमः श्राद्धकर्तुर्यथा ममावश्यकस्तथा भवतामपीति वक्तुं मयाऽपि श्राद्धकारिणेत्यंशस्यापि पाठः । निमन्त्रितविप्राणां कर्तव्यमाहात्रिः—

ते तं तथेत्यविघ्नेन गतेयं रजनी यदि ।

यथा श्रुतं प्रतीक्षेरन् श्राद्धकालमतन्द्रिताः ॥

निमन्त्रिता विप्रास्तं निमन्त्रणकर्तारं 'तथाऽस्तु यद्यविघ्नेनेयं रजनी गता' इत्युक्त्वा धर्मशास्त्रादौ यथा नियमजातं श्रुतं तथैव तन्नियमजातं प्रतीक्षेरन् प्रतिपालयेयुः । श्राद्धकालं श्वोऽप्यन्नपरिणामपर्यन्तामित्यर्थः । तथाच प्रचेताः—

स्यादन्नपरिणामात्तु ब्रह्मचर्यं द्वयोस्ततः ।

इति । ब्रह्मचर्यग्रहणं द्वयोर्निमन्त्रितानिमन्त्रकयोर्विहितनियमोपलक्षणार्थम् । निराहारानियमस्तु निमन्त्रणप्रभृति श्राद्धकर्मपरिसमाप्तिपर्यन्तमेवेत्याह अपस्तम्बः—'आरब्धे चाभोजनमा समापनात्' इति । यत्तु वृद्धमनुनोक्तं—

निमन्त्र्य विप्रान् तदहो वर्जयेन्मैथुनं क्षुरम् ।

प्रमततां च स्वाध्यायं क्रोधाशौचं तथाऽनृतम् ॥

इति, तत् सद्यस्कालश्राद्धविषयम् ।

निमन्त्रयीत पूर्वेद्युः तदहर्वा द्विजोत्तमान् ।

इति पुराणे सद्यस्कालपक्षस्याप्युक्तत्वात् । अयं च सद्यस्कालपक्षः पूर्वेद्युः कथंचिन्निमन्त्रणासम्भवे भवति,

असम्भवे परेद्युर्वा ब्राह्मणांस्तान्निमन्त्रयेत् ।

इति देवलस्मरणात् ।

तस्मात्तु प्रथमं कार्यं प्राज्ञेनोपनिमन्त्रणम् ।
अप्राप्तौ तद्दिने वाऽपि वर्ज्या योषित्प्रसङ्गिनः ॥

इति मदालसावाक्येऽप्युक्तत्वाच्च । उपनिमन्त्रणं सति सम्भवे पूर्वेद्युः कार्यम् । तत्र कथञ्चिदुपनिमन्त्रणाप्राप्तौ श्राद्धदिने वा कार्यमित्यर्थः । यदा तु तद्दिने निमन्त्रणं क्रियते तदा तद्दिन एव निमन्त्रितत्वनिबन्धनत्वान्नियमानुष्ठानं स्यात् । निमन्त्रणं कदाचिदन्येनापि कारयेदित्याह यमः—

निमन्त्रयीत सव्येन देवतार्थं द्विजोत्तमान् ।
अपसव्येन पित्र्ये तु स्वयं शिष्योऽथवा सुतः ॥

इति । प्रचेता अपि—

सवर्णं प्रेषयेदाप्तं द्विजानामुपमन्त्रणे ॥

इति । एतेषु पक्षेषु पूर्वन्यायः श्रेयान्, सर्वाभावे त्वसवर्णमपि शूद्रव्यतिरिक्तं प्रेषयेत् ।

अभोज्यं ब्राह्मणस्यान्नं वृषलेन निमन्त्रितम् ।

इति यमेन शूद्रनिमन्त्रितस्यैव निषेधस्मरणात् । विशेषप्रतिषेधस्य सामान्याभ्यनुज्ञानार्थता प्रसिद्धैव । एवञ्च भोज्यान्नेन

स्वयं कृतं शिष्यकृतं शूद्रव्यतिरिक्तासवर्णकृतं च निमन्त्रणमनिन्द्यं, तच्च भोक्तुं समर्थानां ब्राह्मणानामप्रत्याख्येयम्।

कामं प्रतिश्रवस्तेषामनिन्द्यामन्त्रणे कृते।

इति देवलस्मरणात्। अनिन्द्यामन्त्रणे कृते तेषां निमन्त्रितानां काममस्त्विति प्रतिश्रवः प्रतिवचनं कर्तव्यमित्यर्थः। कात्यायनेनाप्युक्तं—'अनिन्द्येनामन्त्रिते नापक्रमेत् शक्तेन न प्रत्याख्यानं कर्तव्यम्' इति। अनेनार्थान्निन्द्यामन्त्रणे भोक्तुमसामर्थ्ये च प्रत्याख्यानं कर्तव्यमेवेति गम्यते। अङ्गीकृतनिमन्त्रणस्याङ्गीकारात्पश्चादपि भोक्तुमसामर्थ्ये सत्यातिक्रमो युक्त इत्यर्थात् ज्ञापयितुमाह स एव—'विधिवत्केतनं परिगृह्य शक्तस्सन्नापक्रमेत्' इति। केतनं परिगृह्य आमन्त्रणमङ्गीकृत्येत्यर्थः। यत्तु यमेनोक्तं—

ब्राह्मणं तु मुखं कृत्वा देवताः पितृभिस्सह।
तदन्नं समुपाश्नन्ति तस्मात्तन्न व्यतिक्रमेत्॥

इति, तत् अनिन्द्यामन्त्रितशक्तविषयमिति पूर्वोक्तेन न विरोधः। यस्तु निमन्त्रितं ब्राह्मणं त्यजति तं प्रत्याह नारायणः—

केतनं कारयित्वा तु निवारयति दुर्मतिः।
ब्रह्महत्यामवाप्नोति शूद्रयोनौ च जायते॥
एतस्मिन्नेनसि प्राप्ते ब्राह्मणो नियतश्शुचिः।
यतिचान्द्रायणं कृत्वा तस्मात् पापात्प्रमुच्यते॥

एनः पापम्। यतिचान्द्रायणं नाम चान्द्रायणविशेषः। तदे-

तदङ्गीकृतकेतनस्य भोजनसमर्थस्य निवारणे सति द्रष्टव्यम् । यस्तु निमन्त्रणमङ्गीकृत्य भोजने समर्थोऽपि भोजयितारं त्य जति तं प्रत्याह मनुः—

केतितस्तु यथान्यायं हव्यकव्ये द्विजोत्तमः ।
कथञ्चिदप्यतिक्रामन् पापस्सूकरतां व्रजेत् ॥

कथंचित् मृष्टान्नबहुदक्षिणालोभादिना, न पुनः भोजनासामर्थ्येनेत्यर्थः । तदेतत् आढ्यविप्रविषयम् ।

विद्यमानधनो यस्तु भोज्यान्नेन निमान्त्रितः ।
कथंचिदप्यतिक्रामन् पापस्सूकरतां व्रजेत् ॥

इति स्मृत्यन्तरे विद्यमानधनस्य दोषस्मरणात् । एवञ्च यदु च्यते यमेन—

आमन्त्रितस्तु यो विप्रो भोक्तुमन्यत्र गच्छति ।
नरकाणां शतं गत्वा चण्डालेष्वभिजायते ॥

इति, यदपि नारायणेन—

आमन्त्रितस्तु यश्श्राद्धे कुर्वीतान्यस्य तु क्षणम् ।
संवत्सरकृतं पुण्यं तस्य नश्यति दुर्मतेः ॥

इति, यदपि मत्स्येन—

निमन्त्रितास्तु गुणिना निर्धनेनापि सद्विजाः ।
नान्यमृष्टान्नलोभेन तमतिक्रम्य यान्ति हि ॥
निमन्त्रितास्तु येनादौ तस्माद्गृह्णन्ति नान्यतः ।

इति, अतोऽन्यैरपि प्रथमनिमन्त्रयितारमनतिक्रम्य तत एव

ग्रहीतव्यमित्यभिप्रायः। तदेतत्सर्वमाढ्यविषयमिति मन्तव्यम्। यस्तु तस्माद्गृह्णन् अन्यस्मादपि ग्रहीतुमिच्छति तं प्रतिषेद्धुमाह कात्यायनः— 'आमन्त्रितोऽन्यदन्नं न प्रतिगृह्णीयात्' इति। आमन्त्रितः पूर्वमन्येन निमन्त्रितस्तदीयादन्नादन्यदन्नं पश्चान्निमन्त्रकस्यान्नं तण्डुलादिरूपकमपि न प्रतिगृह्णीयादित्यर्थः। यः पुनः प्रतिगृह्णाति तस्य दोषमाह देवलः—

पूर्वं निमन्त्रितोऽन्येन कुर्यादन्यप्रतिग्रहम्।
भुक्ताहारोऽथवा भुङ्क्ते सुकृतं तस्य नश्यति॥

यस्त्वामन्त्रित आहूतोप्यनागमनेन कुतपादिश्राद्धकालातिपत्तिं करोति, तस्य दोष आदिपुराणे दर्शितः—

आमन्त्रितश्चिरं नैव कुर्याद्विप्रः कदाचन।
देवतानां पितॄणां च दातुरन्नस्य चैव हि॥
चिरकाली भवेद्द्रोही पच्यते नरकाग्निना॥

इति। यस्तु निमन्त्रितो वा श्राद्धकर्ता वा ब्रह्मचर्यं न करोति, तस्य दोषमाह मनुः—

ऋतुकाले नियुक्तो वा नैव गच्छेत् स्त्रियं क्वचित्।
ततो गच्छन्नवाप्नोति ह्यनिष्टं फलमेव तु॥

ऋतुकाल इति वदन् स्वभार्यागमनेऽपि दोष इत्याह। नियुक्त इति वदन् रागतः प्रवृत्तिभावेऽपि दोष इत्याह। गौतमस्तु श्राद्धकर्तुर्वृषलीगमने दोषाधिक्यमाह—'सद्यश्श्राद्धी शूद्रातल्पगस्तत्पुरीषे मासं नयते पितॄन्' इति। श्राद्धं करिष्यमाणं कृतं

च विद्यते यस्येति श्राद्धी दाता । सद्यः तत्क्षणमारभ्य मासं नयतीत्यर्थः । मनुस्त्वामन्त्रितस्य शूद्रातल्पगमने दोषमाह—

आमन्त्रितस्तु यश्शाद्धे वृषल्या सह मोदते ।
दातुर्यद्दुष्कृतं किञ्चित्तत्सर्वमतिपद्यते ॥

यमस्त्वत्र दोषान्तरमाह—

आमन्त्रितस्तु यश्शाद्धे वृषल्या सह मोदते ।
भ्रमन्ति पितरस्तस्य तन्मासं शुक्लभोजनाः ॥

नियमान्तराणामतिक्रमेऽपि स एव दोषमाह—

आमन्त्रितस्तु यश्श्राद्धे अध्वानं प्रतिपद्यते ।
भवन्ति पितरस्तस्य तन्मासं पांसुभोजनाः ॥
आमन्त्रितस्तु यश्श्राद्धे कलहं कुरुते नरः ।
भवन्ति पितरस्तस्य तन्मासं त्वश्रुभोजनाः ॥
आमन्त्रितस्तु यश्श्राद्धे भारमुद्वहते द्विजः ।
भवन्ति पितरस्तस्य तन्मासं स्वेदभोजनाः ॥
आमन्त्रितस्तु यश्श्राद्धे हिंसां वा कुरुते द्विजः ।
तन्मासं पितरस्तस्य भवेयू रक्तभोजनाः ॥
आमन्त्रितस्तु यश्श्राद्धे आयासं कुरुते द्विजः ।
भवन्ति पितरस्तस्य तन्मासं पित्तभोजनाः ॥

इति । उशना अपि—

आमन्त्रितस्तु यश्श्राद्धे द्यूतं संसेवते द्विजः ।
भवन्ति पितरस्तस्य तन्मासं मलभोजनाः ॥

इति । एवमुक्तदोषपरिहाराय ब्रह्मचर्यादिनियमेष्ववहितास्तिष्ठेयु रित्याह यमः—

आमन्त्रितास्तु ये विप्राः श्राद्धकाल उपस्थिते ।
वसेयुर्नियताहारा ब्रह्मचर्यपरायणाः ॥
अहिंसा सत्यमक्रोधोऽदूरादागमनक्रिया ।
अभारोद्वहनं क्षान्तिः श्राद्धस्योपशमो विधिः ॥ इति ॥

इति स्मृतिचन्द्रिकायां श्राद्धदिनात् प्राग्दिनकृत्यम्.

---

## अथ श्राद्धदिनपूर्वाह्णकृत्यम्.

तत्र प्रचेताः—

श्राद्धभुक् प्रातरुत्थाय प्रकुर्याद्दन्तधावनम् ।
श्राद्धकर्ता न कुर्वीत दन्तानां धावनं बुधः ॥

किं तर्हि श्राद्धकर्ता कुर्यादित्यपेक्षिते देवलः—

तथैव यन्त्रितो दाता प्रातः स्नात्वा सहाम्बरः ।
आरभेत नवैः पात्रैरन्नारम्भं च बान्धवैः ॥

तथैव श्राद्धकर्तुः उक्तनियमानतिक्रमेणैव यन्त्रितो नियतः अन्नारम्भं श्राद्धार्थान्नपाकारम्भं आरभेत कुर्यादित्यर्थः । नवैः पात्रैः अनुपहतैः पाकोपयोगिभिर्भाण्डैः बान्धवैः पाकोपयोगिभिरुपेतः दाता श्राद्धाधिकारी । पाके श्राद्धाधिकारिणा यत्प्रथमं कर्तव्यं तदाहोशना— ‘गोमयोदकैर्भूमिभाजनभाण्ड

शौचं कुर्यात्' इति । गोमयानुलेपनेन महानसभूमिशुद्धिं कुर्यात् । उदकैरभ्युक्षणाहरणप्रकरणोक्तप्रकारेणाहृतैः भाजनानां गोधूमपिष्टादिप्रक्षेपणार्थानां शुद्धिं कुर्यादित्यर्थः । महानसभूमिसंस्कारानन्तरमाह देवलः—

तिलानवकिरेत्तत्र सर्वतो बन्धयेदजम् ।
असुरोपहतं सर्वं तिलैश्शुद्ध्यत्यजेन च ॥

पाकस्थानभाजनभाण्डशुद्ध्यनन्तरं पाकादिनाऽन्नादिकं निष्पादयेत् । तथाच स एव—

ततोऽन्नं बहुसंस्कारैः नैकव्यञ्जनभक्ष्यवत् ।
चोष्यपेयसमृद्धं च यथाशक्त्युपकल्पयेत् ॥

बहुसंस्कारो राजभोज्यान्ने योयः संस्कारः तेनतेनान्वितम् । नैकव्यञ्जनभक्ष्यवत् अनेकव्यञ्जनभक्ष्योपेतम् । व्यज्यतेऽनेनान्नस्य रस इति व्यञ्जनमत्र सूपशाकादिकम् । यस्य रसांश एव सेव्यो न द्रव्यांशः इक्षुखण्डादि तच्चोष्यम् । पानार्थं चापक्वफलरसादौ गुडादिपिष्टं संसृज्य यत्क्रियते तत्पेयम् । चोष्यपेययोरनेकविधयोरनिषिद्धयोः सम्भवाच्चोष्यपेयसमृद्धमित्युक्तम् । चशब्दाल्लेह्यसमृद्धं चेत्यवगन्तव्यम् । अन्नादिकं विहितव्रीह्यादिप्रकृति । कानि द्रव्याणि विहितानीत्यपेक्षिते प्रचेताः—

कृष्णमाषास्तिलाश्चैव श्रेष्ठास्स्युर्यवशालयः ।
महायवा व्रीहियवास्तथैव च मधूलिकाः ॥

कृष्णाः श्वेताश्च लोहाश्च ग्राह्यास्स्युः श्राद्धकर्मणि ।

यवाः स्फीतशूकाः । शालयः कलमाः । राजशालिमहाशालिसुगन्धिकादयो जलजाः । महायवा व्रीहियवाश्च यवविशेषाः। मधूलिकाख्यं धान्यान्तरम् । कृष्णाः स्थलजाः कृष्णवर्णा व्रीहयः । श्वेताः स्थलजा महाव्रीहयः। लोहाः जलजा रक्तशालयः, स्थलजाः षाष्टिकाश्च । अत्रिरपि—

अगोधूमं च यच्छ्राद्धं कृतमप्यकृतं भवेत् ॥

विना मांसेन यच्छ्राद्धं कृतमप्यकृतं भवेत् ॥

क्रव्यादाः पितरो यस्मादभावे पायसादिनः ।

इति । अनेन गोधूमप्रकृतिद्रव्यमपूपादि भक्ष्यं मांसमयं च भक्ष्यमवश्यमुपकल्पनीयमिति वचोभङ्ग्या दर्शितम् । तत्र मांसभक्ष्योपकल्पनप्रकारमाह कात्यायनः—'छागोस्रमेषानालभ्य शेषान् क्रीत्वा लब्ध्वा वा स्वयंमृतानां वाऽऽहृत्य पचेत्' इति । उस्रा गौः । आलभ्य संज्ञपनं कृत्वेत्यर्थः । एतच्च कलियुगव्यतिरिक्तद्वापरादियुगविषयम् । तथाच कलियुगधर्मप्रकरणे—

वरातिथिपितृभ्यश्च पशूपकरणक्रिया ।

इत्यादिवचने श्राद्धाद्यर्थं गवादिपश्वालम्भननिषेधोऽस्माभिः प्रदर्शितः । कलियुगे क्रयादिनाऽप्यासाद्य गोमांसं न पचेत्, लोकविद्विष्टत्वात् । अन्यान्यपि क्रीत्वा यथाकथञ्चिल्लब्ध्वा वा उपकल्प्यानि वायुपुराणे दर्शितानि—

बिल्वामलकमृद्वीकाः पनसाम्रातदाडिमम् ।
चव्यपालेयकाक्षोटखर्जूराणां फलानि च ॥
कशेरुः कोविदारश्च तालकन्दस्तथा विशम् ।
कालेयं कालशाकं च सुनिषण्णं सुवर्चला ॥
कर्दुरः कोङ्कणी द्राक्षा लिकुचं मोचमेव च ।
कर्कन्धूः ग्रावकं चारु तिन्दुकं मधुसाह्वयम् ॥
वैकङ्कतं नाळिकेरं शृङ्गाटकवरूषकम् ।
पिप्पलं मरिचं चैव पटोलं बृहतीफलम् ॥
सुगन्धि मत्स्यमांसं च प्रकल्प्यास्सर्व एव च ।
एवमादीनि चान्यानि स्वादूनि मधुराणिच ॥
नागरं चात्र वै देयं दीर्घमूलकमेवच ।

इति । मृद्वीका द्राक्षा, 'मृद्वीका गोस्तनी द्राक्षा' इत्यमरसिंहेनाभिधानात् । आम्रातकं चूतवृक्षसदृशकपीतनवृक्षः—'द्वौ पीतनकपीतनौ । आम्रातकः' इति तेनैवाभिधानात् । अक्षोटः गिरिसम्भवस्तरुः । कशेरुः जलकन्दविशेषः भद्रमुस्ताख्यः । कालेयं दारुहरिद्रा । सुनिषण्णं वितुन्नकाख्यं पत्रशाकं 'वितुन्नं सुनिषण्णकम्' इति शाकप्रकरणे अमरसिंहेनाभिधानात् । कर्दुरः श्रीपर्णिकाख्यो वृक्षविशेषः । 'श्रीपर्णिका कुमुदिका कुम्भीकैटर्यकट्फलौ' इति तेनैवाभिधानात् । कोङ्कणी कोङ्कणदेशप्रभवा द्राक्षा । लिकुचं जम्बीरफलतुल्यखर्वफलवान्

गुल्मविशेषः । मोचं कदलीफलम् । कर्कन्धूः बदरी । तिन्दुकः सितसाराख्यवृक्षः । 'तिन्दुकः स्फूर्जकः कालस्कन्धश्च सितसारकः' इत्यमरः । शृङ्गाटकं जलजत्रिकाण्डकम् । बृहती कण्टकारिका, 'निदिग्धका स्पृशी व्याघ्री बृहती कण्टकारिका ' इत्यमरः।तस्याः फलं बृहतीफलम् । शेषाणि बिल्वामलकपनसदाडिमचव्यखर्जूरतालकन्दविशवैकङ्कतनाळिकेरपिप्पलिमरिचपटोलानि प्रसिद्धानि । इतराण्यप्रसिद्धानि । एवमादीनि एवंप्रकाराणि । नागरं शुण्ठी । दीर्घमूला तुण्डिकेरी तस्याः फलं दीर्घमूलकम् । एतच्चाम्रातकादिकं विहितसंस्कारद्रव्यैरेव संस्कार्यम् । तानि चादित्यपुराणे दर्शितानि—

मधूकं रामठं चैव कर्पूरं मरिचं गुडम् ।
श्राद्धकर्मणि शस्तानि सैन्धवं मानसं तथा ॥

ब्रह्माण्डपुराणेऽपि—

सैन्धवं लवणं चैव तथा मानससम्भवम् ।
पवित्रे परमे ह्येते प्रत्यक्षमपि नित्यशः ॥

एवं मृष्टान्नोपकल्पनं न श्राद्धमात्रविषयमित्याह देवलः—

इष्टापूर्तमृताहेषु दर्शश्राद्धाष्टकासु च ।
पात्रेभ्यस्तेषु कालेषु देयं नैव कुभोजनम् ॥

चशब्दान्महालयादिविशिष्टकालेष्वपि कुभोजनं न देयमिति समुच्चिनोति । एवंच नित्यश्राद्धादौ दरिद्रकर्तृके कुभोजनाद्यनुज्ञा गम्यते । अत्र यमः—

भक्ष्यं भोज्यं तथा पेयं यत्किञ्चित्पच्यते गृहे ।
न भोक्तव्यं पितॄणां तदनिवेद्य कथञ्चन ॥

पितॄणामनिवेद्य तस्मादन्नाद्वैश्वदेवादिकमपि न कार्यम् । तथाच पैठीनसिः—

पितृपाकं समुद्धृत्य वैश्वदेवं करोति यः ।
आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठति ॥

इति । यमस्तु पक्वान्नोपहतिपरिहाराय पाकस्थानादितो बहिष्कार्यानाह—

मद्यपः स्वैरिणी या च परपूर्वापतिस्तथा ।
नैव श्राद्धेऽभिवीक्षेरन्नावापात्प्रभृति क्वचित् ॥

आवापः पाकं कर्तुं तण्डुलादीनां पिठरादौ प्रक्षेपः, तत्प्रभृति भोजननिष्पत्तिपर्यन्तं क्वचित्पाकस्थाने भोजनस्थानेऽन्यत्र वा स्थितान् भोज्यपदार्थान् भुञ्जानांश्च विप्रान् श्राद्धकर्मणि यथा मद्यपादयो नाभिवीक्षेरन् तथा ते दूरत एवापाकरणीया इत्यर्थः । मद्यपादिग्रहणं अप्रशस्तप्राणिनामुपलक्षणार्थम् । अत एव मनुः—

चण्डालश्च वराहश्च कुक्कुटश्च तथैव च ।
रजस्वला च खञ्जश्च नेक्षेरन्नश्नतो द्विजान् ॥
होमे प्रदाने भोज्ये च यदेभिरभिवीक्षितम् ।
दैवे कर्मणि पित्र्ये वा तद्गच्छति यथातथम् ॥

इति । होमे अग्नौकरणदेशे । प्रदाने अन्नत्यागदेशे । भोज्ये

भोज्योपकल्पनदेशे महानसादौ । चशब्दादन्यस्मिन्नपि स्थाने यदन्नादिकं चण्डालादिभिरभिवीक्षितं तद्यथातथं गच्छति असम्यग्भवतीत्यर्थः । तस्माच्छ्राद्धदेशादतिदूरतोपनेतव्या इत्यभिप्रायः । वराहो विड्वराहः, तस्यैवाप्रशस्तत्वात् । अत एवोशनसा विशेषितः— 'विड्वराहकमार्जारकुक्कुटनकुलशूद्ररजस्वलाशूद्रीभर्तारश्च दूरतोपनेतव्याः' इति । श्राद्धकाल इति शेषः । तथाच यमः—

कुक्कुटो विड्वराहश्च काकश्श्वाऽथ बिडालकः ।
वृषलीपतिश्च वृषलः षण्डो नारी रजस्वला ॥
एते तु श्राद्धकाले वै वर्जनीयाः प्रयत्नतः ।

श्राद्धकाले पाकोपक्रमप्रभृतीत्यर्थः । तथाच व्यासः—

काषायवासाः कुष्ठी वा पतितो भ्रूणहाऽपि वा ।
सङ्कीर्णयोनिर्विप्रस्य सम्बन्धी पतितस्य यः ॥
वर्जनीया बुधैरेते निवापे समुपस्थिते ।

निवापः पितृभ्यो दानं, 'पितृदानं निवापस्स्यात्' इत्यमरसिंहेनाभिधानात् । समुपस्थितशब्दात्पाकोपक्रमप्रभृति वर्जनीयाः न तु पितृभ्यो दानसमय एवेति गम्यते । यमोपि पुरुषेष्वपनेयानाह—

खञ्जः काणः कुणिः श्वित्री दातुः प्रेष्यकरो भवेत् ।
न्यूनाङ्गो वाऽतिरिक्ताङ्गस्तमप्यपनयेत्ततः ॥

खञ्जः पादविकलः । काण एकाक्षः । कुणिः एककरः ।

श्वित्री कुष्ठी । देवलोऽपि—

बीभत्समशुचिं नग्नं मत्तं धूर्तं रजस्वलाम् ।
नीलकाषायवसनं छिन्नकर्णं च वर्जयेत् ॥

बीभत्सो जुगुप्सितः । ब्रह्माण्डपुराणेऽपि—

नग्नादयो न पश्येयुः श्राद्धमेतत्कदाचन ।
गच्छन्त्येतैस्तु दृष्टेन पितरोऽधः पितामहाः ॥

श्राद्धं श्राद्धार्थमन्नादिकम् । नग्नो वेदपरित्यागी । आदिशब्देन तत्प्रकारवैदिककर्मानुष्ठानपरित्यागिनो गृह्यन्ते । तथाचात्रैवोक्तं—

सर्वेषामेव भूतानां त्रयी संवरणं यतः ।
ये वै त्यजन्ति तां मोहात्ते वै नग्नादयस्स्मृताः ॥

त्रयी वेदः, तां ये त्यजन्ति ते नग्नास्स्मृताः । ये तु तदर्थानुष्ठानत्यागिनः ते न ग्नादयस्स्मृता इत्यर्थः । वायुपुराणेऽपि—

वृथाजटी वृथामुण्डी वृथानग्नश्च यो नरः ।
महापातकिनो ये च ते वै नग्नादयो नराः ॥

वृथा वैदिकविधिमन्तरेणेत्यर्थः । यदि तु नग्नादयः श्राद्धार्थं अन्नादिकं पश्येयुस्तदा किं कार्यमित्यपेक्षिते तत्रैवोक्तं—

अन्नं पश्येयुरेते तु यदि वा हव्यकव्ययोः ।
उत्स्रष्टव्यं प्रदानार्थं संस्कारस्त्वापदि स्मृतः ॥

नग्नादिभिः दृष्टमन्नं उत्स्रष्टव्यम् । आपदि तु तस्यैव नग्नादिदर्शनजनितदोषापाकरणार्थं स्मृतः संस्कारः । कः पुनः संस्कार इत्यपेक्षिते ब्रह्मपुराणं—

हविषां संस्कृतानां तु पूर्वमेवापवर्जनम् ।
मृत्संपृक्ताभिरद्भिश्च प्रोक्षणं तु विधीयते ॥
सिद्धार्थकैः कृष्णतिलैः कार्यं चाप्यवकीरणम् ।
गुरुसूर्याग्निबस्तानां दर्शनं तु प्रयत्नतः ॥

अस्यार्थः—हविषां हव्यकव्यानां नग्नादिदर्शने सत्यपवर्जनमेव पूर्वं परित्याग एव मुख्यः कल्पः। आपदि तु दोषापगमहेतुभूतसंस्कारसिद्धये प्रशस्तमृत्तिकासंस्पृष्टाभिरद्भिः प्रोक्षणं, तथा गौरसर्षपैः कृष्णतिलैश्च अवकीरणं दुष्टहव्यकव्ययोरुपरि क्षेपणं कार्यम् । तथा गुरुसूर्याग्निच्छागानां दर्शनं यथाऽन्नस्य सिद्ध्यति तथा प्रयत्नतो व्यवधायकपरिश्रयणापनोदनद्वारा कार्यमिति । अथवा जमदग्निनोक्तामन्नशुद्धिं कुर्यात्—

शुद्धवत्योऽथ कूश्माण्ड्यः पावमान्यस्तरत्समाः ।
पूतेन वारिणा दर्भैरन्नदोषानपानुदेत् ॥

शुद्धवत्यादिमन्त्रैरभिमन्त्रितमुदकं दर्भैरादाय मद्यपस्वैरिण्याद्यभिवीक्षणप्रभवान्नदोषापनोदार्थमवोक्षणं कुर्यादित्यर्थः । 'एतो न्विन्द्रं स्तवाम' इत्याद्या ऋचः शुद्धवत्यः । 'यद्देवा देवहेळनम्' इत्याद्याः कूश्माण्ड्यः । 'पवमानस्सुवर्जनः' इत्याद्याः पावमान्यः । 'तरत्समन्दी धावति' इत्याद्याः तरत्समाः । यदि तु मद्यपादिदर्शनप्रभवमन्नदोषं तदपनोदकेन संस्कारेण पूर्वोक्तेन वक्ष्यमाणेन वा मृद्भस्मोदकहिरण्यस्पर्शनेन वाऽपनुदेत् तदा श्राद्धे तदन्नं भोज्यमित्याह सुमन्तुः—'चण्डालाद्यवे-

क्षितमन्नमभोज्यमन्यत्र मृद्भस्माहिरण्योदकस्पर्शनात्' इति । मृद्भस्महिरण्योदकस्पर्शनरूपसंस्कारनिर्देशः पूर्वोक्तद्विप्रकारसंस्कारयोरपि प्रदर्शनार्थः ॥

इति स्मृतिचन्द्रिकायां श्राद्धदिनपूर्वाह्णकृत्यम्.

---

## अथ श्राद्धकर्मणि वर्ज्यद्रव्याणि.

तत्र मदालसावाक्यं—

यच्चोत्कोचादिना प्राप्तं पतिताद्यदुपार्जितम् ।
अन्यायकन्याशुल्कोत्थं द्रव्यं चात्र विगर्हितम् ॥
पित्रर्थमेव मे यच्छेत्युक्त्वा यच्चाप्युपार्जितम् ।
तद्वर्जनीयं विद्वद्भिः तत्तद्वै श्राद्धकर्मणि ॥

उत्कोचादिना स्पृहाहेतुना स्तेयादिना । अन्यायकन्याशुल्कं गोमिथुनादधिककन्याशुल्कं, तेन प्राप्तं अन्यायकन्याशुल्कोत्थम् । अत्र श्राद्धकर्मणि विगर्हितं वर्ज्यमित्यर्थः । व्यासोऽपि वर्ज्यमाह—

वेदविक्रयजं नेष्टं स्त्रिया यच्चार्जितं धनम् ।
न देयं पितृदेवेभ्यो यच्च क्लीबादुपार्जितम् ॥

धान्यादिष्वपि वर्ज्यानाह स एव—

अश्राद्धेयानि धान्यानि कोद्रवाः पुलकास्तथा ।
हिङ्गु द्रव्येषु शाकेषु कालानलशुभास्तथा ॥

कोद्रवाः कोरदूषकाः 'कोरदूषस्तु कोद्रवः' इत्यमरसिंहेनाभिधानात्। पुलकाः पुलाकाः कोद्रवापेक्षया स्वल्पधान्यानि 'स्यात्पुलाकस्तुच्छधान्ये' इति तेनैवाभिधानात्। एवञ्च पुलकास्तथेति व्यासवचने पुलकशब्दमध्याक्षरे दिर्घाभाव आर्षत्वान्न दोष इति मन्तव्यम्। द्रव्येषु शाकादिसंस्कारार्थद्रव्येषु हिङ्ग्वाख्यं द्रव्यमश्राद्धेयम्। ननु हिङ्गुप्रतिषेधो न युक्तः—

मधूकं रामठं चैव कर्पूरं मरिचं गुडम्।
श्राद्धकर्मणि शस्तानि सैन्धवं मानसं तथा॥

इत्यादित्यपुराणे तस्य ग्राह्यत्वेन स्मरणात्। सत्यं, विधिप्रतिषेधयोः द्वयोरपि दर्शनाद्धिङ्गुविषये विकल्पो द्रष्टव्यः। एवमन्यत्रापि यत्र यत्र विधिप्रतिषेधावेकस्यैव दृश्येते तत्र विकल्पो वेदितव्यः। शाकेषु शाकानां मध्ये कालानलशुभाख्याः शाकविशेषाः अश्राद्धेयाः। तत्र कालाख्यः शाकविशेषः कुठेरकाकृतिरिति देवस्वामिना निरूपितः। कुठेरकोऽर्जकसदृशः पर्णासः। 'अथ पर्णासे कठिञ्जरकुठेरकौ। सितेऽर्जकोत्र' इत्यमरसिंहेनाभिधानात्। एवं च कृष्णार्जकः कालशब्देनोक्त इति मन्तव्यम्। अनलः चित्रकः, 'चित्रको वह्निसंज्ञकः' इत्यमरः। यल्लोके शुभं शाकमिति व्यपादिश्यते तदेवात्र शुभशब्देनोक्तमिति देवस्वामिनाऽभिहितम्। भरद्वाजोपि—'मुद्गाढकीमाषवर्जं द्विदळानि दद्यात्' इति। यानि पाषाणयन्त्रभ्रमणेन द्विधा प्रायशो भिद्यन्ते तानि धान्यानि

द्विदळानि। आढकी शिम्बीधान्यविशेषः तुवरीनाम्ना प्रसिद्धः। मुद्गमाषावपि शिम्बीधान्यविशेषौ मुद्गमाषनाम्नैव प्रसिद्धौ। माषशब्देनात्र राजमाषो गृह्यते। न पुनः कृष्णमाषः—

वर्ज्या मर्कटकाः श्राद्धे राजमाषास्तथैव च।

इति स्मृत्यन्तरे विशेषितत्वात्। मर्कटकाः तृणधान्यविशेषाः। तथाच तृणधान्यप्रकरणे वैजयन्त्यामुक्तं—'अथ वन्यो मर्कटकस्समौ' इति। राजमाषाः प्रायेण प्रादेशमात्रशिम्बीयुक्ताः, शुष्कदशायां पाटलवर्णा अलसान्द्रनाम्ना प्रसिद्धाः। अत एव वैजयन्त्यां 'अलसान्द्रो राजमाषः' इत्युक्तम्। मुद्गशब्दान्नात्र कृष्णेतरमुद्गो गृह्यते। न पुनः कृष्णमुद्गोपि—

कृष्णधान्यानि सर्वाणि वर्जयेच्छ्राद्धकर्मणि।
न वर्जयेत्तिलांश्चैव मुद्गान् माषांस्तथैव च॥

इति स्मृत्यन्तरे कृष्णानां तिलमुद्गमाषाणां प्रतिप्रसवदर्शनात्। कृष्णधान्येषु कुळुत्थादयोपि वर्ज्याः—

कोद्रवा राजमाषाश्च कुळुत्था वरकास्तथा।
निष्पावाश्च विशेषेण पञ्चैतांस्तु विवर्जयेत्॥
यावनाळानपि तथा वर्जयन्ति विपश्चितः।

इति चतुर्विंशतिमतेऽभिधानात्। कुळुत्था मुद्गवत्सूपयूषाद्यनेकोपकारकतया प्रसिद्धाः। कृष्णा अकृष्णाश्चेति द्विविधा अपि वर्ज्याः, कृष्णमुद्गादिवत् प्रतिप्रसवाभावात्। वरका वनमुद्गाः—

वनमुद्गे तु वरकनिगूढककुलीमकाः ।

इति वैजयन्त्यामुक्तत्वात् । निष्पावा अपि कुळुत्थवत्सूपाद्यनेकोपकारकतया श्वेतशिम्बीधान्यतया च प्रसिद्धाः । अत एव वैजयन्त्यां 'निष्पावः श्वेतशिम्बिका' इत्युक्तम् । अयं निष्पावप्रतिषेधः कृष्णनिष्पावविषयः—

कृष्णधान्यानि सर्वाणि वर्जयेच्छ्राद्धकर्मणि ।

इति स्मरणात् । एवञ्च यदुक्तं मार्कण्डेयपुराणे —

यवव्रीही सगोधूमौ तिलमुद्गास्ससर्षपाः ।

प्रियङ्गवः कोविदारा निष्पावाश्चात्र शोभनाः ॥

इति, तत् कृष्णेतरविषयमिति मन्तव्यम् । यावनाळा विन्ध्यदक्षिणतो महाराष्ट्रादिदेशे जोह्ळापरपर्यायप्रसिद्धाः । अत एव वैजयन्त्यां 'यावनाळास्तु जोह्ळाः' इत्युक्तम् । मरीचिनाऽप्युक्तानि वर्ज्यानि—

कुळुत्थाश्चणकाश्श्राद्धे न देयाश्चैव कोद्रवाः ।

कटुकानि च सर्वाणि विरसानि तथैव च ॥

चणकाः अश्वानामत्यन्तप्रियाः प्रत्यन्तदेशव्यतिरिक्तदेशेषु सर्वत्र प्रसिद्धाः । विष्णुपुराणेऽपि—

श्राद्धे न देयाः पालङ्क्याः तथा निष्पावकोद्रवाः ।

मसूरक्षारवार्ताककुळुत्थाश्शणशिग्रवः ॥

पालङ्क्या मुकुन्दाख्यं गन्धद्रव्यं, 'पालङ्क्या मुकुन्दः कुन्दकुन्दुरू' इत्यमरसिंहेन गन्धद्रव्यनामानुशासनप्रकरणेऽभिधा-

नात् । मसूरोपि प्रसन्तदेशव्यतिरिक्तदेशेष्वतिप्रसिद्धो द्विदळविशेषो मङ्गळ्यकापरपर्यायः । तथाऽमरसिंहः—'मङ्गल्यको मसूरः' इति । क्षारो यवक्षारादिः । वार्ताकं क्षुद्रवार्ताकसंज्ञकबृहतीफलं कण्टकारिकाख्यबृहतीफलात् किञ्चित् स्थूलम् । शणशब्दो धान्यविशेषवचनः, 'शणः सप्तदळानि धान्यानि' इति धान्यप्रभेदेष्वभिधानात् । अस्य च स्वयंजातस्य सर्वदा प्रतिषिद्धत्वात् । अत्र प्राप्त्यसम्भवेऽपि कृष्यादिजातस्य प्राप्तिसम्भवात् प्रतिषेधो नानर्थकः । शिग्रुः द्विविधः श्वेतपुष्पो रक्तपुष्पश्च । तत्र रक्तपुष्पस्य सर्वनिषिद्धत्वेन प्राप्त्यभावेऽपि श्वेतपुष्पस्य पत्रशाकत्वेन प्राप्तिरस्तीति प्रतिषेधोऽर्थवान् । विष्णुरपि वर्ज्यानाह—'भूतृणशिग्रुसर्षपसुरसार्जककूष्माण्डालाबुकीवार्ताकपालङ्क्यातण्डुलीयककुसुम्भमहिषीक्षीराणि वर्जयेत्' इति । भूतृणः—

छत्रातिच्छत्रपालघ्नौ मालातृणकभूस्तृणौ ।

इत्यमरः । विसर्गाभावश्छान्दसः । यस्य नाळे ग्रन्थिस्थानेषु परिमण्डला अवष्टम्भका भवन्ति स भूतृणाख्यः शाकविशेषः । सर्षपोत्र राजसर्षपो विवक्षितः, न तु सर्षपमात्रम् 'कुसुम्भं राजसर्षपम्' इति स्मृत्यन्तरे विशेषप्रतिषेधात्, विशेषप्रतिषेधश्च शेषाभ्यनुज्ञानार्थः, ततश्च तदविरोधाय तत्रैव सामान्यशब्दः पर्यवस्यति । राजसर्षपसुरसानिर्गुण्डीलेह्येष्वाम्ररसप्रवेशनात्प्राप्तौ प्रतिषिध्यते । अर्जकः श्वेतार्जकः । कूश्माण्डालाबुकीशब्दौ

प्रसिद्धौ। वार्ताकपालङ्क्याशब्दौ प्रागेव व्याख्यातौ। तण्डुलीयकः प्रसिद्धः। अत एवामरसिंहेन 'तण्डुलीयोल्पमारिषः' इति तण्डुलीयकमुद्दिश्याल्पमारिषोऽनुशिष्टः। कुसुम्भशब्देनात्र कण्टकीकुसुम्भस्य ग्रहणं, अकण्टकीकुसुम्भस्य सदाऽप्रतिषिद्धत्वात्। द्विविधस्यापि कुसुम्भस्य नवपत्राणि शाकत्वेनोपयुज्यन्ते। तेन शाकत्वेन प्राप्तिसम्भवात्प्रतिषेधोऽर्थवान्। मत्स्योपि—

कुसुम्भं बीजपूरं च कपित्थं मधुकातसी।
एतान्यपि न देयानि पितृभ्यः प्रीतिमिच्छता॥

कपित्थस्य फलत्वेन प्राप्तिसम्भवात् प्रतिषेधः। मधुकं यष्टिमधुकं अस्य गन्धद्रव्यतया प्राप्तिसम्भवात्प्रतिषेधः। अतसी शाकत्वेन प्रसिद्धैव। सुमन्तुरपि—'बीजपूरमाषांश्च श्राद्धे न दद्यात्' इति। बीजपूरको मातुलिङ्गकः—

फलपूरो बीजपुरो रुचको मातुलिङ्गकः।

इत्यमरः। माषाः कृष्णमाषव्यतिरिक्ताः। मार्कण्डेयोपि—

वर्ज्याश्चाभिषवा नित्यं शतपुष्पा गवेधुका।
जम्बीरजं फलं वर्ज्यं कोविदारस्तु नित्यशः॥

अभिषवाः क्लिन्नाः शुक्ता इति यावत्। शतपुष्पा शाकप्रकरणे अमरसिंहेनाभिहिता। गवेधुका शङ्काकारतृणधान्यसंपादिका ओषधिः, तस्या अदनीयत्वायोगात्तद्धान्यं प्रतिषिध्यते। जम्बीरफलमार्द्रकादिशाकसंस्कारकतया भक्ष्यतया च

प्रतिषिध्यते । कोविदारो युगपत्रकवृक्षविशेषः । तस्य पुष्पं फलं वा कोविदारम्, तत्कोमलावस्थं शाकत्वेन प्राप्तं प्रतिषिध्यते । शाट्यायनोपि—

मारिषं नाळिका चैव रक्ता या च कलम्बका । .
आसुरान्न मिदंसर्वं पितॄणां नोपतिष्ठते ॥

इति । मारिषो जीवशाकं 'मारिषो जीवशाकस्स्यात्' इति वैजयन्त्यां तच्च कुण्डलीयकसदृशं ततोपि स्थूलतरम् । अत एव वैजयन्त्यां 'मारिषो जीवशाकस्स्यात्' इत्युक्त्वोक्तं 'अत्राल्पे कुण्डलीयकः' इति । नाळिका दीर्घनाळा शिरासि स्वल्पफलान्विता । तस्याः फलस्य नाळभागस्य च शाकत्वेन प्राप्ते प्रतिषेधः । कळम्बका जलसम्भवा वेणुपत्राकृतिः पल्लवान्विता । द्विविधा श्वेता रक्ता च शाकत्वेन प्राप्ता रक्तेति विशेषणोपादानान्न श्वेतायाः प्रतिषेधः । स्मृतिरपि—

गान्धारिकापटोलानि श्राद्धकर्मणि वर्जयेत् ।

इति । गान्धारिका तण्डुलीयक इति देवस्वामिना व्याख्यातम् । पटोलानि । न तु लता । लतायाः पुल्लिङ्गत्वस्यैव साधुत्वात्, अत एवामरसिंहेन लतापर्यायेषु 'पटोलः तिक्तकः पटुः' इति पुल्लिङ्गतया दर्शितः । हारीतोपि—'पालङ्क्यापोतिकानाळिकाकुसुम्भसुरसानिष्पावचणकादि श्राद्धे न दद्यात्' इति । पोतिका सुताह्वया । वैजयन्त्यां 'पोतिका तु सुताह्वया' इत्यभिधानात् । यस्याः पत्रशाकसेवा निद्रातिशयकारिणी

सा पोतिका ज्ञेया । शेषाणि प्राग्व्याख्यातानि । शङ्खोपि—

कृष्णजाजी बिदश्चैव शितपाकी तथैव च ।
वर्जयेल्लवणं सर्वं तथा जम्बूफलानि च ॥
अवक्षुतादाभिहतं तथा श्राद्धेषु वर्जयेत् ।

कृष्णजाजी कृष्णजीरकम् । बिदः बिदाख्यं लवणम् । शितपाकी तु कीदृशीति चिन्त्यम् । लवणं कृतलवणं 'कृतं च लवणं सर्वं वंशाग्रं च विवर्जयेत्' इति तेनैवाभिधानात् । उशनाऽपि—

नालिकाशणछत्राककुसुम्भालाबुविड्वरान् ।
कुम्भीकञ्चुकवृन्ताककोविदारांश्च वर्जयेत् ॥
वर्जयेद्गृञ्जनं श्राद्धे काञ्जिकं पिण्डमूलकम् ।
करञ्जं येऽपि चान्ये वै रसगन्धोत्कटास्तथा ॥

इति । छत्राकं शिलीन्ध्रं 'छत्राके तु शिलीन्ध्रस्स्यात्' इति वैजयन्त्याम् । अलाबूफलस्य पत्रादेरपि शाकत्वेन प्राप्तत्वात्प्रतिषेधः। कुम्भी श्रीपर्णिका, खर्वकार्ष्मर्यफलं, 'श्रीपर्णिका कुमुदिकाकुम्भी कैटर्यकट्फलौ' इत्यमरसिंहेनाभिधानात् । कञ्चुकं वृत्ताकारमलाबुफलं 'वृत्तकुम्भ्यां तु कञ्चुका' इति वैजयन्त्यामुक्तत्वात् । वृन्ताकं बृहतीसदृशस्थूलोद्भिदः फलं वृन्तभागेन सह फलशाकत्वेन प्रसिद्धम् । काञ्जिकमारनाळकं धान्याम्लमिति यावत् । पिण्डमूलकं चिन्त्यम् । करञ्जं चिरि-

बिल्वफलं 'चिरिबिल्वो नक्तमालः करजिश्चकरञ्जके' इत्यमरः। गृञ्जनं पलाण्डुविशेषः। एतच्च लशुनादीनां दशविधपलाण्डुविशेषाणामपि प्रदर्शनार्थं, ते च विशेषाः[1]—

> लशुनं दीर्घपत्रश्च पिच्छगन्धो महौषधम्।
> फरण्डश्च[2] पलाण्डुश्च लतार्कश्च परारिका॥
> गृञ्जनं यवनेष्टं च पलाण्डोर्दश जातयः।

इति वदन् दशविधावान्तरजातिष्वपि पलाण्डुशब्दः सामान्येन वर्तत इति दर्शयति। अत एवामरसिंहेन 'पलाण्डुस्तु सुकन्दकः' इति सामान्यनामतयोक्तम्। अवान्तरजातिविशेषेऽपि पलाण्डुशब्दो वर्तते 'फरण्डश्च पलाण्डुश्च' इति विशिष्यात्रैव प्रयुक्तत्वात्। पुराणेऽपि दशविधानां प्रदर्शनार्थं केचन विशेषा निषिद्धाः—

> लशुनं गृञ्जनं चैव पलाण्डुः पिण्डमूलकम्।
> कलम्बी यानि चान्यानि हीनानि रसगन्धतः॥
> पिप्पलं मरिचं चैव पटोलं बृहतीफलम्।
> वांशं करीरं सुरससर्जकं भूस्तृणानि च॥
> अवेदोक्ताश्च निर्यासा लवणान्यौषराणि च।
> श्राद्धकर्मणि वर्ज्यानि याश्च नार्यो रजस्वलाः॥

इति। हरिद्रक्तकन्दविशेषो गृञ्जनः। 'हरिद्रक्ते तु गृञ्जनः' इति वैजयन्त्यामुक्तत्वात्। श्वेतकन्दविशेषः पलाण्डुः, 'पलाण्डौ तु

---

[1] वैजयन्त्याम्.
[2] करण्यश्च (पाठः)

श्वेतकन्दो मुकुन्दकः' इति तत्रैवोक्तत्वात् । लशुनाख्यस्य विशेषस्य भेदकधर्मो वैद्यकादौ द्रष्टव्यः । वांशं करीरं वंशाङ्कुरः । 'वंशाङ्कुरे करीरोऽस्त्री' इत्यमरः । सर्जकः पीतसालकः । 'अथो पीतसालके । सर्जकासनबन्धूकपुष्पप्रियकजीवकाः' इत्यमरः । अवेदोक्तनिर्यासाः वेदे ग्राह्यत्वेनोक्तनिर्यासव्यतिरिक्तनिर्यासाः लोहितनिर्यासाः व्रश्चनप्रभवाश्चेति यावत्। 'अथो खलु य एव लोहितो यो वाऽऽव्रश्चनान्निर्येषति तस्य नाश्यं काममन्यस्य'[1] इति श्रुतिः । लवणान्यौषराणि ऊषरप्रभवाणि कृतलवणानीति यावत् । याश्च नार्यो रजस्वलाः । त्रिरात्रादूर्ध्वमप्यनिवृत्तरजस्काः । ताश्च वर्ज्या इत्यर्थः । क्षीरविशेषा अपि वर्ज्याः पुराणे दर्शिताः—

आविकं मार्गमौष्ट्रं च सर्वमैकशफं च यत् ।
माहिषं चामरं चैव पयो वर्ज्यानि जानता ॥

आविकं अवीनां पयः । मार्गं मृगीणां पयः । औष्ट्रं उष्ट्रीणां पयः । एकशफा बडवादयः तासां पयः ऐकशफम् । चामरं चमरीपयः । भरद्वाजोपि—

नक्तोद्धृतं तु यत्तोयं पल्वलाम्बु तथैव च ।
स्वल्पाम्बु कूश्माण्डफलं वज्रकन्दं च पिप्पली ॥
तण्डुलीयकशाकं च माहिषं च पयो दधि ।
शिम्बिकानि करीराणि कोविदारं गवेधुका ॥
कुलुत्थशणजम्बीरकरम्भानि तथैव च ।

[1] तै सं. २–५–१

नीरसान्यपि सर्वाणि भक्ष्यभोज्यानि कानिचित् ॥
एतानि नैव देयानि सर्वस्मिन् श्राद्धकर्मणि ।

वज्रकन्दं कीदृशमिति चिन्त्यम् । शिम्बिकानि शिम्बीधान्यानि चणकादीनि । करम्भः दधिमिश्रास्सक्तवः । 'करम्भो दधिसक्तवः' इत्यमरः । माहिषं तु घृतं देयं, पयो दधीति विशेषितत्वात् । सर्वस्मिन् श्राद्धकर्मणीति वचनात् यद्यपि कूश्माण्डफलादीनि नित्यश्राद्धेऽपि न देयानीति प्रतिभाति, तथाऽपि प्रतिदिनं श्राद्धीयान्नसंपादनस्यातिदुष्करत्वान्नित्यश्राद्धेतरसर्वश्राद्धकर्मणीति व्याख्येयम् । अत एव रामायणेऽभिहितम्—

इङ्गुदैर्बदरैर्बिल्वैः रामस्तर्पयते पितॄन् ।
यदन्नं पुरुषो भुङ्क्ते तदन्नास्तस्य देवताः ॥ इति ॥

चतुर्विंशतिमतेऽपि—

यावनाळानपि तथा वर्जयन्ति विपश्चितः ।
तैलमप्यापदि प्राज्ञाः सम्प्रयच्छन्ति याज्ञिकाः ॥
कन्दमूलफलालाभे एवमाहुर्मनीषिणः ।

तैलमित्यत्रापि वर्जयन्तीति संबध्यते । यावनाळतैलादिनिषिद्धमपि अनिषिद्धकन्दमूलफलालाभे याज्ञिकाः प्रयच्छन्तीत्येवं मनीषिण अहुरित्यर्थः । कन्दमूलफललाभे तु यावनाळादिकं न देयमिति व्यतिरेकाद्गम्यते । मृष्टान्नलाभे तु सुतरां न देयमिति दण्डापूपनयाद्गम्यते । स्मृत्यन्तरे तु वर्ज्यमुक्तम्—

———णोग्रलवणं विरसं भावदूषितम् ।

राजसं तामसं चैव हव्यकव्येषु वर्जयेत् ॥

अतिशुक्तं अत्यर्थं स्वाभाविकरसत्यागेन कालवशात्कुत्सितरसान्तरापन्नम् । उग्रलवणं लवणाधिक्येनासह्यम् । पुराणेऽपि—

आसनारूढमन्नाद्यं पादोपहतमेव च ।
अमेध्यादागतैस्स्पृष्टं शुक्तं पर्युषितं च यत् ॥
द्विस्स्विन्नं परिदग्धं च तथैवाग्रावलेहितम् ।
शर्कराकीटपाषाणैः केशैर्यच्चाप्युपद्रुतम् ॥
पिण्याकं मथितं चैव तथाऽतिलवणं च यत् ।
सिद्धाः कृताश्च ये भक्ष्याः प्रत्यक्षलवणीकृताः ॥
वाग्भावदुष्टाश्च तथा दुष्टैश्चोपहतास्तथा ।
वाससा चावधूतानि वर्ज्यानि श्राद्धकर्मणि ॥

इति । यदन्नमवश्रयणान्तया पचिक्रियया सिद्धं सन्मार्दवार्थं पुनरुदकं निनीयावश्रयणान्तमेव पच्यते तत् द्विस्स्विन्नं, न तु यत्सिद्धमेव पुनरौष्ण्यनिर्वाहार्थमग्नावधिश्रियते । 'अत्युष्णं सर्वमन्नं स्यात्' इति वचनादौष्ण्यार्थं पुनराधिश्रयणाभ्यनुज्ञानात् । यस्य तु प्रथमपाकेन भक्षणयोग्यतैव न भवाति तत्र पूर्वपाकस्यानिवृत्तत्वात् पुनरुदकं निनीय पाकेऽपि श्राद्धे नित्यभोजनादौ च नास्ति प्रतिषेधः । यत्र भक्ष्याविशेषसिद्ध्यर्थमुदकादिना पूर्वं पक्त्वा तैलादिना पाकः क्रियते तत्रापि न द्विस्स्विन्नता, विशिष्टभक्ष्यसिद्धिफलकपाचिक्रियाया उदके तैले च क्रियाया एकत्वात् । परिदग्धमतिदग्धम् । अग्रावलेहितं

यदर्थमुत्पादितं तन्निर्वृत्तेः प्रागन्येन स्वादितम् । शर्करास्सूक्ष्म पाषाणवत्कठिना मृद्विशेषाः । कीटोत्र क्रिमिरमेध्यसेवी । पाषाणाः सूक्ष्मतरसर्षपादिकल्पाः । पिण्याकस्तैलिकयन्त्रे घनीभूततिलचूर्णं, 'तिलकल्के च पिण्याकः' इत्यमरसिंहेनाभिधानात् । मथितं जलमिश्रणेन विना विलोडितं दधि । 'तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्धाम्बु निर्जलम्' इति तेनैवाभिधानात् । सिद्धा भक्ष्याः स्वत एव भक्ष्यतया सिद्धा आमलकादयः । कृता भक्ष्या माषपिष्टादिना कृतवटकादयः । प्रत्यक्षलवणीकृताः प्रत्यक्षेण लवणेन लवणीकृताः सिद्धभक्ष्याणां कृतभक्ष्याणां च प्रत्यक्षलवणीकृता इत्येतद्विशेषणम् । प्रत्यक्षग्रहणं दध्यादिना वस्त्वन्तरेण प्रच्छादितलवणेन लवणीकृता ग्राह्या इति गम्यते । यद्यपि नित्यभोजने पर्युषितस्य प्रतिषिद्धत्वादत्रापि तद्वर्जनं सिद्धं, तथाऽपि तत्राभ्यनुज्ञातस्य यवगोधूमादिपिष्टविकारस्यापि पर्युषितस्य श्राद्धे वर्जनीयत्वार्थं पर्युषितप्रतिषेध इति मन्तव्यम् । अत्यर्थप्रचुरद्रव्येषु कूश्माण्डादिषु दोषश्रवणाभावे निवृत्तिर्न भवतीति दोषोपि स्मृत्यन्तरे दर्शितः—

कूश्माण्डं माहिषं क्षीरमाढक्यो राजसर्षपाः ।
चणका राजमाषाश्च घ्नन्ति श्राद्धं न संशयः ॥
पिण्डालूकं च तुण्डीरं करमर्दांश्च नालिकाम् ।
कूश्माण्डं बहुबीजानि श्राद्धे दत्वा व्रजन्त्यधः ॥

पिण्डालूकतुण्डीरे कीदृशे इति चिन्त्ये । करमर्दः कृष्णपाकफलः । 'कृष्णपाकफलाविग्नसुषेणाः करमर्दके' इत्यमरः । बहुबीजानि मातुलुङ्गादीनि । पुरुषार्थतया प्रतिषिद्धस्य सर्वस्य श्राद्धप्रतिषेधः न सिद्ध इति श्राद्धेऽपि प्रतिषेधार्थमुक्तं षट्त्रिंशन्मते—

क्षीरादि माहिषं वर्ज्यमभक्ष्यं यच्च कीर्तितम् ।

आदिग्रहणान्माहिषं दधि गृह्यते । 'माहिषं च पयो दधि' इति भरद्वाजस्मरणात् । माहिषं च मांसं गृह्यते—

माहिषाणि च मांसानि तथा श्राद्धे विवर्जयेत् ।

इति विष्णुपुराणेऽभिधानात् । पुरुषार्थतया प्रतिषेधकशास्त्रेषु यदभक्ष्यं प्रकीर्तितं तच्च सर्वं श्राद्धे वर्ज्यं श्राद्धकर्मणि न देयमित्यर्थः ॥

इति स्मृतिचन्द्रिकायां श्राद्धकर्मणि वर्ज्यद्रव्याणि.

---

## अथ प्रसङ्गान्नित्यभोजने वर्ज्यद्रव्यविषयाणि कानिचिद्वचनानि लिख्यन्ते.

तत्र देवलः—

अभोज्यं प्राहुराहारं शुक्तं पर्युषितं तथा ।
अन्यत्र मधुसक्तुभ्यां भक्ष्येभ्यस्सर्पिषो गुडात् ॥

अत्र शुक्तपदस्यार्थो बृहस्पतिना दर्शितः—

अत्यम्लं शुक्तमाख्यातं निन्दितं ब्रह्मवादिभिः । इति ॥

अस्यायमर्थः—यदोदनसूपादिकं स्वतोऽनम्लमीषदम्लं वा हस्त-

नमद्यतनं वा दीर्घकालस्थितिभ्यां वा निजरसं हित्वाऽम्लत्वमम्लीभवति तदेव लोके शुक्तमाख्यातं निसर्गतोऽत्यम्लं काञ्जिकादिद्रव्यमिति । पर्युषितमग्निपक्वं सद्रात्र्यन्तरितं सदा अभोज्यं श्राद्धभोजन इव नित्यभोजनादावप्यभोज्यमित्यर्थः । मध्वादिकं पर्युषितमपि भोज्यमिति । भक्षा अपूपादयः । मधुनोपि सुरसत्वाय गुडवदेव पाकः क्रियते न भोजनदिनादन्येद्युः पक्वं मधु पर्युषितं भवति ।

नाद्याच्छास्त्रनिषिद्धं तु भक्ष्यभोज्यादिकं द्विजः ।

इति । अयमर्थः—'नापणीयमन्नमश्नीयान्न द्विःपक्वं न पर्युषितम्' इति ॥

घृतं वा यदि वा तैलं विप्रो नाद्यान्नखच्युतम् ।
यमस्तदशुचिं प्राह तुल्यं गोमांसभक्षणम् ॥
हस्तदत्ताश्च ये स्नेहा लवणं व्यञ्जनानि च ।
दातारं नोपतिष्ठन्ति भोक्ता भुञ्जति किल्बिषम् ॥
एकेन पाणिना दत्तं शूद्रदत्तं न भक्षयेत् ।
घृतं तैलं च लवणं पानीयं पायसं तथा ॥

इत्येवमादिशास्त्रनिषिद्धमापणीयमन्नादिकं द्विजो नाद्यादिति । 'नापणीयमन्नमश्नीयात्' इत्युक्तस्य निषिद्धस्य क्वचिदपवादमाह स एव—

अपूपास्सक्तवो धानास्तक्रं दधि घृतं मधु ।
एतत्पण्येषु भोक्तव्यं भाण्डलेपो न चेद्भवेत् ॥

इति। द्विःपक्वान्ननिषेधस्यापवादोऽपि—'यद्यद्विःपक्वं तत्सर्वं नाश्नीयात्' द्विःपक्वं नाम तदुच्यते यत्प्रथमपाकत एव भक्षणयोग्यतया पक्वं सदपि मार्दवादिगुणान्तरं सम्पादयितुं पुनः पच्यते। एवञ्च यत्तिक्ते शाकादौ प्रथमपाकमात्रेण भक्षणयोग्यता न भवति किंतु सह्यतिक्तरसयुक्तो भवति तत्र प्रथमपाकस्यासमग्रत्वात्पुनः पाके कृतेऽपि न द्विःपक्वता भवति। यत्र भक्षविशेषसिद्ध्यर्थं उदकादिना पूर्वं पक्त्वा तैलादिनाऽपि पाकः क्रियते तत्रापि न द्विःपक्वता भवति विशिष्टभक्ष्यसिद्धिफलकपचिक्रियाया उदके तैले च क्रियमाणाया एकत्वादिति मन्तव्यम्। न पर्युषितमश्नीयादित्यस्यापवादमाह यमः—

अपूपाश्च करम्भाश्च धाना वटकसक्तवः।
शाकं मांसमपूपं च सूपं कृसरमेव च॥
यवागूः पायसं चैव यच्चान्यत् स्नेहसंयुतम्।
सर्वं पर्युषितं भोज्यं शुक्तं च परिवर्जयेत्॥

अपूपाः यवगोधूमपिष्टविकारा मण्डकादयः। करम्भाः दधिमिश्रितास्सक्तवः। धाना भृष्टयवतण्डुलाः। वटकाः माषपिष्टमयास्तैलपक्वाः स्तोकतया कृताः प्रसिद्धाः। शाकं मांसं चान्येद्युः पक्वं, न पुनरन्येद्युराहृतं तावन्मात्रेण पर्युषितत्वायोगात्। एवञ्चान्येद्युः पक्वमोदनं तस्मिन्नेव दिने संस्कारद्रव्याणि प्रक्षिप्य शाकविशेषतया कल्पितं पर्युषितमपि भोज्यमेवेत्यवगन्तव्यम्। सक्तवो भृष्टयवतण्डुलपिष्टानि। पुनरपूपग्रहणं

गोधूमेतरचणकादिपिष्टविकारस्यापूपप्रायस्यापि परिग्रहणार्थम्। सूपो मुद्गाढक्यादिकृतं व्यञ्जनम् । कृसरं भृष्टतिलचूर्णमिश्रमोदनम्। यवागूः अल्पतण्डुलचूर्णमिश्रं पेयरूपमन्नम् । पायसं पयसा शृतमन्नम् । यच्चापूपादिभ्य उक्तेभ्योऽन्यदोदनादिकं स्नेहसंयुतं दधिघृतादिना स्नेहद्रव्येणाभिघारितं सत्पर्युषितं सर्वं भोज्यं यावदशुक्तं वर्तते । यदा तु पर्युषितमपूपादिकं स्नेहसंयुक्तमोदनादिकं वा शुक्तं जातं तदा तदपि वर्जयेदित्यर्थः । अभोज्यमित्यनुवृत्तौ वसिष्ठोपि--'अन्नं पर्युषितं कामं तु दध्ना घृतेन यदभिघारितमुपयुञ्जीत' इति । अन्नं पर्युषितमित्यत्रानुवृत्तेनाभोज्यमितिपदेन सम्बन्धः । दध्ना घृतेन वाऽभिघारितं सत्पर्युषितमन्नं काममुपयुञ्जीत अश्नीयादित्यर्थः । अतएव मनुः—

यत्किञ्चित् स्नेहसंयुक्तं भक्ष्यभोज्यमगर्हितम् ।
तत्पर्युषितमप्याद्यं हविश्शेषं तु यद्भवेत् ॥

उपयोजयेदित्यनुवृत्तावापस्तम्बोपि—'उदकेऽवधाय कृतान्नं पर्युषितम्' इति । यदा तु कृतान्नं उदकेऽवधायरात्रौ स्थापितं तदा तदन्नं पर्युषितमप्युपयुञ्जीतेत्यर्थः । एवं काञ्जिकं सम्पादयितुं तण्डुलक्षाळनोदके निहितस्यान्ननिस्स्रावस्य रात्र्यन्तरितस्य पर्युषितत्वेऽप्यभोज्यत्वं नास्तीति तज्जातस्य काञ्जिकस्याभोज्यत्वं सुतरां नास्तीति मन्तव्यम् । अश्नीयादित्यनुवृत्तौ शङ्खलिखितावपि—'न पर्युषितमन्यत्र दधिगुडगोधूमयव-

पिष्टविकारेभ्यः' इति । न पर्युषितमित्यस्य अश्नीयादित्यनुवृत्तेन पदेन सम्बन्धः । यद्यपि दधि गुडवन्न पाकासिद्धमिति न पर्युषितं, तेन तस्य पर्युदासो व्यर्थ इति प्रतिभाति । तथाऽपि नान्येद्युः पाकेन सिद्धत्वं पर्युषितत्वे प्रयोजकं किन्त्वदनीयतया साध्यत्वमिति दध्नोप्यदनीयतया साधितस्य पर्युषितत्वमस्तीति तत्पर्युदासोऽर्थवानेव । याज्ञवल्क्यस्तु 'पर्युषितं वर्जयेत्' इति स्वोक्तस्य प्रतिप्रसवार्थमाह—

अन्नं पर्युषितं भोज्यं स्नेहाक्तं चिरसंस्थितम् ।
अस्नेहा अपि गोधूमयवगोरसविक्रियाः ॥

चिरसंस्थितमिति पदं चिरसंस्थिता इति विपरिणामेन गोधूमयवगोरसविक्रियाः इत्यत्रापि संबन्धनीयम् । अतएव मनुः—

चिरस्थितमपि त्वाद्यमस्नेहाक्तं द्विजातिभिः ।
यवगोधूमजं सर्वं पयसां चैव विक्रियाः ॥

इति । गोधूमविक्रियाः मण्डकादयः । यवविक्रियाः सक्त्वादयः । गोरसः क्षीरं तद्विकाराः कूर्चिकाद्याः, 'कूर्चिका क्षीरविकृतिः' इत्यमरसिंहेनोक्तत्वात् । गोरसविकृतावपि 'शुक्तं चेत्परिवर्जयेत्' इति यमोक्तं द्रष्टव्यम् । भोज्यत्वेनोक्तस्य पर्युषितस्य सर्वस्यापि श्राद्धे वर्ज्यत्वं पूर्वस्मिन् प्रकरणेऽभिहितम् । तेन भोज्यत्वात् श्राद्धेऽप्यनिषिद्धमिति भ्रमो न कार्यः। शङ्खस्तु शुक्तद्रव्येष्वपि किञ्चिद्भोज्यमित्याह—

दधि भक्ष्यं च शुक्तेषु यच्चान्यद्दधिसम्भवम् ।

ऋबीषपक्वं भक्ष्यं स्यात् सर्पिर्युक्तमिति स्थितिः ॥

अनग्निकः ऊष्मा ऋबीषं, तेन पक्वं ऋबीषपक्वम् । धान्यराश्या दिगतोष्मपक्वमिति यावत् । तथाच 'नर्बीषपक्वस्याश्नीयात्' इत्यापस्तम्बसूत्रं व्याचक्षाणेन धूर्तस्वामिनोक्तं— 'अनग्निकः ऊष्मा ऋबीषं तत्पक्वस्य प्रतिषेधः क्रियते' इति ग्रन्थेन । ऋबीषपक्वं शुक्तमपि सर्पिषा युक्तं भक्ष्यं स्यात् । न तद्रहितमित्यर्थः । दधिसम्भवं तक्रनवनीतादि । भक्ष्यं भक्षणार्हमित्यर्थः । यमस्त्वापदि शुक्तस्य प्रक्षाळनात् भक्षणार्हता भवतीत्याह—

शुक्तानि हि द्विजोऽन्नानि न भुञ्जीत कदाचन ।
प्रक्षाळितानि निर्दोषाण्यापद्धर्मो यदा भवेत् ॥

एवं पर्युषितस्यापदि प्रक्षाळनाद्भक्षणार्हता भवति । अतएव तस्य भोजनेऽभ्यनुज्ञा तेनैव कृता—

मसूरमाषसंयुक्तं तथा पर्युषितं च यत् ।
तत्तु प्रक्षाळितं कृत्वा भुञ्जीत ह्यभिघारितम् ॥

इति । बीजभूतधान्यादिकं भोज्यमपि भाविबहुफलहेतुविनाशस्यात्यन्तानुचितत्वात् अनापदि पर्युषितवत् नोपभुञ्जीतेत्याह देवलः—

न बीजान्युपयुञ्जीत रोगापत्तिमृते बुधः ।
फलान्येषामनन्तानि बीजानां हि विनाशयेत् ॥

इति। एषां बीजानामनन्तानि फलानि यस्मादुपयुञ्जानो विनाशयेत् तस्मादनापदि बीजानि नोपयुञ्जीतेत्यर्थः। स्वतो विशुद्धमप्याहारं मृतमक्षिकादिसंसर्गदूषितं वर्जयेदित्याह स एव—

विशुद्धमपि चाहारं मक्षिकाक्रिमिजन्तुभिः।
केशलोमनखैर्वाऽपि दूषितं परिवर्जयेत्॥

अनापदीति शेषः। अतएव सुमन्तुः—'केशकीटक्षुतवचोभिहतं श्वभिराघ्रातं प्रेक्षितं वाऽदधि पर्युषितं पुनस्सिद्धं चण्डालावेक्षितमभोज्यमन्यत्र हिरण्योदकैः स्पृष्टात्' इति। क्षुतवचः क्षुतवशाज्जातो ध्वानः तेन अभिहतं उपहतम्। श्वभिरिति बहुवचनं येषामवघ्राणप्रेक्षणे दोषावहे तादृशप्राणिनां स्मृत्यन्तरोक्तगवादीनां सङ्ग्रहार्थम्। अदधि पर्युषितं पर्युदस्तदध्यादिव्यतिरिक्तं पर्युषितम्। पुनस्सिद्धं द्विःपक्वम्। एतदुक्तं भवति—विशुद्धाहारं मक्षिकादिसंसर्गतो दुष्टं संत्यज्य अदुष्टाहारं भुञ्जीत असम्भवे तु मक्षिकादिमपास्याहारशुद्ध्यर्थं उदकेन प्रोक्षणं हिरण्यस्पर्शनं वा कृत्वा भुञ्जीतेति। अदुष्टाहारान्तरासम्भवेऽपि यदवश्यं वर्ज्यं तदाह देवलः—

अवलीढं श्वमार्जारध्वाङ्क्षकुकुटमर्कटैः।
भोजने नोपयुञ्जीत तदमेध्यं हि सर्वतः॥

ध्वाङ्क्षः काकः। ब्रह्मपुराणेऽपि—

शूद्रभुक्तावशिष्टं तु नाद्याद्भाण्डस्थितं क्वचित्।

इति। तेन भाण्डादुद्धृतमन्यस्मिन् पात्रे निक्षिप्य देयम्।

शूद्रोच्छिष्टवल्लशुनादिसंस्पृष्टमपि नाद्यात् । तथाच भविष्यत्पुराणे—

सुरालशुनसंस्पृष्टं पीयूषादिसमन्वितम् ।
संसर्गादुच्यते तद्धि शूद्रोच्छिष्टवदाचरेत् ॥

इति । पीयूषं नवप्रसूतायाः गवादेः क्षीरम् 'पीयूषोभिनवं पयः' इत्यमरेणाभिधानात् । आदिशब्देन छत्राकादिसंस्पृष्टं गृह्यते ! संसर्गदुष्टवज्जात्या दुष्टमपि शाकादिकं नाद्यात् । 'वृन्ताकनाळिकापोतकुसुम्भाश्मन्तकाश्चेति शाकानामभक्ष्याः' इति पैठीनसिस्मरणात् । वृन्ताकं बृहतीसदृशस्थूलोद्भिदं फलं वृन्तभागेन सह शाकत्वेनप्रसिद्धम् । नाळिका दीर्घनाळा शिरसि स्वल्पफलान्विता, तस्याः फलस्य नाळभागस्य च शाकत्वेन प्राप्तेः प्रतिषेधः । पोतं पोतिका, 'पोतिका तु सुताह्वया' इति वैजयन्त्यामभिधानात् । यस्याः पत्रशाकसेवा निद्रातिशयकारिणी सा सुताह्वया ज्ञेया । अस्माकं त्वस्य स्वरूपं कीदृशमिति चिन्त्यम् । वृन्ताकं श्वेतमेवाभक्ष्यं—

गण्डूलं श्वेतवृन्ताकं कूश्माण्डं च विवर्जयेत् ।

इति देवलेन वृन्ताकविशेषस्य प्रतिषेधात् । विशेषप्रतिषेधश्च शेषाभ्यनुज्ञानार्थ इति न्यायेन श्वेतेतरवृन्ताकभक्षणाभ्यनुज्ञा गम्यते । गण्डूलं कण्डूलाफलं अत्यन्तकण्डूतिजनकं बहुरोमयुक्तं वर्षाकालभवम् । अत एवामरसिंहेन 'कण्डूला प्रावृषायणी' इत्युक्तम् । कूश्माण्डं कुम्भवद्वर्तुलं अदीर्घालाबुसदृशम् ।

कुसुम्भं कण्टकरहितमभक्ष्यं, अकण्टकित्वविशिष्टस्य कुसुम्भस्य स्मृत्यन्तरे निषेधो विद्यत इति देवस्वामिनोक्तत्वात् । वृन्ताकनाळिकापोतकुसुम्भानां च भक्षणे उशनसा दोषो दर्शितः—

कुसुम्भनाळिकाशाकं वृन्ताकं पोतिकं तथा ।
भक्षयन् पतितस्तु स्यादपि वेदान्तगो द्विजः ॥

इति । भविष्यत्पुराणे जातिदुष्टानां शाकानामुदाहरणतया कानिचिच्छाकान्युक्तानि—

लशुनं गृञ्जनं चैव पलाण्डुं कवकानि च ।
वार्ताकनाळिकालाबु ह्यवेयाज्जातिदूषितम् ॥

लशुनादिकं द्रव्यं संसर्गेण विनाऽपि लशुनत्वादिजात्यैव दूषितमवेयाज्जानीयादित्यर्थः । जात्या दूषितमिति ज्ञानस्य फलं असत्यपि दुष्टसंसर्गे निवृत्तिः । लशुनाख्यविशेषस्य भेदको धर्मो वैद्यकादौ द्रष्टव्यः, लशुनगृञ्जनपलाण्डुकाः पलाण्डुविशेषाः। तत्र हरिद्रक्तवर्णविशेषो गृञ्जनः । 'हरिद्रक्तो गृञ्जनः' इति वैजयन्त्याम् । श्वेतकन्दविशेषः पलाण्डुः, 'पलाण्डौ तु श्वेतकन्दो मुकुन्दकः' इति तत्रैवोक्तत्वात् । एतच्च लशुनादित्रिविधपलाण्डुविशेषाभिधानं—

लशुनं दीर्घपत्रं च पिच्छगन्धो महौषधम् ।
वरण्यश्च पलाण्डुश्च लतार्कश्च परारिका ॥
गृञ्जनं यवनेष्टश्च पलाण्डोर्दश जातयः ।

इत्युक्तदशविधपलाण्डूपलक्षणम् । महौषधवरण्यादीनामपि भेदो

वैद्यादौ द्रष्टव्यः। कवकं छत्राकम्। वार्ताकं क्षुद्रवार्ताकसंज्ञकबृहतीफलं कण्टकारिकाख्यबृहतीफलात् किञ्चित् स्थूलम्। कवकभक्षणे तु दोषा यमेन दर्शिताः—

भूमिजं वृक्षजं वाऽपि छत्राकं भक्षयन्ति ये।
ब्रह्मघ्नांस्तान्विजानीयाद्ब्रह्मवादिषु गर्हितान्॥

इति। हारीतोपि दुष्टद्रव्यसंसर्गाभावेऽपि वर्ज्यानाह—न वटप्लक्षोदुम्बरदधित्थनीपमातुलुङ्गानि वा भक्षयेत्' इति। दधित्थं कपित्थफलम्। नीपं कदम्बपत्रम्। शेषाणि व्यक्तानि। मनुरपि—

लोहितान् वृक्षनिर्यासान् व्रश्चनप्रभवांस्तथा।
शेलुं गव्यं च पीयूषं प्रयत्नेन विवर्जयेत्॥

लोहितान् वृक्षनिर्यासान् लाक्षादीन्। व्रश्चनप्रभवान् निर्यासानपि शाल्मलिनिर्यासप्रभृतीन्। लोहितग्रहणात् निर्यासत्वेऽपि पाटलवर्णहिंग्वादेः श्वेतवर्णकर्पूरादेश्च न निषेधः। शेलुः श्लेष्मातकाख्यो वृक्षः। पीयूषोऽभिनवं पयः। गव्यपीयूषेतु विशेषो ब्रह्मपुराणे दर्शितः—

घृतात्फेनं घृतान्मण्डं पीयूषमथवाऽऽर्द्रगोः।
सगुडं मरिचाक्तं तु तथा पर्युषितं दधि॥
दीर्णं तक्रमपेयं च नष्टस्वादुकफेनवत्।

अयमर्थः—घृतादुद्धृत्य तत्फेनमात्रं तदग्रमात्र च न पेयम्। तथा आर्द्रगोः पीयूषं यावदार्द्रता सरजस्कता गवि प्रसूतिसमये

योनौ प्रवृत्ताऽनुवर्तते तावत् क्षीरमपेयम्। तथा यद्दधि गुडमरिचमिश्रं यत्पुर्युषितं तदप्यपेयम्। तथा यत्तक्रं दीर्णं दर्वीघट्टनशून्यं अग्नितापादिना स्वतो वा स्फुटितं बहुदिनस्थित्या संजातेन फेनेन युक्तं, अत्यर्थं शुक्ततया नष्टस्वादुकमपेयमिति। याज्ञवल्क्योपि वर्ज्यक्षीरमाह—

संधिन्यनिर्दशावत्सगोपयः परिवर्जयेत्।

इति। तत्रसन्धिन्याः गोः पयः परिवर्जयेदित्येतत्स्फुटमुक्तं हारीतेन—'सन्धिनी वृषस्यन्ती तस्याः पयो न पिबेत् तद्दतुमद्भवति' इति। वृषस्यन्ती कामुकी मैथुनेच्छावतीति यावत्। तदीयं पयः ऋतुमद्भवति। ऋतुमत्याः सम्बन्धि भवतीत्यर्थः। अनेन एतदुक्तं भवति—यावति काले मैथुनेच्छाऽनुवृत्तिस्तावति काले तस्याः पयो न पिबेदिति। तेन मैथुनेच्छानिवृत्तौ तस्याः पयो न निषिद्धमिति मन्तव्यम्। 'अनिर्दशायाः पयः परिर्वर्जयेत्' इत्यस्यायमर्थः—प्रसवप्रभृत्यनिर्गतदशरात्रायाः पयः वर्जयेदिति। एतच्च रजोनिवृत्तिकालोपलक्षणार्थम्। तेन दशरात्रादर्वाग्रजोनिवृत्तौ नास्ति तत्र प्रतिषेधः। दशरात्रादुपर्यपि रजोऽनुवृत्तावस्ति प्रतिषेध इति बोद्धव्यम्। अतएव 'नवसूतायाः पयः न पिबेत् सरजस्त्वात्' इत्युक्त्वा हारीतेनोक्तं—'सप्तरात्रादित्येके दशरात्रादित्यपरे मासेनापीयूषं भवतीति धर्मविदः' इति। नवसूतायाः पयः सप्तरात्रादुपर्यपि पीयूषं भवतीत्येके। दशरात्रादुपर्यपि पीयू-

षं भवतीत्यन्ये मन्यन्त इत्यर्थः। एतेषु सप्तरात्रादिपक्षेषु यथा रजोनिवृत्ति व्यवस्था द्रष्टव्या। 'अवत्सायाः पयः परिवर्जयेत्' इत्यस्यायमर्थः—अवत्सा वत्सशून्या मृतवत्सेति यावत्। तस्याः पयः यावद्वत्सवियोगशोकानुवृत्तिः तावत् विवर्जयेदिति। अतएव 'पयो न पिबेत्' इत्यनुवृत्तौ हारीतेनोक्तं— 'हतवत्सायाः शोकाविष्टत्वात् नवसूतायास्सरजस्त्वात्' इति। न च वाच्यं शोकाविष्टत्वादित्यस्य हेतुवन्निगदरूपार्थवादत्वाच्छोकनिवृत्तावपि मृतवत्सायाः पयो न पिबेदिति। सरजस्त्वादिति हेतुसमभिव्याहारात्। अतो हेतुरेवायं शोकाविष्टत्वादिति, न हेतुवन्निगदार्थवादः। न च वाच्यं सरजस्त्वादित्यपि हेतुवन्निगदार्थवाद एव न तु हेतुरिति कथं तत्साहचर्यादस्य हेतुत्वं निश्चीयत इति। हेतुविवक्षयैव सरजस्त्वादित्यस्य प्रयुक्तत्वात्। यदि हेतुविवक्षया सरजस्त्वादिति न प्रयुक्तं स्यात् तदा दशरात्रात्प्रागूर्ध्वं यदा रजोनिवृत्तिः तदा नवप्रसूतायाः पयः पेयमित्ययमर्थो यः प्रतिपादयितुमिष्टः सोऽप्रतिपादितो भवेत्। ततश्च 'सप्तरात्रादित्येके दशरात्रादित्यपरे मासेनापीयूषं भवतीति धर्मविदः' इत्यनन्तरोक्तस्य तदीयग्रन्थस्य अनिर्वाहस्स्यात्। तस्माद्धेतुत्वेनैव सरजस्त्वादित्यस्यान्वयो नार्थवादत्वेन। तत्समभिव्याहाराच्छोकाविष्टत्वादित्यपि हेतुत्वेनैवान्वयो नार्थवादत्वेनेत्यलं बहुनाऽतिप्रसङ्गेन। धर्मविद्ग्रहणं रजोनिवृत्तिसंदेहस्याप्यभा-

वस्तत्रेति ज्ञापनार्थं कृतम्। तेन यदा सप्तरात्रादपि रजोनिवृत्तिनिश्चयः तदा तत्पयःपानेऽपि न धर्महानिः। गव्यपीयूषवदजामहिष्योरपि पीयूषमपेयम्। तथाच वासिष्ठः—'गोमहिष्यजानामनिर्दशम्' इति। पयो न पेयमिति शेषः। गौतमोपि वर्ज्यं क्षीरमाह—'संधिनीयमसूस्यन्दिनीनां च' इति। क्षीरं वर्ज्यमिति शेषः। स्यन्दिनी स्वतःप्रस्रवत्क्षीरस्तनी। यमसूः यमळप्रसविनी। बोधायनोपि—'क्षीरमपेयं विवत्साया अन्यवत्सायाश्च' इति। शङ्खोपि 'सर्वासां द्विस्तनीनां क्षीरमभोज्यतया वर्ज्यम्' इति। मनुरपि —

आरण्यानां च सर्वेषां मृगाणां महिषीं विना।

इति। महिषीं विना आरण्यमहिषीव्यतिरिक्तानामित्यर्थः। मृगाणामित्यत्र पूर्वत्र श्रुतेन पय इति पदेन सम्बन्धः। वर्ज्यानीति अनेकावान्तरवाक्यशेषतया उत्तरत्र तिष्ठति। तेनास्यापि वर्ज्यत्वमभिधीयते। यद्यपि मृगाणामिति पुंलिङ्गनिर्देशात्पुंव्यक्तयः प्रतीयन्ते, तथाऽपि पयःपदसम्बन्धायोग्यत्वपरिहाराय पुंलिङ्गेन व्यक्तिमात्रमेव विवक्षितमिति प्रत्येतव्यम्। ततश्चायोग्यत्वानवगतेः पयःपदेन सम्बन्धो युज्यत एव। गौतमोपि—'नित्यमाविकमपेयमौष्ट्रमैकशफं च' इति नित्यमभिनवदशायामनभिनवदशायां चेत्यर्थः। औष्ट्रं उष्ट्र्याः पयः। ऐकशफमेकशफाया वडवादेः पयः। एवञ्च गोमहिष्यजानामेव पयः पेयं नान्यस्या इत्यनुसन्धेयम्। अत एव शङ्खः—

माहिषं गव्यमाजं च भोज्यं क्षीरेषु निर्दिशेत् ।

आपस्तम्बस्तु ब्राह्मणव्यतिरिक्तस्य कपिलापयो वर्ज्यमित्याह—

क्षत्रियश्चैव वृत्तस्थो वैश्यश्शूद्रोऽथवा पुनः ।

यः पिबेत्कपिलाक्षीरं नरकानेत्यपुण्यकृत् ॥

तेन ब्राह्मणव्यतिरिक्तः कपिलागोक्षीरं प्रयत्नेन विवर्जयेदित्यभिप्रायः । ब्राह्मणस्यापि हुतशेषव्यतिरिक्तकपिलाक्षीरपाने दोषो भविष्यपुराणे दर्शितः—

कापिलं यः पिबेच्छूद्रो नरकेन विपच्यते ।

हुतशेषं पिबेद्विप्रो विप्रस्स्यादन्यथा पशुः ॥

इति । हुतशेषे पीते विप्रस्य जन्मान्तरेऽपि विप्रत्वं भवति । अन्यथा हुतशेषव्यतिरिक्तकपिलाक्षीरे पीते विप्रस्य जन्मान्तरे पशुत्वं भवतीत्यर्थः । क्षीरवर्जनविधानादेव तत्स्पृष्टस्यापि वर्जनं पीयूषस्पृष्टवर्जनवदुन्नेयम् । क्षीरवर्जनविधानादेव तद्विकारस्यापि कूर्चादेर्वर्ज्यत्वं सिद्धं, कूर्चादिविकारे क्षीरस्य सद्भावात् । अतएव क्षीरे वर्जयितव्ये तद्रसवत्तोपि पायसादेर्वर्जनं कार्यमिति मीमांसायां प्रतिपादितम् । अतएव निषिद्धक्षीरविकाराणां भक्षणे निषिद्धातिक्रमस्य कृतत्वात्प्रायश्चित्तमाह शङ्खः—

क्षीराणि यान्यभक्ष्याणि तद्विकाराशने बुधः ।

सप्तरात्रव्रतं कुर्यात्प्रयत्नेन समाहितः ॥

इति । भक्ष्यव्रीह्यादिविकारस्यापि देवताभ्यो निवेदनार्थं वैदि-

कमार्गेण लौकिकमार्गेण वोपकल्पितस्य निवेदनात्प्रागप्राश्यत्व- मुक्तं याज्ञवल्क्येन—

देवतार्थं हविश्शिग्रुलोहितव्रश्चनांस्तथा ।

इति । यथा संधिन्यादिपयः परिवर्जयेत् तथा देवतार्थं देव- ताभ्यो निवेदनार्थं लौकिकमार्गेण परिकल्पितमन्नं हविः वैदिकमार्गेण परिकल्पितं पुरोडाशादिकं शिग्र्वादिकं च परि- वर्जयेदित्यर्थः । एवञ्च सन्धिन्यादिपयोवद्यद्यपि देवतार्थान्नस्य पुरोडाशादिहविषश्च सदा परिवर्जनं प्रतिभाति । तथाऽपि देवतानिवेदनात्प्रागेव प्रतिषेधो वेदितव्यः । अतएव पित्रा- दिदेवतार्थमुदाहृत्योक्तं यमेन—

भक्ष्यं भोज्यं तथा पेयं यत्किञ्चित्पच्यते गृहे ।

न भोक्तव्यं पितॄणां तदनिवेद्य कथञ्चन ॥

इति । शिग्रुः शोभाञ्जनः । स च रक्तकुसुमः परिवर्जनीयो- न श्वेतकुसुमः । स्मृत्यन्तरेऽपि 'रक्तशिग्रुं वर्जयेत्' इति वि शिष्टस्यैव निषेधो विद्यत इति देवस्वामिनाऽभिधानात् । शि- ग्र्वादिजातिगर्हितवदाश्रयगर्हितमपि वर्जनीयं, तथाचाङ्गिराः—

द्विविधं गर्हितं प्रोक्तं नित्यमन्नं मनीषिभिः ।

जातितो गर्हितं चैव तथैवाश्रयगर्हितम् ॥

अभोज्यानां विजानीयादन्नमाश्रयगर्हितम् ।

लशुनादिकमन्नं यत्तज्ज्ञेयं जातिगर्हितम् ॥

इति । अभोज्यानामन्नं यत्तदाश्रयगर्हितं विजानीयात् । य

लशुनगृञ्जनच्छत्राकादिकमन्नमदनीयं दुष्टद्रव्यसंसर्गेण विनाऽपि लशुनत्वादिजातितयैव मन्वादिभिर्निषिद्धं तज्जातिगर्हितं ज्ञेयमित्यर्थः। याज्ञवल्क्यस्तु प्रातिपद्येनाश्रयगर्हितमाह—

कदर्यबद्धचोराणां क्लीबरङ्गावतारिणाम्।
वैणाभिशस्तवार्धुष्यगणिकागणदीक्षिणाम्॥
चिकित्सकातुरक्रुद्धपुंश्चलीमत्तविद्विषाम्।
क्रूरोग्रपतितव्रात्यडाम्भिकोच्छिष्टभोजिनाम्॥
अवीरस्त्रीस्वर्णकारस्त्रीजितग्रामयाजिनाम्।
शस्त्रविक्रयिकर्मारतन्तुवायश्ववृत्तिनाम्।
नृशंसराजरजककृतघ्नवधजीविनाम्॥
चेलधावसुराजीवसहोपपतिवेश्मनाम्॥
पिशुनानृतिनोश्चैव तथा चाक्रिकवन्दिनाम्।
एषामन्नं न भोक्तव्यं सोमविक्रयिणस्तथा॥

इति। यो लोभाद्विद्यमानमपि धनं न भुङ्क्ते न ददाति स कदर्यः। तथाच स्मृतिः—

आत्मानं धर्मकृत्यं च पुत्रदारांश्च पीडयेत्।
लोभाद्यः पितरौ भृत्यान् स कदर्य इति स्मृतः॥

बद्धो निगळितः, असिद्धो वा। चोरक्लीबौ प्रसिद्धौ। रङ्गावतारी मल्लादिः। वैणो वीणावादी। अभिशस्तः पतनीयकर्मकरत्वेनाभियुक्तः। वार्धुष्यं निषिद्धवृद्ध्युपजीवनं तेन तद्वान् लक्ष्यते। गणिका वेश्या। गणः सङ्घः। दीक्षी दी-

क्षणीयेष्ट्यादिजनितदीक्षाख्यसंस्कारवान्। दीक्षाख्यसंस्कारवत्त्वं चावभृथेष्टेः प्रागेव अवभृथेष्ट्या तत्संस्कारापगमात् एवञ्च दीक्षणीयेष्ट्यनुष्ठानप्रभृति अवभृथेष्ट्यनुष्ठानपर्यन्तं दीक्षितस्याभोज्यान्नत्वमनया स्मृत्या प्रतिपादितमिति यद्यपि प्रतिभाति। तथाऽपि—'संस्थितेऽग्नीषीमीये यजमानस्य गृहेऽशितव्यम्' इत्यादिश्रुत्या सत्यपि दीक्षाख्यसंस्कारे अग्नीषोमीयपशुयागसमाप्तेः प्रागेव अभोज्यान्नत्वमनया स्मृत्याऽप्युक्तमिति मन्तव्यम्। चिकित्सको भिषक्। आतुरः पापरोगग्रस्तः। पापरोगाश्च देवलेन दर्शिताः—

वातव्याध्यश्मरीकुष्ठमेहोदरभगंदराः।
अर्शस्संग्रहणीत्यष्टौ पापरोगाः प्रकीर्तिताः॥

वातव्याधिः पक्षमारकादिः। अश्मरी मूत्रकृच्छ्रम्। मेहो मधुमेहादिः। उदरं जलोदरादिः। इतरे प्रसिद्धाः। क्रुद्धो धृताभ्यन्तरकोपः। पुंश्चली असती। मत्तो धनादिगर्वितः। परधिक्कारशीलः। विद्विट् शत्रुः। क्रूरो निर्दयः। उग्रः परदुःखोत्पादनपरः। पतितो महापातकी। व्रात्यः पतितसावित्रीकः। डाम्भिकः ख्यातिलाभादिप्रयोजनानुसन्धानेनैव धर्मानुष्ठाता। उच्छिष्टभोजी परभुक्तोज्झितान्नभोजनशीलः। अवीरस्त्री निष्पतिसुता। 'अवीरा निष्पतिसुता' इत्यमरसिंहेनाभिधानात्। स्वर्णकारः कटकमकुटादिस्वर्णविकारकारी। स्त्रीजितः सर्वकार्येषु स्त्रीवशवर्ती। ग्रामयाजी अनेकग्रामयाजकः शस्त्रवि-

क्रयी खड्गादिविक्रयजीवी । श्ववृत्तिः श्ववृत्तवान् सेवक इति यावत् । नृशंसो घातुकः । राजा जनपदपुरपालकः रजको वस्त्रादिरागकर्ता । यः प्राणिववधेन जीवति स वधजीवी । चेलधावः वस्त्रप्रक्षाळकः । सुराजीवः सुराविक्रयी । सहोपपतिवेश्मा भार्याजारसहितगृहः । एषां कदर्यत्वादिदोषदुष्टानां त्रैवर्णिकानामन्नं सोमलताविक्रयादिदोषदुष्टस्य त्रैवर्णिकस्यान्नं कदर्यत्वादिदोषदुष्टस्वामिसम्बन्धात् परम्परया दुष्टमन्नं न भोक्तव्यमित्यर्थः । यद्यपि दीक्षितान्नस्याश्रयकृतदुष्टत्वाभावः, तथाऽपि वचनबलादेवाभोज्यत्वम् । अन्यदपि त्रैवर्णिकान्नं स्वाश्रयगर्हितमभोज्यं वचोभङ्ग्या पैठीनसिराह—'सांवत्सरिकघाण्टिकग्रामकूटान्नं विषं परिवित्तिपरिवित्रिदानविद्धप्रजननवृषलीपतिदिधिषूपतिपुनर्भू पुत्राणां रुधिरम्' इति । सांवत्सरिको ज्यौतिषिकः । घाण्टिको निघण्टुकारेण निरूपितः—'राज्ञां प्रबोधसमये घण्टाशिल्पस्तु घाण्टिकः' इति । ग्रामकूटो ग्रामेऽनन्याधीनतक्षकः 'कूटतक्षोऽनधीनकः' इत्यमरः । विषं विषवद्भक्ष्यम् । यस्मिन् अकृतदारे ज्येष्ठे कनिष्ठेन दारपरिग्रहः क्रियते स ज्येष्ठः परिवित्तिः । य आधानानि ज्येष्ठेनाकृतानि करोत्यसौ कनिष्ठः परिवित्रिविदानः । विद्धप्रजननो विद्धशिश्नः । दिधिषूपतिः पुनर्भूपतिः । रुधिरं रुधिरवद्भक्ष्यम् । यमोपि—

चक्रोपजीवी गान्धर्वः कितवस्तस्करस्तथा ।
ध्वजी दारोपजीवी च शूद्राध्यापकयाजकौ ॥

कुलालश्चित्रकर्मा च वार्धुषिश्चर्मविक्रयी ।

इति । अभोज्यान्ना इति शेषः । चक्रोपजीवी शाकटिकः । ध्वजी मद्यविक्रयी । कुलालः कुम्भकारवृत्त्युपजीवी । शेषाणि प्रसिद्धानि । स्मृत्यन्तरेऽपि—

तथा राजभृतस्यान्नं चोरस्यान्नं तथैव च ।
सूतके मृतके चान्नं स्वर्गस्थमपि पातयेत् ॥
अवलिप्तस्य मूर्खस्य दुष्टवृत्तस्य दुर्मतेः ।
अन्नमश्रद्दधानस्य यो भुङ्क्ते भ्रूणहा स वै ॥

इति । राजभृत्यादीनामन्नमत्यन्तगर्हितं, तेन यत्नाद्वर्ज्यमित्यभिप्रायः । अवलिप्तो गर्वितः । सांवत्सरिकघाण्टिकादीनामपि त्रैवर्णिकान्तर्गतानामेवान्नं प्रतिषिध्यते । न तु शूद्रादिजात्यन्तर्गतानां, तेषां स्वरूपेण प्रतिषेधात् । तथाच स्मृत्यन्तरे—

ब्राह्मणस्य सदाऽश्नीयात् क्षत्रियस्य तु पर्वसु ।
प्रकृतेष्वथ वैश्यस्य शूद्रस्य न कदाचन ॥

प्रकृतेषु प्रस्तुतेषु विवाहादिषु महोत्सवेष्वित्यर्थः । ब्राह्मणस्येत्यादिषु अन्नमिति शेषो द्रष्टव्यः। एवंच क्षत्रियाणामन्नं पर्वसु भोक्तव्यम् । कदर्यादिक्षत्रियाणामन्नं पर्वस्वपि न भोक्तव्यम् । वैश्यानामन्नं विवाहादिमहोत्सवादन्यत्र न भोक्तव्यम् । कदर्यादिवैश्यानामन्नं विवाहाद्युत्सवेष्वपि न भोक्तव्यमित्यनुसन्धेयम् । शूद्रस्य न कदाचनेत्यनेनैव शूद्राज्जघन्यस्य प्रतिलोमस्यान्नं सुतरां नाश्नीयादिति गम्यते । याज्ञवल्क्यः

शूद्रेष्वपि केषाञ्चिदन्नं भोज्यमित्याह—

शूद्रेषु दासगोपालकुलमित्रार्धसीरिणः ।
भोज्यान्ना नापितश्चैव यश्चात्मानं निवेदयेत् ॥

दासः क्रीतकादिः । गोपालो गवां पालयिता । कुलमित्रं पितृपितामहादिक्रमागतः सखा । सीरो लाङ्गलं, तेन कृषिफलं लक्ष्यते, ततश्च कृषिफलं अर्धसीरपदेनोक्तम् । नापितो वपनादिकर्मकर्ता शूद्रः । एते दासादयः शूद्रेषु शूद्राणां मध्ये भोज्यान्नाः । यश्च शूद्रः क्रीतवद्द्विजायात्मानं निवेदयति तवाहमिति समर्पयति सोपि भोज्यान्न इत्यर्थः । दासादयश्चात्र स्वकीया एव विवक्षिताः । अतएव देवलः—

स्वदासो नापितो गोपः कुम्भकारः कृषीवलः ।
ब्राह्मणैरपि भोज्यान्नाः पञ्चैते शूद्रयोनयः ॥

एवञ्च यदीया दासादयस्तस्यैव तेषामन्नं भोज्यं नान्यस्येति मन्तव्यम् । दासादिव्यतिरिक्तशूद्रान्नभोजने दोषमाह दक्षः—

शूद्रान्नरसपुष्टाङ्गस्त्वधीयानोपि नित्यशः ।
जुह्वन्वाऽपि जपन्वाऽपि गतिमूर्ध्वां न विन्दति ॥

वसिष्ठोपि—

शूद्रान्नेनोदरस्थेन योपि गच्छति मैथुनम् ।
यस्यान्नं तस्य तत्पुत्रः अन्नाच्छुक्रं प्रवर्तते ॥

हारीतोपि—

शूद्रान्नेन तु भुक्तेन जठरस्थेन यो मृतः ।
स वेसरत्वमुष्ट्रत्वं शूद्रत्वं चोपगच्छति ॥

अङ्गिरा अपि—

षण्मासं यो द्विजो भुङ्क्ते शूद्रस्यान्नं विगर्हितम् ।

स च जीवन् भवेच्छूद्रो मृतश्च श्वाऽभिजायते ॥

अन्नं पक्वमामं च । यत्तु सुमन्तुनोक्तम्—

गोरसं चैव सक्तूंश्च तैलं पिण्याकमेव च ।

अपूपान् भक्षयेच्छूद्रात् यच्चान्यत्पयसा कृतम् ॥

यदपि हारीतेन—

कन्दुपक्वं स्नेहपक्वं पायसं दधि सक्तवः ।

एतान्यशूद्रान्नभुजो भोज्यानि मनुरब्रवीत् ॥

अपूपादिपचनार्थं परिमण्डलतया कृतमयोमयं पात्रं कन्दुः, तत्र पक्वं कन्दुपक्वम् । स्नेहेन तैलादिद्रव्येण पक्वं स्नेहपक्वम् । अशूद्रान्नभुजो द्विजस्य । यदप्यङ्गिरसा—

पात्रान्तरगतं ग्राह्यं शूद्रात्स्वगृहमागतम् ॥

इति । अन्नमिति शेषः । यदपि विष्णुपुराणे—

सम्प्रोक्ष्य विद्वान् गृह्णीयाच्छूद्रान्नं गृहमागतम् ।

इति । यत्तु शङ्खेन—

गृहात्परार्थे भूम्यर्थे गवार्थेषु विशेषतः ।

श्रोत्रियेण तु भोक्तव्यं शूद्राणां तु यमोऽब्रवीत् ॥

तदेतत्सर्वमापद्विषयम् । एवमग्निविहीनस्यान्नमप्यापद्विषय एव भोज्यं, 'अग्निहीनस्य नान्नमद्यादनापदि' इति याज्ञवल्क्यस्मरणात् । सत्यप्यधिकारे श्रौतस्मार्तादिपरिग्रहमकुर्वतो विधाने

नोत्सृष्टाग्नेश्चान्नमनापदि न भुञ्जीतेत्यर्थः। अनेनार्थादग्निहीनस्या-न्नमापद्यद्यादित्युक्तं भवति। आपद्यपि यतिवानप्रस्थयोरन्नं नाद्यात्। तथाच श्लोकापस्तम्बः—

द्वावेवाश्रमिणौ भोज्यौ ब्रह्मचारी तथा गृही।
मुनेरन्नमभोज्यं स्यात्सर्वेषां लिङ्गिनां तथा॥

इति। भोज्यौ भोज्यान्नौ। मुनिः वानप्रस्थो यतिश्च। लिङ्गिनां अवेदोक्तलिङ्गिनाम्।

इति स्मृतिचन्द्रिकायां नित्यभोजने मांसव्यतिरिक्त-वर्ज्यद्रव्यविषयाणि.

---

## अथ नित्यभोजने वर्जनीयमांसद्रव्यविषयाणि कानिचिद्वचनानि लिख्यन्ते.

तत्र मनुः—

एतदुक्तं द्विजातीनां भक्ष्याभक्ष्यमशेषतः।
मांसस्यातः प्रवक्ष्यामि विधिं भक्षणवर्जने॥

मांसस्य भक्षणे वर्जने च विधिं प्रवक्ष्यामीत्यर्थः। तत्र मांस भक्षणे प्राप्ते विधिकथनं निषेधकथनेन विना न सम्भवतीति प्रथमं मनूक्तमेव निषेधवचनं प्रदर्श्यते—

नाकृत्वा प्राणिनां हिंसां मांसमुत्पद्यते क्वचित्।
न च प्राणिवधस्स्वर्ग्यस्तस्मान्मांसं विवर्जयेत्॥

समुत्पत्तिं च मांसस्य वधबन्धौ च देहिनाम् ।
प्रसमीक्ष्य निवर्तेत सर्वमांसस्य भक्षणात् ॥

इति । प्राणिहिंसा मा भूदिति सर्वस्माद्रागप्राप्तमांसभक्षणान्निवर्तेत, न तु प्रत्यवायभयादित्यर्थः । अत्रोक्तं तेनैव—

न मांसभक्षणे दोषो न मद्ये न च मैथुने ।
प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला ॥

इति । अनेन मांसभक्षणे प्रत्यवायाभावाल्लोकविद्वेषाभावाच्च फलार्थित्वाभावे मांसं भक्षयेदिति विधिरर्थादुक्त इति मन्तव्यम् । निवृत्तेस्तु महाफलसाधनत्वं च तेनैवोक्तम्—

फलमूलाशनैर्मेध्यैर्मुन्यन्नानां च भोजनैः ।
न तत्फलमवाप्नोति यन्मांसपरिवर्जनात् ॥

इति । एवमुक्तफलार्थिनामपि केषु चिद्विषयेषु मांसं भक्षितव्यमित्याह स एव—

प्रोक्षितं भक्षयेन्मांसं ब्राह्मणस्य च काम्यया ।
यथाविधि नियुक्तश्च प्राणानामेव चात्यये ॥

प्रोक्षितं भक्षयेन्मांसं क्रतौ पश्ववयवभूतं हृदयादिमांसं इष्टिशिष्टं भक्षयेत् । ब्राह्मणस्य च काम्यया निमन्त्रितब्राह्मणस्येच्छया मांसं भक्षयेत् । इष्टैस्सहोपभुज्यतामिति स्वेच्छापूर्वकोक्त्यनुज्ञातं श्राद्धशिष्टं मांसं श्राद्धकर्ता भक्षयेदिति यावत् । यथाविधि नियुक्तश्च विधिवच्छ्राद्धे निमन्त्रितो ब्राह्मणः पित्राद्युद्देशेन त्यक्तं मांसं भक्षयेत् । प्राणानामेव चात्यये

मांसं भक्षयेत्। भेषजत्वेन दुर्भिक्षादावन्नालाभेन वा यत्र मांसभक्षणमन्तरेण प्राणधारणमशक्यं तथाविधविषयेऽपि मांसं भक्षयेत् । एवं च प्रोक्षितादिविषयचतुष्टयादन्यत्र फलार्थिनां मांसभक्षणं वर्जनीयम्। फलार्थित्वाभावे तु नावश्यं वर्जनीयमिति सिद्धम्। यत्पुनस्तेनोक्तम्—

असंस्कृतान् पशून् मन्त्रैर्नाद्याद्विप्रः कदाचन।

इति तदपि फलार्थिविषयम्।

न मांसभक्षणे दोषो न मद्ये न च मैथुने।

इति वाक्यत्रयं यत्र प्रातिपद्येन निषेधो न विद्यते तद्विषयम्। प्रातिपद्येन निषेधविधिषु सत्सु पुरुषस्य निवृत्तिसिद्ध्यर्थं निषिद्धकरणे दोषकल्पनस्यावश्यकत्वात् । तेन परस्त्रीगमने वेश्यागमने वा नानाविधदोषसद्भावात् प्रातिपद्येन निषिद्धमांसभक्षणेऽपि नानाविधदोषाः सन्त्येव। अतएव शङ्खेन प्रातिपद्येन निषिद्धमांसभक्षणे प्रायश्चित्तमुक्तम्—'विड्वराहग्रामकुक्कुटकुम्भिकभक्षणे द्वादशरात्रं पयः पिबेत्' इति। विड्वराहादिमांसभक्षणे निषेधो मनुना प्रातिपद्येन दर्शितः—

क्रव्यादान् शकुनीन् सर्वान् तथा ग्रामनिवासिनः।
अनिर्दिष्टांश्चैकशफान् टिट्टिभं चैव वर्जयेत् ॥
कलविङ्कं प्लवं हंसं चक्राङ्गं ग्रामकुक्कुटम्।
सारसं रज्जुदालं च दात्यूहं शुकशारिके ॥
प्रतुदान् जालपादांश्च कोयष्टिनखविष्किरान्।

निमज्जतश्च मत्स्यादान् सौनं वल्लूरमेव च ॥
बकं चैव बलाकां च काकोलं खञ्जरीटकम् ।
मत्स्यादान् विड्वराहांश्च मत्स्यानेव च सर्वशः ॥

इति । क्रव्यं मांसं, तदत्तीति क्रव्यादः । ये क्रव्यादाः शकुनयस्तान् गृध्रादीन् वर्जयेत् । ग्रामवासिनः शकुनयः । पारावतप्रभृतयः, तानपि वर्जयेत् । अनिर्दिष्टान् अज्ञातान् अज्ञातावान्तरजातिविशेषान्, मृगपक्षिण इति शेषः । 'अज्ञातांश्च मृगद्विजान्' इति याज्ञवल्क्यस्मरणात् । एकशफानश्वादीन् वर्जयेत् । निष्ठुरशब्दभाषी पक्षिविशेषः टिट्टिभः । तथाच वैजयन्त्यामुक्तम्—'टिट्टिभस्तु कटुक्वाणः' इति । कलविङ्कश्चटकः । प्लवो जलकुक्कुटः । हंसः प्रसिद्धः । चक्राङ्गश्चक्रवाकः । कुक्कुटः प्रसिद्धः । सारसः पुष्कराह्वयः । स च दीर्घगळजङ्घो नीलाङ्गः पक्षिविशेषः । रज्जुदालो वृक्षकुक्कुटः । दात्यूहः कालकण्टकः स च जलसमीपचरः । शुकः प्रसिद्धः । तस्य स्त्री शारिका । चञ्च्वा प्रत्युद्य भक्षयन्तीति प्रत्युदाः श्येनादयः । जालपादा जालाकारपादाः । कोयष्टिः कीदृश इति चिन्त्यः । नखैर्विकीर्य भक्षयन्तीति नखविष्किराः चकोरादयः । निमज्जतश्च मत्स्यादाः निमज्ज्यनिमज्ज्य मत्स्यान् भक्षयन्तीति तान् । सूना हिंसास्थानं, तत्र हतस्य मांसं सौनम् । वल्लूरं शुष्कमांसम् 'उत्तप्तं शुष्कमांसं स्यात्तद्वल्लूरं त्रिलिङ्गकम्' इत्यमरः । बकबलाके प्रसिद्धे । का-

कोलः गिरिकाकः । वृद्धकाको वा । यो मेघपर्यन्तमाकाशारोहणं लीलया करोति स च खञ्जरीटः । मत्स्यादान्, अनिमज्जतोपि । विड्वराहाः ग्रामसूकराः । मत्स्यानेव च सर्वशः सर्वप्रकारान् मत्स्यान् वर्जयेत् । अनन्तरोक्तस्यापवादमाह स एव—

पाठीनरोहितावाद्यौ नियुक्तौ हव्यकव्ययोः ।
राजीवान्सिंहतुण्डाश्च सशल्कांश्चैव सर्वशः ॥

पाठीनो बहुदंष्ट्रो मत्स्यः, 'सहस्रदंष्ट्रः पाठीनः' इत्यमरः। रोहितो रक्तवर्णः । एतौ पाठीनरोहितौ हव्यकव्ययोर्नियुक्तौ निवेदितौ दत्तौ निमन्त्रितेनाद्यौ भक्ष्यावित्यर्थः । राजीवाः पद्मवर्णाः, राजिमन्तो वा । सिंहतुण्डाः सिंहमुखाः । सह शल्कैश्शुक्तयाकारैः पृष्ठभागतो वर्तन्ते इति सशल्काः । एतेषु सिंहतुण्डादयः सर्वशः निमन्त्रितैरनिमन्त्रितैश्च भक्ष्याः । सशल्कानां भक्ष्यत्वं वेदाध्ययनहीनपुरुषाभिप्रायेणोक्तं—

मत्स्यान् सशल्कान् सर्वान् वै वेदाध्यायी विवर्जयेत् ।

इति यमस्मरणात् । देवलोपि प्रातिपद्येन निषेधमाह—

उलूककुररश्येनगृध्रकुक्कुटवायसाः ।
चकोरकोकिलौ रज्जुदालकश्चाषमद्गुकौ ॥
पारावतकपोतौ च न भक्ष्याः पक्षिणः स्मृताः ।

उलूको घूकः । योन्तरिक्षे चरन् जलान्तर्वर्तिनं मत्स्यादिकं श्येन इव निपत्यादत्ते स कुररः । चकोरः चन्द्रिकास्वादकः ।

यः शकुनसूचकत्वेन प्रसिद्धो हरितपीतवर्णः खर्वकायः पक्षिविशेषः स चाषः। मद्गुः जलकाकः 'मद्गुस्तु जलवायसः' इति वैजयन्त्याम्। शेषाः प्रसिद्धाः। एवं यत्र यत्र प्रातिपद्येन प्रतिषेधस्स्मर्यते तत्र निषेधविधिमतिक्रम्य भक्षणे कृते प्रत्यवायो न मांसमात्रभक्षण इत्यनुसन्धेयम्। अत एव शङ्खेनाप्रतिषिद्धानां मांसं भक्ष्यमिति दर्शयितुं केचन पक्षिमृगाणामप्रतिषिद्धानामुपलक्षणतयोक्ताः।

तित्तिरिं च मयूरं च लावकं च कपिञ्जलम्।
वार्ध्रीणसं वर्तिकं च भक्ष्यमाह यमस्सदा॥

लावकः स्वजातीयैस्सह कलहकारी पक्षिविशेषः। कपिञ्जलः शरुः। स च चित्रवर्णपक्षः। 'चित्रपक्षे शरुकपिञ्जलौ' इति वैजयन्त्यामभिधानात्। वार्ध्रीणसः खङ्गाख्यो मृगः 'गण्डके खड्गखड्गिनौ, वार्ध्रीणसो गणोत्साहः' इति तत्रैवाभिधानात्। वर्तिकः पक्षिविशेषः। शेषाः प्रसिद्धाः। वार्ध्रीणसग्रहणमप्रतिषिद्धपशुमृगाणां प्रदर्शनार्थम्। अतएव मनुः—

श्वाविधं शल्यकं गोधां खड्गकूर्मशशांस्तथा।
भक्ष्यान्पञ्चनखेष्वाहुरनुष्ट्रांश्चैकतोदतः॥

श्वावित् श्वभक्षको व्याघ्रविशेषः। न तु शल्यः, पौनरुक्त्यापत्तेः। श्वाविच्छब्दः श्वभक्षकव्याघ्रविशेषेऽपि प्रसिद्धः। अत एवापरार्केण सेधा श्वावित् इति व्याख्याय स च श्वभक्षको व्याघ्रविशेष इत्युक्तम्। शल्यकः शल्यः, स च शलाकास-

त्रिभतनूरुहशाली मृगविशेषः । गोधा बिलेशया ईषन्नकुलसदृशी। इतरे प्रसिद्धाः। अनुष्ट्रांश्चैकतोदतः पशूनां मध्ये उष्ट्रव्यतिरिक्तान् । एकतोदतः महिषमेषप्रभृतीन् भक्ष्यानाहुरिति सम्बन्धः । उष्ट्रग्रहणं गवादीनामपि प्रदर्शनार्थम् । अतएव देवलः—

अभक्ष्याः पशुजातीनां गोखरोष्ट्राश्वकुञ्जराः ।
सिंहो व्याघ्रश्च शरभसर्पाजगरकास्तथा ॥
आखुमूषकमार्जारनकुलग्राम्यसूकराः ।
श्वसृगालवृकद्वीपिगोलाङ्गूलकमर्कटाः ॥

इति । व्याघ्र इति पूर्वमुक्तत्वात् द्वीपिशब्दो व्याघ्रविशेषपरः। गोलाङ्गूलो वानरविशेषः। मर्कटग्रहणं पञ्चनखानामुपलक्षणम्। अतएव न भक्षयेदित्यनुवृत्तौ मनुनोक्तं 'सर्वान् पञ्चनखांस्तथा' इति। सर्वान् भक्ष्यत्वेन पूर्वोक्तश्वाविच्छल्यकगोधाखड्गकूर्मशशव्यतिरिक्तानित्यनुसन्धेयम् । शङ्खोपि भक्ष्यमांसमाह–

माहिषं त्वाजमौरभ्रं मार्गं रौरवमेव च ।
भक्ष्यमांसं समुद्दिष्टं यच्च वै पार्षतं भवेत् ॥
वराहांश्च तथा भक्ष्यानाहारण्यनिवासिनः ॥

उरभ्रो मेषः, तस्य मांसमौरभ्रं, मृगो हरिणः तस्य मांसं मार्गं, रुरुः कृष्णसारविशेषः 'रुरुर्महान् कृष्णसारः' इति वैजयन्त्यां, तस्य मांसं रौरवं, पृषतः अतिस्थूलबिन्दुप्रमाणकशुक्लवर्णतनूरुहकृतमण्डलशतैश्चित्रितो हरिणविशेषः, तस्य मांसं

पार्षतं, तथाऽरण्यनिवासिनो वराहान् भक्ष्यानाहेत्यन्वयः। एवमुक्तभक्ष्यमांसप्रतिपादकवचनैर्भक्षणीयेषु भक्षणमात्रेण प्रत्यवायो नास्तीति गम्यते, न तु भक्षणाय प्राणिवधे कृतेऽपीति। प्राणिवधमकृत्वा मांसार्जनसम्भवात्, 'न हिंस्यात्सर्वा भूतानि' इति हिंसाप्रतिषेधाच्च।

योऽहिंसकानि भूतानि हिनस्त्यात्मसुखेच्छया।
स जीवंश्च मृतश्चैव न क्वचित्सुखमेधते॥
स वसेन्नरके घोरे दिनानि पशुरोमभिः।
सम्मितानि दुराचारो यो हन्त्यविधिना पशून्॥

इति मनुयाज्ञवल्क्यस्मरणाच्च। यत्तु मनुनोक्तम्—

अनुमन्ता विशसिता निहन्ता क्रयविक्रयी।
संस्कर्ता चोपहर्ता च खादकश्चैव घातकाः॥

इति, तत्र क्रयविक्रयिखादकादेर्घातकत्वाभिधानं हन्तॄणां कथञ्चित्प्रेरकभूतस्य न तूदासीनस्येति मन्तव्यम्, उदासीनस्य कथञ्चिदपि हननकर्तृत्वाभावात्। अतएव देवलः—

पञ्च पञ्चनखा भक्ष्याः धर्मतः परिकीर्तिताः।
गोधा कूर्मश्शशश्श्वाविच्छल्यकश्चेति ते स्मृताः॥

हिंसामन्तरेण विक्रयाद्यैरुपादाय पञ्चनखाः भक्ष्याः परिकीर्तिता इत्यर्थः। यद्यप्यत्र पञ्चग्रहणमवधारणार्थं, तथाऽपि 'श्वाविधं शल्यकं गोधां खड्गकूर्मशशांस्तथा' इति मानवे खड्गमांसस्य भक्ष्यत्वाभिधानमविरुद्धं, भिन्नविषयत्वात्। नित्य-

भोजनविषयं देवलवचनम् । मानवं तु श्राद्धविषयम्,

खड्गमांसैर्भवेदन्नमक्षय्यं पितृकर्मणि ।

इति खड्गमांसस्य श्राद्धे फलश्रुतिदर्शनात् ॥

इति स्मृतिचन्द्रिकायां नित्यभोजने वर्जनीयमांसविषयाणि.

---

अथ श्राद्धे तृप्त्यतिशयहेतुभूतद्रव्यविषयाणि कानिचिद्वचनानि लिख्यन्ते.

तत्र मनुः—

हविर्यच्चिररात्राय यच्चानन्त्याय कल्पते ।
पितृभ्यो विधिवद्दत्तं तत्प्रवक्ष्याम्यशेषतः ॥

यद्धविः पितृभ्यो विधिवद्दत्तं चिररात्राय कल्पते चिरकालानुस्यूतपितृतृप्तये, यच्चानन्त्याय अत्यन्ताचिरकालानुस्यूतपितृतृप्तये कल्पते, तथाभूतहविरिदानीं प्रवक्ष्यामीत्यर्थः, तत्र तावत्प्रतिज्ञातं क्रमेण यच्चिररात्राय कल्पते तदाह स एव—

तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेन वा ।
दत्तेन मासं प्रीयन्ते विधिवत्पितरो नृणाम् ॥

तिलादिचतुष्टयग्रहणं ग्राम्यौषधीनां सप्तानामुपलक्षणार्थम् । तत्र ग्राम्याभिरोषधीभिः मासं प्रीयन्ते । तासां पुष्कलानामभावे किञ्चिदन्नसहितैरबादिभिर्मासं प्रीयन्त इत्यर्थः । तथाच कात्यायनः— 'ग्राम्याभिरोषधीभिर्मासं तृप्तिः, तद-

लाभे मूलफलैरद्भिर्वा सहान्नेनोत्तरास्तर्पयन्ति' इति। उत्तरा मूलफलापः, तास्सहैव किञ्चिदन्नेन मासं तर्पयन्ति, न केवला इत्यर्थः। मार्कण्डेयोपि—

गोधूमैरिक्षुभिर्मुद्गैस्सतीनैश्चणकैरपि।
श्राद्धेषु दत्तैः प्रीयन्ते मासमेकं पितामहाः॥

सतीनाः कलायाः 'कलायस्तु सतीनकः' इत्यमरः। चणकः वर्तुलाकारश्चणकः चणकशब्देनैव प्रसिद्धः हरिमन्थकाख्यः, 'चणको हरिमन्थकः' इति तेनैवाभिधानात्। गोधूमादिविकारैरन्यैः श्राद्धेषु दत्तैरेकं मासं प्रीयन्त इत्यर्थः। अतएव 'हरितमुद्गकृष्णमाषश्यामाकप्रियङ्गुगोधूमेक्षुविकारांश्च दद्यात्' इति प्रचेतसोक्तम्। दद्यात् मासपर्यन्तं पितृतृप्तये इति शेषः। एवं च न साक्षाद्गोधूमादयो देयाः, किंतु तद्विकारा मण्टकादयः। विष्णुरपि—'शाकश्यामाकनीवारप्रियङ्गुमुद्गैर्मासं प्रीयन्ते' इति, मार्कण्डेयस्तु मासपर्यन्तप्रीतिजनकानि शाकानि प्रपञ्चयति—

विदार्या चावरूढैश्च बिसैश्शृङ्गाटकैस्तथा।
केचुकैश्च तथा कन्दैः कर्कन्धूबदरैरपि॥
पालेवतैरारुकैश्चाप्यक्षोटैः पनसैस्तथा।
काकोलैः क्षीरकाकोलैस्तथा पिण्डालुकैश्शुभैः॥
लाजाभिश्च सधानाभिः त्रपुषोर्वारुभिर्भिदैः।
सर्षपाराजशाकाभ्यामिङ्गुदै राजजम्बुभिः।

प्रियाळ्वामलकैर्मुख्यैः फल्गुभिश्च ह्यलाबुकैः ।
वेत्राङ्कुरैस्तालकन्दैश्चुक्रिकाक्षीरिकावचैः ॥
मोचैस्समोचैर्लकुचैस्तथा वै बीजपूरकैः ।
मुञ्जातकैः पद्मफलैर्भक्ष्यभोज्यैस्सुसंस्कृतैः ॥
रागषाडबचोष्यैश्च त्रिजातकसमन्वितैः ।
दत्तैस्तु मासं प्रीयन्ते श्राद्धेषु पितरो नृणाम् ॥

इति । विदारी कृष्णवर्णा, भूकूश्माण्डफलम् । बिसं पद्मकन्दोपरिस्थिततन्तुपुञ्जयुक्तं भक्ष्यावयवः । शृङ्गाटकं जलजं त्रिकण्टकम् । केचुकः खर्जूराख्यं शाकम् । कन्दः सूरणः । 'अर्शोघ्नस्सूरणः कन्दः' इत्यमरः । बदरं बदरीफलम् । बदर्यवान्तरविशेषः कर्कन्धूः, तत्फलं कर्कन्धूशब्देनोक्तम् । अक्षोटो गिरिसम्भवः पीलुः । पनसः प्रसिद्धः । काकोलक्षीरकाकोलौ गौडदेशे प्रसिद्धौ । उर्वारुः स्वादुकर्कटी । भिदः तिक्तकर्कटी । सर्षपः प्रसिद्धः । सर्षपेतिस्त्रीलिङ्गतया निर्देशश्छान्दसः । राजशाकं राजवृक्षाख्यं शाकं कृष्णसर्षप इति यावत् । इङ्गुदस्तापसतरुः । राजजम्बूः जम्बूविशेषः । प्रियाळो राजादनाख्यो वृक्षः, 'राजादनं प्रियाळस्स्यात्' इत्यमरः । मुख्यान्यामलकानि स्थूलामलकानि । फल्गूनि क्षुद्रामलकानि । वेत्राङ्कुरः प्रसिद्धः । तालकन्दः भूम्यन्तर्निहितताळप्रभवमारग्वधफलाकारं पाण्ड्यदेशादौ भक्ष्यत्वेन प्रसिद्धं मूलम् । चुक्रिका आम्लिका तिंत्रिणी चिञ्चा इति यावत् । क्षीरिका

फलाध्यक्षं 'राजादनफलाध्यक्षे क्षीरिकायाम्' इत्यमरः। मोचा कदळी। 'कदळी वारणबुसा रम्भा मोचांशुमत्फला' इति तेनैवाभिधानात्। लकुचो लिकुचः। 'लकुचो लिकुचो डहुः' इत्यमरः। स च जम्बीरफलतुल्यखर्वफलवान् गुल्मविशेषः। बीजपूरो मातुलुङ्गः 'फलपूरो बीजपूरो रुचको मातुलुङ्गकः' इत्यमरः। पद्मफलं पद्मबीजकोशः, कर्णिकेति यावत्। रागषाडबाः पानकविशेषाः। त्रिजातकं लवङ्गैलापत्राणां समाहारः। शेषाण्यत्यन्तप्रसिद्धानि। मत्स्यपुराणेऽपि—

अन्नं तु सदधिक्षीरं गोघृतं शर्करान्वितम्।
मासं प्रीणाति वै सर्वान् पितॄनित्याह केशवः॥

इति। द्विमासादिसंवत्सरतृप्तिहेतुभूतान्याह मनुः—

द्वौ मासौ मत्स्यमांसेन त्रीन् मासान् हारिणेन तु।
औरभ्रेणाथ चतुरः शाकुनेनेह पञ्च वै॥
छागमांसेन षण्मासान् पार्षतेनेह सप्त वै।
अष्टावैणेयमांसेन रौरवेण नवैव तु॥
दशमासांस्तु तृप्यन्ति वराहमहिषामिषैः।
शशकूर्मयोस्तु मांसेन मासानेकादशैव तु॥
संवत्सरं तु गव्येन पयसा पायसेन च।

इति। हरिणः कुरङ्गः, तस्य मांसं हारिणम्। उरभ्रो मेषः, तस्य मांसं औरभ्रम्। शकुनिः पक्षी, तस्य मांसं शाकुनम्। पृषतश्चित्रमृगः तस्य मांसं पार्षतम्। एणी मृगी तस्या मांसं

ऐणेयम् । रुरुर्महान् कृष्णसारः तस्य मांसं रौरवम् । पयोग्रहणं पयोविकाराणामुपलक्षणम् । अत एव विष्णुः—'संवत्सरं तु पयसा तद्विकारैर्वा' इति । यद्यपि पायसेनेत्यत्र पयोविशेषः न श्रुतः, तथाऽपि गव्यपयस्संनिधानात्तत्पयः सिद्धमिति गम्यते । यत्तु प्रीणातीत्यनुवृत्तौ पैठीनसिनोक्तं 'पायसेन तु षण्मासान्' इति तदगोपयस्सिद्धपायसविषयम् । द्वादशसंवत्सरपर्यन्ततृप्तिकरद्रव्यमाह मनुः—

वार्ध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ।

इति । पितॄणां भवतीति शेषः । वार्ध्रीणसोत्र पारिभाषिको वेदितव्यः । न तु खड्गमृगः, तस्यातिदीर्घकालतृप्तिकरद्रव्येषु मनुनैव वक्ष्यमाणत्वात् । कः पुनरसौ पारिभाषिको वार्ध्रीणस इत्यपेक्षिते विष्णुधर्मोत्तरम्—

त्रिपिबं त्विन्द्रियक्षीणं यूथस्याग्रचरं तथा ।
रक्तवर्णं तु राजेन्द्र छागं वार्ध्रीणसं विदुः ॥

इति । त्रिभिः मुखेन कर्णाभ्यां च पिबतीति व्युत्पत्त्या त्रिपिबः, अत्यन्तलम्बकर्णः । यद्यपि न कर्णाभ्यां पिबति । तथाऽपि तटाकादिगतोदकपानसमये कर्णावपि लम्बितौ मुखवज्जलसंस्पर्शिनौ भवत इत्यौपचारिकस्त्रिपिबशब्दो युक्तः । इन्द्रियक्षीणः संभोगाक्षमः । रक्तवर्णग्रहणं श्वेतवर्णस्यापि प्रदर्शनार्थम् ।

त्रिपिबं त्विन्द्रियक्षीणं श्वेतं वृद्धमजापतिम् ।
वार्ध्रीणसं तु तं प्राहुः याज्ञिकाः पितृकर्मणि ॥

इति निगमेनाभिधानात् । पक्षिविशेषो वार्ध्राणसः । तथाच तत्रैवोक्तम्—

कृष्णग्रीवो रक्तशिराः श्वेतपक्षो विहङ्गमः ।
स वै वार्ध्राणसः प्रोक्त इत्येषा वैदिकी श्रुतिः ॥

इति । यद्द्रव्यमानन्त्याय कल्पते तदपि मनुना दर्शितम्—

कालशाकं महाशल्कखड्गलोहामिषं मधु ।
आनन्त्यायैव कल्पन्ते मुन्यन्नानि च सर्वशः ॥

कालशाकं कीदृशमिति न विद्मः । महाशल्कः पृष्ठभागेऽतिस्थूलशुक्तिसदृशबहस्थिशकलान्वितो मत्स्यः । खड्गः खड्गाख्यमृगः । लोहः लोहितवर्णश्छागः । अतिदीर्घकालतृप्तिकरद्रव्येषु 'लोहश्छागस्तथैव च' इति यमेन स्पष्टमुक्तत्वात् । आमिषमिति महाशल्कादिषु प्रत्येकं सम्बध्यते । ततश्चायं वाक्यार्थः— कालशाकं महाशल्कामिषं खड्गामिषं लोहितच्छागामिषं मधु नीवाराद्यरण्यधान्यप्रभवं सप्तविधमन्नं चात्यन्तचिरकालानुस्यूतपितृतृप्तये कल्पत इति । एवमुक्तातिदीर्घकालपर्यन्ततृप्तितारतम्याभिधायकस्मृतीनां तत्तत्तारतम्यानुसारेण श्राद्धकर्तुः फलेऽपि तारतम्यं भवतीत्येतत्पर्यन्तं तात्पर्यमवगन्तव्यम् । अतएव हारीतेनैकमुदाहृत्योक्तम्—

मधुना परमप्रीतास्सर्वान् कामान् दिशन्ति वै ।

इति । नच वाच्यं 'आनन्त्यायैव कल्पन्ते' इति मन्वादिभिरभिधानान्नित्या तृप्तिः कालशाकादिना भवति, न कदाचि-

त्तस्या विनाश इति । कार्यभूतायास्तृप्तेर्नित्यत्वायोगात्। तेन नित्यवदतिदीर्घकालतृप्तिर्वचोभङ्गया ज्ञाप्यत इति मन्तव्यम्। अतएव पितृगीतायां गाथायामुक्तम्—

काल्शाकं महाशल्कं मांसं वाध्र्राणसस्य च।
विषाणवर्जा ये खड्गा आसूर्यं तांस्तु भुञ्ज्महे ॥

इति। सूर्यो यावति काले तिष्ठति तावन्तं कालं कालशाकादिपदार्थं भुञ्ज्महे इत्यर्थः।

इति स्मृतिचन्द्रिकायां श्राद्धकाण्डे पितृतृप्त्यतिशयहेतुभूतद्रव्यविषयाणि.

---

एवं प्रसक्तानुप्रसक्तं परिसमाप्याधुना प्रकृतस्य पूर्वाह्णकृत्यस्य शेषमुच्यते.

तत्र मार्कण्डेयः—

अह्नष्षट्सु मुहूर्तेषु गतेषु त्वथ तान् द्विजान्।
प्रत्येकं प्रेषयेत्प्रेष्यान् प्रदायामलकोदकम् ॥

द्वादशघटिकाभ्य ऊर्ध्वं निमन्त्रितब्राह्मणानां स्नानार्थं परिचारकाणां हस्तेष्वामलककल्कं प्रदाय निमन्त्रितब्राह्मणेभ्यः प्रत्येकं दीयतामिति तान् द्विजान् प्रति ब्राह्मणान् प्रेषयेदित्यर्थः। एतदामलककल्कदानं प्रतिषिद्धतैलासु तिथिषु द्रष्टव्यम्। तास्वप्यमावास्याव्यतिरिक्तासु देयं 'धात्रीफलैरमावास्यायां न स्नायात्' इत्यामलकोदकस्नानस्याप्यमावास्यायां

निषेधात् । अनिषिद्धतैलायां तु द्वितीयादितिथौ स्नानार्थं तैलादि देयमित्याह कात्यायनः—

तैलमुद्वर्तनं स्नानं दन्तधावनमेव च ।
कृत्तरोमनखेभ्यस्तु दद्यात्तेभ्योऽपरेऽहनि ॥

उत्तरेद्युः पूर्वाह्णे कृत्तरोमनखेभ्यो निमन्त्रितेभ्यस्तैलादिकं स्नानसाधनं दन्तधावनसाधनं च काष्ठादिकं दद्यादित्यर्थः। यत्तु प्रचेतसोक्तम्—

तैलमुद्वर्तनं स्नानं दद्यात्पूर्वाह्ण एव तु ।
श्राद्धभुग्भ्यो नखश्मश्रुच्छेदनं न तु कारयेत् ॥

तत्र नखादिच्छेदननिषेधो निषिद्धक्षुरकर्मतिथिविषयः । तैलादिदाने विशेषमाह देवलः—

तैलमुद्वर्तनं स्नानं स्नानीयं च पृथग्विधम् ।
पात्रैरौदुम्बरैर्दद्याद्वैश्वदैविकपूर्वकम् ॥

उदुम्बरं ताम्रम् । वृद्धशातातपस्तु कृत्यान्तरमाह—'समूलान् दर्भानाहरेत्' इति । पितृकर्मार्थमिति शेषः । अतएव यमः—

समूलस्तु भवेद्दर्भः पितॄणां श्राद्धकर्मणि ।

इति । दर्भः कुशः । स एव श्राद्धकर्मणि मुख्यः । तदभावे काशादिकमाहरणीयम्, 'कुशाभावे कुशस्थाने काशान् दूर्वां वा दद्यात्' इति विष्णुस्मरणात् । काशाद्यभावे तु गोभिलेनोक्तं–'बर्हिरुपमूललूनं पितृभ्यस्तदलाभे शूकतृणशरवल्वजवर्जं सर्वतृणानि' इति । यद्यपि बर्हिश्शब्दस्तृणमात्रे वर्तते । तथाऽपि

तृणविशेषविहितकुशकाशदूर्वास्वेव पर्यवस्यति, तेन तदलाभ इत्यस्य कुशकाशदूर्वालाभ इत्यर्थोऽवगन्तव्यः । उपमूललूनं मूलसमीपे लूनम् । शूकतृणं शूकधान्यतृणम् । शरः पुण्ड्रः, सुगन्धितृणमिति यावत् । बल्बजाः मुञ्जसदृशानि तृणानि । बर्हिरुपमूललूनमित्यस्य 'समूलस्तु भवेद्दर्भः' इति यमोक्तेन सह विकल्पो वेदितव्यः । बर्हिराहरणवद्यवाद्याहरणमपि कर्तव्यं, अतएव पुराणेऽभिहितम्—

उपमूलं कृत्तमूलान् कुशांस्तत्रोपकल्पयेत् ।
यवांस्तिलान् ब्रुसीः कांस्यमपश्शुद्धैस्समाहृताः ॥
पार्णराजतताम्राणि पात्राणि स्युः समिन्मधु ।
पुष्पधूपसुगन्धादि क्षौमसूत्रं च मेक्षणम् ॥

इति । तत्र श्राद्धदेश इत्यर्थः । ब्रुसीः निमन्त्रितब्राह्मणानामुपवेशनार्थान्यासनानि । 'व्रतिनामासनं ब्रुसी' इत्यमरः । निमन्त्रिता अपि ब्रह्मचर्यादिव्रतग्रहणाद्व्रतिन इति तदर्थासनेऽपि मुख्य एवायं शब्दः । कांस्यं कांस्यमयं भाजनम् । पार्णं पर्णमयम् । क्षौमसूत्रं दुकूलसूत्रम् । मेक्षणं काष्ठमयी दर्वी । कांस्यपार्णराजतताम्रभाजनेषु यथासामर्थ्यमुपकल्पनम् । प्रतिब्राह्मणं ब्रुस्युपकल्पनं भाजनोपकल्पनं च । सुगन्धादीत्यत्रादिग्रहणादक्षतदीपाच्छादनादिकं गृह्यते । तिलास्सति सम्भवे वन्या एवोपकल्पनीयाः—

जर्तिलास्तु तिलाः प्रोक्ताः कृष्णवर्णा वने भवाः ।

इति सत्यव्रतेनाभिधानात् । एवंरूपास्तिलाश्श्राद्धे ग्राह्यतया प्रोक्ता इत्यर्थः । जर्तिला अकृष्टभूमौ जातास्तिलाः ।

जर्तिलाश्चैव ते ज्ञेया अकृष्टोत्पादितास्तु ये ।

इति तेनैवाभिधानात् । जर्तिलानामसम्भवे तु तदितरातिला उपकल्पनीयाः । प्रशस्तानामलाभे गुणिलोपन्यायेन जातिमात्रशालिनामुपादेयत्वात् । यच्चापस्तम्बेनोक्तम्—

अटव्यां ये समुत्पन्ना अकृष्टफलितास्तथा ।

ते वै श्राद्धे पवित्रास्स्युस्तिलास्ते न तिलास्तिलाः ॥

इति, न तिला इति 'अपशवो वा अन्ये गोअश्वेभ्यः, असत्रं वा एतद्यदछन्दोमम्' इत्यादिवदर्थवादमात्रमिति मन्तव्यम् । अपरार्केण तु न तिलास्तिला इत्येतदन्यथा व्याख्यातं—'ग्राम्यास्तिला न तिलाः तिलकार्यकरा न भवन्तीत्यर्थः' इति । तदसत् तेषामपि श्राद्धे जर्तिलासम्भवे तिलकार्यकरत्वात् । अतएव ब्रह्माण्डपुराणे—

यतिस्त्रिदण्डी करकं राजतं पात्रमेव च ।

दौहित्रः कुतपः कालश्छागः कृष्णाजिनं तथा ॥

गौराः कृष्णास्तथाऽऽरण्यास्तथैव त्रिविधास्तिलाः ।

पितॄणां तृप्तये सृष्टा दशैते ब्रह्मणा स्वयम् ॥

इति । त्रिदण्डीति यतेर्विशेषणम् । राजतमिति पात्रस्य । कुतप इति कालस्य । गौरास्तिलाः कृष्णास्तिलाः आरण्यास्तिला इति गुणानुरक्तरूपेण त्रयः पदार्थाः । एवञ्च दशसङ्ख्या घटते

दौहित्रपदं वृद्धशातातपेन व्याख्यातम्—

दुहित्रं खड्गशृङ्गं तु ललाटे यत्तदुच्यते ।
तस्य शृङ्गस्य यत्पात्रं दौहित्रमिति कीर्तितम् ॥

कुतपपदं तु स्मृत्यन्तरे व्याख्यातम्—

अह्नो मुहूर्ता विख्याताः दश पञ्च च सर्वदा ।
तत्राष्टमो मुहूर्तो यस्स कालः कुतपस्स्मृतः ॥

इति । प्रकृतमुच्यते—बृसीषु विशेषमाह मनुः—'कुतपं चासने दद्यात्' इति । कुतपशब्दस्यानेकार्थाः स्मृत्यन्तरे दर्शिताः—

मध्याह्नः खड्गपात्रं च तथा नेपाळकम्बळम् ।
रूप्यं दर्भास्तिला गावो दौहित्रश्चाष्टमस्स्मृतः ॥
पापं कुत्सितमित्याहुः तस्य सन्तापकारिणः ।
अष्टावेते यतस्तस्मात्कुतपा इति विश्रुताः ॥

इति । कुतपशब्दार्थेष्वष्टसु नेपाळदेशप्रभवमेषादिलोमनिर्मित-कम्बललक्षणः कुतपो मनुनोक्तः । तस्यैवासनाख्ये कार्ये योग्यतमत्वात् । तदसम्भवे कम्बळमात्रमपि पीठाद्यपेक्षया प्रशस्तम् । आसनोपकल्पनं भोजनार्थोपवेशनस्थानेषु कार्यम् । उपक्लृप्तासनेषु दर्भास्तरणं च कार्यम् ।

आसनेषु सदर्भेषु विविक्तेषूपवेशयेत् ।

इति पूर्वोपक्लृप्तेष्वासनेषूपवेशनविधानात् । शुद्धैराहर्तृभिस्समाहृता इत्यपां विशेषणं निषिद्धानामपामुपकल्पननिषेधज्ञापनार्थम् । तेन—

दुर्गन्धि फेनिलं वर्ज्यं तथा वै पल्वलोदकम् ।
न लभेद्यत्र गौस्तृप्तिं नक्तं यच्चैव गृह्यते ॥
यच्च सर्वाय नोत्सृष्टं यच्चाभोज्यानिपानजम् ।
तद्वर्ज्यं सलिलं तात सदैव पितृकर्मणि ॥

इत्यादिवचननिषिद्धं सलिलं नोपकल्पयेत् । यच्च सर्वाय नोत्सृष्टं सर्वप्राण्युपजीवनार्थं कूपादिकर्तृभिर्यन्नोत्सृष्टं तदपि वर्ज्यम्। निपानं कूपसमीपे कृतः पश्वादीनामुदकपानार्थो जलाशयः- कांस्यपार्णराजतताम्रपात्राण्यर्घ्योदकधारणार्थानि सर्वाण्युपकल्प्यानि। भोजनार्थानि च महान्ति। पार्णभाजनं पलाशपर्णव्यतिरिक्तपर्णकृतं भोजनार्थं नोपकल्पनीयम्—

न मृन्मयानि कुर्वीत भोजने दैवपित्र्ययोः ।
पलाशेभ्यो विना न स्युः पार्णपात्राणि भोजने ॥

इत्यत्र प्रतिषेधात् । भोजने इति विशेषितत्वात् अर्घ्यपात्रे तु नायं प्रतिषेधः । अतएव बैजवापेनोक्तम्—

खादिरौदुम्बराण्यर्घ्यपात्राणि श्राद्धकर्मणि ।
अप्यश्ममृन्मयानि स्युरपि पर्णपुटास्तथा ॥

इति । पुष्पेषूपकल्पनीयानि ब्रह्माण्डपुराणे दर्शितानि—

शुक्लास्सुमनसश्श्रेष्ठाः तथा पद्मोत्पलानि च ।
गन्धरूपोपपन्नानि यानि चान्यानि कृत्स्नशः ॥

सुमनसः पुष्पाणि । मार्कण्डेयपुराणेऽपि—

जात्यश्च सर्वा दातव्या मल्लिकाः श्वेतयूथिकाः ।

जलोद्भवानि सर्वाणि कुसुमानि च चम्पकम् ॥

जात्यो मालत्यः । 'सुमना मालती जातिः' इत्यमरः । श्वेतयूथिका हेमपुष्पिकाव्यतिरिक्तगणिका । 'गणिका यूथिकाऽम्बष्ठा सा पीता हेमपुष्पिका' इति तेनैवाभिधानात् । वर्ज्यान्यपि कुसुमानि ब्रह्माण्डपुराणे दर्शितानि—

जपादिकुसुमं भण्डी रूपिका सकुरण्टका ।
पुष्पाणि वर्जनीयानि श्राद्धकर्मणि नित्यशः ॥

जपा रुद्रपुष्पं । 'रुद्रपुष्पं जपा' इत्यमरः । आदिग्रहणेन जपाकुसुमवद्रक्तानां करवीरादिकुसुमानां वर्जनीयत्वमुक्तम् । भण्डी मञ्जिष्ठा । 'मञ्जिष्ठा विकसा जिङ्गी समङ्गा कालमेषिका । मण्डूकपर्णी भण्डीरी भण्डी योजनवल्ल्यपि' इत्यमरः । रूपिका प्रसिद्धा । कुरण्टकः पीतपुष्पोऽम्लानः । 'अम्लानस्तु महासहा । तत्र शोणे कुरवकस्तत्र पीते कुरण्टकः' इत्यमरः । भण्ड्यादीनां पुष्पाणि वर्ज्यानि । शङ्खोपि वर्ज्यान्याह—

उग्रगन्धीन्यगन्धीनि चैत्यवृक्षोद्भवानि च ।
पुष्पाणि वर्जनीयानि रक्तवर्णानि यानि च ॥

चैत्यवृक्षः श्मशानवृक्षः । रक्तपुष्पेषु प्रतिप्रसवः तेनैव दर्शितः—

जलोद्भवानि देयानि रक्तान्यपि विशेषतः ।

इति । विष्णुनाऽपि सह प्रतिप्रसवेन वर्ज्यान्युक्तानि—'न कण्टकिजं दद्यात्कण्टकिजमपि शुक्लसुसन्धि यत् तद्दद्यात्' इति । यत्त्वङ्गिरसोक्तम्—'न जातिकुसुमानि न कदलीपत्रम्' इति,

अत्र कदलीपत्रं भोजनपात्रतया प्राप्तं निषिध्यते । जातिकुसुमनिषेधो न नित्यः। नित्यनिषेधे 'जात्यश्च सर्वा दातव्याः' इति मार्कण्डेयवचनस्यानिर्विषयत्वापत्तेः । यदपि क्रतुनोक्तम्—

असुराणां कुले जाता जातिः पूर्वपरिग्रहे ।
तस्या दर्शनमात्रेण निराशाः पितरो गताः ॥

इति । पूर्वपरिग्रहे पूर्वजन्मनि देहपरिग्रहावसरे । यद्यपि 'त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप्, अत्र ह्येवावपन्ति, अत एवोद्वपन्ति' इत्यत्र वर्तमानापदेशतयाऽर्थवादसरूपे वाक्येऽर्थवादत्वनिर्वाहार्थं गायत्र्यादिष्वावापोद्वापविधिकल्पनवदत्रापि निन्दार्थवादरूपे वाक्ये निषेधविधिः कल्प्यते । तथाऽपि पाक्षिक एवायमपि प्रतिषेध इति न मार्कण्डेयवचनं निर्विषयम्, किन्त्वनिषिद्धपुष्पान्तरालाभविषयम् । प्रतिषेधवचनद्वयं तु तल्लाभविषयमिति मन्तव्यम् । मत्स्योपि वर्ज्यानाह—

पद्मबिल्वार्कधुत्तूरपारिभद्राटरूषकाः ।
न देयाः पितृकार्येषु पयश्चैवाविकं तथा ॥

धुत्तूरः कनकाह्वयः । पारिभद्रो मन्दारः रक्तपुष्पस्तबकयुक्तः । अटरूषः सिंहाऽस्यः 'वृषोऽटरूषस्सिंहास्यो वासको वाजिदन्तकः' इत्यमरसिंहेनाभिधानात् । स्मृत्यर्थसारे तु तुलस्यपि वर्ज्येत्युक्तं, तत्र मूलं चिन्त्यम्, प्रसिद्धस्मृतिसमुच्चयेषु तुलसीनिषेधस्यादर्शनात् । धूपद्रव्येषूपकल्पनीयानि विष्णुधर्मोत्तरे दर्शितानि—

धूपेषु गुग्गुलो देयस्तथा चन्दनसारजः ।

अगरुस्त्वथ कर्पूरः तुरुष्कः त्वक् तथैव च ॥

तुरुष्कः सल्लकीवृक्षत्वगादिना सम्पादितं धूपद्रव्यम् । त्वक् लवङ्गाख्यं धूपद्रव्यम् । मरीचिरपि धूपद्रव्याण्याह—

चन्दनागरुणी चोभे तमालोशीरपत्रकम् ।

इति । उशीरं वीरणाख्यगन्धतृणमूलम् । 'स्याद्वीरणं वीरतरं मूलेऽस्योशीरमस्त्रियाम्' इत्यमरः । तमालपत्रके स्वशब्देनैव प्रसिद्धे । विष्णुना तु वर्ज्यधूपद्रव्यमुक्तम्—'जीवजं च सर्वं न धूपार्थम्' इति । जीवजं मृगविशेषादिरूपप्राणिजं कस्तूर्यादिकं धूपार्थं न ग्राह्यमित्यर्थः । अनुलेपनार्थेषु सुगन्धिद्रव्येषूपकल्पनीयानि मरीचिनोक्तानि—

कर्पूरकुङ्कुमोपेतं सुगन्धि हरिचन्दनम् ।
दैविकेऽप्यथवा पित्र्ये गन्धदाने प्रशस्यते ॥

विष्णुनाऽपि–'चन्दनकुङ्कुमकर्पूरागरुपत्रकान्यनुलेपनार्थानि' इति। दीपार्थस्नेहद्रव्येषूपकल्पनीयान्याह मरीचिः—

घृताद्वा तिलतैलाद्वा नान्यद्रव्यात्तु दीपकम् ।

इति । अन्यद्रव्यमत्र वसामेदोरूपं विवक्षितं, न पुनरेरण्डकुसुम्भातसीबीजादिसम्भवं स्नेहद्रव्यं, यत आह शङ्खः—

घृतेन दीपो दातव्यस्त्वथवा ह्योषधीरसैः ।
वसामेदोद्भवं दीपं प्रयत्नेन विवर्जयेत् ॥

वसा पाकादिना विभक्तो मांसस्नेहः । मेदो हृदयकमलाच्छादको मांसविशेषः, पाकादिना विभक्तः तदीयस्नेहोऽत्र

मेदश्शब्देन लक्ष्यते। मेदश्शब्दोऽकारान्तोऽप्यस्ति, मेदिनीत्या-दिषु दर्शनात्। आच्छादनेषु फलविशेषार्थमुपकल्पनीयानि स्मृत्यन्तरे दर्शितानि—

आच्छादनं तु यो दद्यादहतं श्राद्धकर्मणि।
आयुः प्राकाम्यमैश्वर्यं रूपं च लभते शुभम्॥
कौशेयक्षौमकार्पासं दुकूलमहतं तथा।
श्राद्धेष्वेतानि यो दद्यात्कामानाप्नोति पुष्कलान्॥

इति। कौशेयं क्रिमिकोशोत्थतन्तुजम्। क्षौमं अतसीत्वक्स-म्भवतन्तुनिर्मितम्। दुकूलमतिसूक्ष्मं वस्त्रं प्रसिद्धम्। अहतं काश्यपेन निरूपितम्—

अहतं यत्त्वनिर्मुक्तमुक्तं वासः स्वयंभुवा।

इति। एतत्तु न श्राद्धे देयम्, यतोऽनन्तरमाह स एव—

शस्तं तन्माङ्गळिक्येषु तावत्कालं न सर्वदा।

इति। माङ्गळिक्यं विवाहादिकम्। श्राद्धे देयं त्वहतं प्रचेत-सोक्तम्—

ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम्।
अहतं तद्विजानीयात्सर्वकर्मसु पावनम्॥

इति। ईषद्धौतं स्वेनैवेति शेषः। अतएव वृद्धमनुः—

स्वयंधौतेन कर्तव्याः क्रिया धर्म्या विपश्चिता।
न तु नेजकधौतेन............................॥ इति॥

नेजको रजकः। स्वयंग्रहणादेव नेजकनिवृत्तौ सिद्धायामपि

पुनर्नैजकप्रतिषेधोन्येनापि ब्राह्मणादिना धौतेन क्रिया कार्येति ज्ञापनार्थः । क्षौमसूत्रोपकल्पनं वस्त्रालाभे यज्ञोपवीतस्थाने दानार्थमिति मन्तव्यम् । मेक्षणं तु होमसाधनत्वादुपकल्पनीयतयोक्तम्, तेन यज्ञियवृक्षसम्भवं ग्राह्यम् । एवं दर्भादिमेक्षणान्तं सर्वमुपकल्प्य कर्माङ्गस्नानं च तन्त्रेण कृत्वा शुक्लं वस्त्रं च परिदध्यात्—

स्नातोऽधिकारी भवति दैवे पित्र्ये च कर्मणि ।
श्राद्धकृच्छुक्लवासास्स्यात् ........................ ॥

इति स्मरणात् ।

इति स्मृतिचन्द्रिकायां श्राद्धदिनपूर्वाह्णकृत्यशेषः

---

## अथ श्राद्धदिनापराह्णकृत्यम्.

तत्र मार्कण्डेयः—

स्नातस्स्नातान् समाहूतान् स्वागतेनार्चयेत्पृथक् ।

इति । स्नातान् द्विजान् प्रेष्यैस्समाहूतान् अपराह्णे स्वगृहमागतान् स्वागतेनार्चयेत्पृथक् उत्थाय कृताञ्जलिः पृथक् पृथक् स्वागतमिति ब्रूयादित्यर्थः । तथाच शङ्खः—'प्रयतोऽपराह्णे शुचिश्शुक्लवासा दर्भहस्तः स्वागतमिति-ब्रूयात्' इति । प्रयतः शुचिरिति पदद्वयं बाह्याभ्यन्तररूपाद्विविधशुद्धियुक्तो यथा स्यादित्येवमर्थम् । अपराह्णशब्दोत्र द्वेधा विभक्तस्याह्न आवर्त-

नादुपरितनभागे प्रयुक्तः, एवम्भूत एवापराह्णः श्राद्धविषये ग्राह्य इत्यपराह्णनिर्णये प्रागेव समर्थितत्वात् । अत्रापि सायाह्नव्यतिरिक्तापराह्णो ग्राह्यः ।.

ऊर्ध्वं मुहूर्तात्कुतपात् यन्मुहूर्तचतुष्टयम् ।
मुहूर्तपञ्चकं ह्येतत्स्वधाभवनमिष्यते ॥

इति स्मृत्यन्तरानुरोधात् । सुस्वागतमिति ब्राह्मणैः प्रतिवचनं कर्तव्यं, प्रश्नस्योत्तरापेक्षितत्वात् । यमोपि—

ततस्स्नात्वा निवृत्तेभ्यः प्रत्युत्थाय कृताञ्जलिः ।
पाद्यमाचमनीयं च सम्प्रयच्छेद्यथाक्रमम् ॥

प्रत्युत्थाय कृताञ्जलिः स्वागतमित्युक्त्वा मार्गभवोपहतिशुद्ध्यर्थं पादप्रक्षाळनार्थमुदकमाचमनार्थमुदकं च क्रमेण प्रयच्छेदित्यर्थः । तत ऊर्ध्वं यद्यत्पित्र्यमनुष्ठीयते तत्तदप्रदक्षिणं प्राचीनावीतिना चाश्राद्धसमाप्तेरनुष्ठेयम् । तथाच मनुः—

प्राचीनावीतिना सर्वमपसव्यमतन्द्रिणा ।
पित्र्यमा निधनात्कार्यं विधिवद्दर्भपाणिना ॥

अपसव्यं अप्रदक्षिणं आ निधनादा श्राद्धसमाप्तेः । पित्र्यग्रहणादपित्र्ये वैश्वदैविके कर्मणि यज्ञोपवीतिना प्रदक्षिणं च सर्वं कार्यमिति द्योतितम् । स्वागतप्रत्युत्थानादौ तु यज्ञोपवीतिना कार्यमित्यादि सामान्यधर्म एव, तेषां श्रेष्ठोपचारत्वेन श्राद्धाङ्गत्वाभावात् । ब्रह्माण्डपुराणेऽपि दैविके पैतृके च विशेष उक्तः—

उदङ्मुखस्तु देवानां पितॄणां दक्षिणामुखः ।
प्रदद्यात्पार्वणश्राद्धे दैवपूर्वं विधानतः॥

इति । कात्यायनोपि विशेषमाह—

दक्षिणं पातयेज्जानुं देवान् परिचरन् सदा ।
पातयेदितरं जानुं पितॄन् परिचरन् सदा ॥

बोधायनोपि—

प्रदक्षिणं तु देवानां पितॄणामप्रदक्षिणम् ।
देवानामृजवो दर्भाः पितॄणां द्विगुणास्तथा ॥

द्विगुणाः मध्यभङ्गेन द्विगुणीकृत्येत्यर्थः । तथाच शौनकः— 'दर्भान् द्विगुणभुग्नानासनं प्रदापयेत्' इति । आसनग्रहणं दर्भसाध्यपितृकर्मोपलक्षणार्थम् । दैवे पित्र्ये च साधारण-धर्माः ब्रह्माण्डपुराणे दर्शिताः—

नाप्रोक्षितं स्पृशेत्किञ्चिद्दैवे पित्र्ये तथा पुनः ।
उच्चावचाश्श्राद्धधर्मास्साधारण्यात् प्रकीर्तिताः ॥

उच्चावचा अनेकप्रकाराः शाद्धदेशसंस्कारगोमयानुलेपनपरिश्र-यणादयः । समागतब्राह्मणेष्वाचमनार्थवारिसमर्पणानन्तरं यत्क-र्तव्यं तदाह शङ्खः—

संमार्जितोपालिप्ते तु द्वारि कुर्वीत मण्डलम् ।

इति । द्वारि द्वारसमीपे गृहस्याङ्गणप्रदेश इति यावत् । तथा च मत्स्यपुराणे—

.................... भवनस्याग्रतो भुवि ।

गोमयेनोपलिप्तायां गोमूत्रेण तु मण्डलम् ॥

इति । कर्तव्यमिति शेषः । गोमूत्रेण गोमयसहितेन । केवलेन वक्ष्यमाणोदक्प्रवणादिसिद्ध्यसम्भवात् । गोमयसहितेन कथं कर्तव्यमित्यपेक्षिते शङ्खः—

उदक्प्लवमुदीच्यं स्यात् दक्षिणं दक्षिणप्लवम् । इति ।

उदीच्यं मण्डलमुदक्प्लवं उदक्प्रवणम् । दक्षिणं मण्डलं दक्षिणप्लवं दक्षिणाप्रवणं यथा भवति तथोक्तक्रमेण कर्तव्यमित्यर्थः। मण्डलकरणानन्तरं कर्तव्यमाह स एव—

उत्तरेऽक्षतसंयुक्तान् पूर्वाग्रान् विन्यसेत्कुशान् ।

दक्षिणे दक्षिणाग्रांस्तु सतिलान् विन्यसेद्द्विजः ॥

इति । अत्राप्युक्तक्रमेण कर्तव्यम् । अक्षतग्रहणं तु पुष्पाणामपि प्रदर्शनार्थम् । अतएव मत्स्यपुराणे—

अक्षताभिस्सपुष्पाभिस्तदभ्यर्च्यापसव्यवत् ।

विप्राणां क्षाळयेत्पादावभिवन्द्य पुनःपुनः ॥

अपसव्यवत् प्रदक्षिणं, उदीच्यमंडले प्रथमं पुष्पाक्षताभिरर्चनं पश्चाद्दक्षिणमण्डल इति यावत् । मण्डलकरणं कुशादिन्यसनं पादप्रक्षाळनं च पदार्थानुसमयेन कार्यं, न तु काण्डानुसमयेन । पदार्थानुसमये हि सर्वपदार्थानां प्रधानप्रत्यासत्तिरवैषम्येण भवति, न काण्डानुसमये । तेन पदार्थानुसमयेनानुष्ठानमुत्सर्गसिद्धं भवति । वचनबलात् क्वचित्काण्डा-

नुसमयेनानुष्ठानमुपरिष्टाद्वक्ष्यते । पादप्रक्षाळने विशेषो ब्रह्मसिद्धान्तनिरुक्ते दर्शितः—

पाद्यं चैव तथैवार्घ्यं दैव आदौ प्रयोजयेत् ।
शंनो देवीति मन्त्रेण पाद्यं चैव प्रदापयेत् ॥

पाद्यार्घ्ययोर्दैवपूर्वकत्वाभिधानं निमन्त्रणादीनां सर्वानुष्ठेयानां प्रदर्शनार्थम्। शं नो देवीति मन्त्रान्ते पुरूरवार्द्रवसंज्ञिका विश्वेदेवा इदं वः पाद्यमित्युक्त्वा वैश्वदैविकब्राह्मणपादयोः पाद्योदकं प्रक्षिप्य तत्पादप्रक्षाळनं कुर्यात् । एवं पित्रर्थब्राह्मणपादप्रक्षाळनं शं नो देवीति मन्त्रान्ते पितरमुकगोत्र देवदत्तशर्मन्निदं ते पाद्यं पितामहामुकगोत्र यज्ञदत्तशर्मन्निदं ते पाद्यं प्रपितामहामुकगोत्र विष्णुमित्रशर्मन्निदं ते पाद्यमिति तु विशेषः । पाद्यादि समर्पणे पितॄणां गोत्रं नाम च वक्तव्यम्—

नाम गोत्रं पितॄणां तु प्रापकं हव्यकव्ययोः ।

इति मत्स्येनाभिधानात् । हव्यकव्यग्रहणं समर्प्याणां पाद्यादीनामपि प्रदर्शनार्थम् । अतएवाश्वलायनेनार्घ्यसमर्पणे ‘ पितरिदं ते अर्घ्यं पितामहेदं ते अर्घ्यं प्रपितामहेदं ते अर्घ्यम् ’ इत्युक्तम् । एवं पादप्रक्षाळनं स्वयमेव कुर्यात्—

पादप्रक्षाळनं कुर्यात्स्वयमेव विनीतवत् ।

इति यमस्मरणात् । पादप्रक्षाळनानन्तरं कर्तव्यमाह क्रतुः—

दर्भपाणिर्द्विराचम्य लघुवासा जितेन्द्रियः ।
परिश्रिते शुचौ देशे गोमयेनोपलेपिते ॥

दक्षिणाप्रवणे सम्यगाचान्तान् प्रयतान् शुचीन् ।
आसनेषु सदर्भेषु विविक्तेषूपवेशयेत् ॥

इति । विविक्तेषु परस्परमसंस्पृष्टेषु देशेषु । उपवेशने क्रममाह विष्णुः— 'विप्रान् स्वागतान् स्वाचान्तान् यथाभूयोविद्यं कुशोत्तरेष्वासनेषूपवेशयेत्' इति । आसनेषु कम्बळपीठादिषु कुशोत्तरेषु पूर्वमेवोपरिनिहितकुशेषु यथाभूयोविद्यं विद्यातारतम्यानुसारेण वैश्वदेवब्राह्मणपङ्क्तौ च प्रथमद्वितीयानुसारेणोपवेशयेदित्यर्थः। पूर्वोपक्लृप्तासनेष्वसत्सु स्मृत्यन्तरेऽभिहितम्—

तत्रासनानि देयानि तिलाश्चैव कुशैस्सह ।
पृथक्पृथगासनेषु तिलतैलेन दीपिकाः ॥

इति । स्थापनीया इति शेषः । तत्र श्राद्धदेशे दीपिकास्थापनानन्तरं भोजनपात्रस्थापनस्थानेषु नीवारादिपिष्टैश्चतुरश्राणि मण्डलानि कुर्यात् । तथाच तत्रैव—

मण्डलानि तु कार्याणि नीवारैश्चणकैश्शुभैः ।
गौरमृत्तिकया वाऽथ प्रणीतेनाथ भस्मना ॥

प्रणीतेन मण्डलार्थं शुभचूर्णतया निर्मितेन । पाषाणचूर्णेन तु न मण्डलानि कार्याणि—

पाषाणचूर्णसङ्कीर्णमाहृतं तत्र वर्जयेत् ।

इति तत्रैवाभिधानात् । आहृतमापादितमित्यर्थः । मण्डलकरणानन्तरं विप्रानासनेषु पूर्वोक्तप्रकारेणोपवेशयेत् । एतदपि तत्रैवानन्तरमुक्तम्—

पाणिपादमुखार्द्राश्च स्वाचान्तास्सुसमाहिताः ।
तेष्वासनेषु संस्थाप्याः विप्रास्तेन क्रमेण तु ॥

येन क्रमेणोपवशने कृते मान्यानतिक्रमः तेन क्रमेणेत्यर्थः । अतएव पैठीनसिः—

विद्यातपोधिकानां वै प्रथमासनमुच्यते ।
एकपङ्क्त्युपविष्टानां भोजनादि समं स्मृतम् ॥

इति । हारीतोपि—

सन्तिष्ठमानेष्वर्हत्सु योऽनर्होऽग्रासनं श्रयेत् ।
गृह्णाति स मलं पङ्क्तेरायुषा च विहीयते ॥

तस्मान्मान्यानतिक्रमेणैवासनविशेषं संश्रयेदित्यभिप्रायः । पूर्वोपक्लृप्तेष्वासनेषु विप्रोपवेशनपक्षे तूपविष्टेषु दीपिकास्थापनं मण्डलकरणं च पूर्वोक्तप्रकारेण कार्यम् । आसनेषूपवेशनप्रकारमाह यमः—'असनं संस्पृशन् अपसव्येन पाणिना दक्षिणेन ब्राह्मणमुपसंगृह्य समाध्वमिति चोपवेशयेत्' इति । आस्यतामित्युक्त्वा वोपवेशयेत् ।

आस्यतामिति तान् ब्रूयादासनं संस्पृशन्नपि ।

इति स्मृत्यन्तरेऽभिधानात् । उपसंग्रहणस्थाने जान्वारम्भणं, पित्रर्थब्राह्मणानामुपवेशने मन्त्रं चाह धर्मः—

जान्वारभ्य ततो देवानुपवेश्य ततः पितॄन् ।
समस्ताभिर्व्याहृतिभिरासनेषूपवेशयेत् ॥

जान्वारभ्य दैविकब्राह्मणानत्रास्यतामित्यासनेषूपवेश्य पैतृक-

ब्राह्मणान् जान्वारम्भणपूर्वकं 'भूर्भुवस्स्वः' इत्युक्त्वाऽत्रास्यतामित्युपवेशयेदित्यर्थः। अत्र पुराणम्—

विप्रौ तु प्राङ्मुखौ देव्यौ द्वौतु पूर्वं निवेशयेत्।
उत्तराभिमुखान् विप्रान् त्रीन् पितृभ्यश्च सर्वदा॥

इति। दैविकौ विप्रौ प्राङ्मुखौ सर्वदा निवेशयेत्। पित्रर्थान् विप्रान् सर्वदा उदङ्मुखान्निवेशयेदित्यर्थः। द्वौ त्रीनिति स्मृत्यन्तरोक्तब्राह्मणसङ्ख्योपलक्षणार्थम्, अतएव याज्ञवल्क्यः।

द्वौ दैवे प्राक् त्रयः पित्र्ये उदगेकैकमेव वा।
मातामहानामप्येवं तन्त्रं वा वैश्वदैविकम्॥

प्राक् प्राङ्मुखावुपवेशनीयौ। उदक् उदङ्मुखा उपवेशनीयाः। मातामहानामप्येवमित्यस्यायमर्थः—मातामहार्थब्राह्मणानामपि यथोक्तसङ्ख्याविकल्पो वक्ष्यमाणनिर्देशासिद्धो वेदितव्य इत्यनुसन्धेय इति। तन्त्रं वा वैश्वदैविकमित्यत्र वाशब्दार्थः प्रतियोगिपक्षान्तरप्रदर्शनमुखेन मरीचिना स्पष्टीकृतः—

तथा मातामहश्राद्धं वैश्वदेवसमन्वितम्।
कुर्वीत भक्तिसम्पन्नस्तन्त्रं वा वैश्वदैविकम्॥

इति। वैश्वदेवसमन्वितं मातामहश्राद्धं भक्तिसम्पन्नः आवृत्तं कुर्वीतेत्यर्थः। अत्र प्राप्ताप्राप्तविवेकेन वैश्वदेवमावृत्तं कुर्वीतेत्युक्तं भवति। वैश्वदेवेतराङ्गोपेतप्रधानावृत्तेर्न्यायित एव सिद्धत्वात्, वैश्वदेवे तु तन्त्रावृत्ती पूर्वमसिद्धे इदानीमेव प्र-

तिपादनीये। एतच्च वाक्यमेवं व्याख्येयं, अन्यथा तन्त्रं वा वैश्वदैविकमिति पक्षान्तराभिधानाघटनात्। तथाहि पूर्ववाक्ये आवृत्तिपक्षे अनुक्ते पक्षान्तरतया तन्त्राभिधानमनुपपन्नमेव। तन्त्रं वा वैश्वदैविकमित्यस्यायमर्थः—वैश्वदैविककर्मानुष्ठानं पितृमातामहश्राद्धद्वयार्थं तन्त्रेण वा कर्तव्यं सकृद्वा कर्तव्यमिति। अयं तु तन्त्रानुष्ठानपक्षः साङ्गयोः पितृमातामहश्राद्धयोः एकप्रयोगविधिप्रयोज्यत्वे भवितुमर्हति, न भिन्नप्रयोगविधिप्रयोज्यत्वे, 'भिन्नप्रयोगविधिप्रयोज्येषु पदार्थेषु न तन्त्रता' इति तन्त्रचिन्ताध्याये प्रतिपादितत्वात्। ततश्च तन्त्रपक्षोक्त्यैव पितृमातामहश्राद्धयोरेकप्रयोगविधिप्रयोज्यत्वमप्युक्तम्। एकप्रयोगविधिप्रयोज्यत्वं चैकाधिकारापूर्वसाधकत्वे भवति, एकाधिकारापूर्वसाधकत्वमप्यस्मादेव वाक्यादनयोर्ज्ञायते। एतेन चैकाधिकारापूर्वसाधकत्वमनयोः पाक्षिकमिति वाशब्दात् ज्ञायते। तेन भिन्नाधिकारापूर्वसाधकत्वमप्यस्तीति वाशब्दादेवावगन्तव्यम्। ततश्च प्रथमं पैतृकश्राद्धं संकल्पप्रभृति ब्राह्मणविसर्जनान्तं कृत्वा पश्चान्मातामहश्राद्धं संकल्पप्रभृति ब्राह्मणविसर्जनान्तं कार्यमित्यस्मादेववाक्यात् ज्ञायते। न च वाच्यं भक्तिसंम्पन्न इति वचनात् भक्त्यभावे मातामहश्राद्धं न कर्तव्यमिति।

पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवम्।
अविशेषेण कर्तव्यं विशेषान्नरकं व्रजेत्॥

इति स्मरणात्। अतएव श्राद्धद्वयेऽपि यथा सामर्थ्यमवैषम्येण

विप्रसंख्यादिकं पुराणे दर्शितम्—

पञ्चभिः पञ्चभिर्विप्रैः द्वाभ्यां द्वाभ्यामथापि वा ।
श्राद्धद्वयं त्रिभिर्वा स्यादेकैकेनाथ वा पुनः ॥

साङ्गप्रधानस्य पृथक्पृथगनुष्ठानपक्षे यदा पित्र्ये श्राद्धे द्वौ विप्रौ दैवे, पित्र्ये त्रीन् विप्रानुपवेशयेत् तदा मातामहश्राद्धे तथैवोपवेशयेत्। यदा तु पित्र्ये श्राद्धे एकं विप्रं दैवे पित्र्ये चैकं विप्रमुपवेशयेत्, तदा मातामहश्राद्धे तथैवोपवेशयेत्। यदा तु श्राद्धद्वयस्य सहानुष्ठानपक्षः तदा वैश्वदैविकब्राह्मणद्वयालाभे एकमेव ब्राह्मणं श्राद्धद्वयवैश्वदेवार्थमुपवेश्य तदर्थपरिशिष्टमन्नं विश्वान् देवानुद्दिश्य सकृदेव त्याज्यं, यदा तु श्राद्धद्वयार्थमेकस्यैव ब्राह्मणस्य लाभः तदावर्गद्वयार्थमुपवेश्य श्राद्धद्वयाङ्गभूतवैश्वदैविकार्थमन्नं पात्रे समुद्धृत्य वैश्वदैविकब्राह्मणस्थाने निधाय पूर्ववत्त्याज्यम्। न तु पित्र्यश्राद्धे मातामहश्राद्धे ब्राह्मणसंख्यादिना वैषम्यं सर्वथा कार्यमिति वचनस्य तात्पर्यार्थः प्रत्येतव्यः। एवं श्राद्धद्वये उपवेशनायोक्तसङ्ख्यानुसारेणैव निमन्त्रणकाले ब्राह्मणनिमन्त्रणं कार्यम्, तथाच वृद्धवसिष्ठोपि—

श्राद्धद्वयं करिष्यंस्तु दश वा चतुरोपि वा ।
त्रीन्वा निमन्त्रयेद्विप्रान् द्वावेकं ब्रह्मवादिनम् ॥

इति। उपवेशनायोद्युक्तान् ब्राह्मणान् प्रत्याह यमः—

दक्षिणासंस्था आसीरन्नस्पृशन्तः परस्परम् ।

इति। दक्षिणासंस्था इत्यस्य न दक्षिणासंस्थापरत्वं, किन्तु प्राक्संस्थापरत्वमवसेयम् । प्राक्संस्थत्वेऽभिधित्सितेऽपि दक्षिणासंस्थेत्युक्तिः पित्रर्थब्राह्मणविषयतां द्योतयितुं कृता। अत एव स्मृत्यन्तरम्—

पश्चार्धात्समुपक्रम्य प्राच्यां निष्ठा यथा भवेत्।
दक्षिणासंस्थता ह्येषा पितॄणां श्राद्धकर्मणि ॥

इति। निष्ठा समाप्तिः। वैश्वदैविकब्राह्मणांस्तु प्रत्याह बोधायनः—'प्रदक्षिणं तु दैवानाम्' इति । दैवानां ब्राह्मणानां प्रदक्षिणं दक्षिणादिक्प्रक्रममुदगपर्गं च यथा भवति तथा आसीरन्नित्यर्थः। उभयार्थब्राह्मणान् प्रति स्मृत्यन्तरेऽभिहितम्—

पवित्रपाणयस्सर्वे ते च मौनव्रतान्विताः ।
उच्छिष्टोच्छिष्टसंस्पर्शं वर्जयन्तः परस्परम् ॥

इति। ते विप्रास्सर्वे देवार्थाः पित्रर्थाश्च पवित्रपाणयो मौनव्रतान्विताः प्रमादसम्भवं परस्परमुच्छिष्टोच्छिष्टसंस्पर्शं वर्जयन्तः आ भोजनसमाप्तेर्वर्तेरन्नित्यर्थः। चशब्दाच्छ्राद्धकर्ताऽपि मौनव्रतान्वितो वर्ततेति गम्यते। मौनव्रतान्वयस्य क्वचिदपवादमाह यमः—

ब्रह्मोद्याश्च कथाः कुर्युः पितॄणामेतदीप्सितम् ।

इति। पैठीनसिरप्युपवेशनायोद्युक्तब्राह्मणान् प्रत्याह—

नानियुक्तोऽग्रासनं गच्छेत्पङ्क्त्या हरति दुष्कृतम् ।

इति । अत्रास्यतामिति श्राद्धकर्त्रा न नियुक्तो योऽसावनियुक्तः।

अग्रासनं प्रथमासनम् । अनुपविष्टदशायामपि परस्परसंस्पर्शो यथा न भवति तथा वर्तितव्यमित्याह गौतमः—

परस्पर्शे भवेत्पापमेकपङ्क्तिनियोगतः ।
हीनवृत्तादिपङ्क्तौ तु युक्तं तस्माद्विवेचनम् ॥

इति । अत्र यमः—

भिक्षुको ब्रह्मचारी वा भोजनार्थमुपस्थितः ।
उपविष्टेष्वनुप्राप्तः कामं तमपि भोजयेत् ॥

इति । भिक्षुकोयतिः । तथाच छागलेयः—

पूजयेच्छ्राद्धकालेऽपि यतिं सब्रह्मचारिणम् ।
विप्रानुद्धरते पापात्पितॄन् मातृगणानपि ॥

वृद्धशातातपोपि—

आतिथ्यरहिते श्राद्धे भुञ्जते ये बुधा द्विजाः ।
वृथा तेनान्नपाकेन काकयोनिं व्रजन्ति ते ॥

इति । आतिथ्यरहिते अतिथिलक्षणलक्षितविप्रागमनेऽपि तत्पूजारहिते । तस्मादुपविष्टब्राह्मणैस्सह सत्यवकाशे तत्समीपे भिक्षुको ब्रह्मचारी अतिथिश्च पित्रर्थविप्रानुप्रवेशेनैव भोजयितव्यः । तथाच पुराणे निमन्त्रितब्राह्मणभोजनं विधायाभिहितम्—

शेषान्वित्तानुसारेण भोजयेदन्यवेश्मनि ।

इति । शेषान् निमन्त्रितव्यतिरिक्तानतिथिप्रभृतीन् । एतच्चातिथिभोजनमतिथिलक्षणलक्षिते आगते सति द्रष्टव्यं, न पुनः

'काकयोनिं व्रजन्ति ते' इति दोषश्रवणात् कल्पयित्वाऽप्यतिथिः कर्तव्यः । यस्त्वतिथिलक्षणहीनो भोजनयाचनादिना श्राद्धविघ्नं करोति तस्य दोषमाह हारीतः—

चतुर्णां दुष्कृतं हरति ब्राह्मणो विघ्नकारकः ।
अन्नस्यान्नपतेः पङ्क्तेर्भोजनाकाङ्क्षिणां तथा ॥

इति । भोजनाकांक्षिणः कृते श्राद्धे भोजनाकांक्षिणः । श्राद्धकर्तुर्बान्धवा इति यावत् ।

इति स्मृतिचन्द्रिकायां निमन्त्रितब्राह्मणोपवेशनम् .

---

## अथावान्तरसङ्कल्पादिकृत्यम् .

तत्र पुराणम्—

श्राद्धभूमौ गयां ध्यात्वा ध्यात्वा देवं गदाधरम् ।
ताभ्यां चैव नमस्कृत्य ततः श्राद्धं प्रवर्तयेत् ॥

श्राद्धावान्तरसङ्कल्पं कुर्यादित्यर्थः । अत्रावान्तरसङ्कल्पः उपविष्टब्राह्मणानुज्ञालाभार्थं, तथाच तत्रैवोक्तम्—

उभौ हस्तौ समौ कृत्वा जानुभ्यामन्तरे स्थितौ ।
सप्रश्रयश्चोपविष्टान् सर्वान् पृच्छेत् द्विजोत्तमान् ॥

नमस्काराञ्जलिकरणादुभौ हस्तौ समौ जान्वोरन्तरे यथा स्थितौ स्यातां तथा कृत्वा सप्रश्रयः नमस्कारांजलिबन्धनादिविनय सम्पन्नो निमन्त्रितानुपविष्टान् द्विजोत्तमान् सर्वान् पृच्छेदित्यन्वयः । कथं पृच्छेत्कथं च तैरुत्तरं देयमित्यपेक्षिते तत्रैवोक्तं—

श्राद्धं करिष्ये इत्येवं पृच्छेद्विप्रान् समाहितः ।

कुरुष्वेति च तैरुक्तो दद्याद्दर्भासनं तदा ॥

इति। दर्भासनदानात्पूर्वं 'देवताभ्यः पितृभ्यश्च' इति मन्त्रः त्रिरावर्तनीयः। तथाच ब्रह्माण्डपुराणे—

देवताभ्यः पितृभ्यश्च तथा योगिभ्य एव च ।

नमस्स्वधायै स्वाहायै नित्यमेव भवन्त्विति ॥

आद्यासने तु श्राद्धस्य त्रिरावृत्तं जपेत्सदा ।

पठ्यमानमिदं श्रुत्वा श्राद्धकाल उपस्थिते ॥

पितरः क्षिप्रमायान्ति राक्षसाः प्रद्रवन्ति च ।

चशब्दादसुराः पिशाचाः प्रद्रवन्तीति सूचितम्। राक्षसादीनामपनुत्तये कर्तव्यान्तरमाह निगमः—'अपहता इति तिलान् विकिरेत्' इति।

अपहता असुरा रक्षांसि पिशाचा ये क्षयन्ति पृथिवीमनु।

अन्यत्रेतो गच्छन्तु यत्रैषां गतं मनः ॥

इति मन्त्रलिङ्गादसुरादीनामपहत्यर्थमनेन मन्त्रेण तिलविकिरणं कर्तव्यमिति गम्यते। श्राद्धे दैवपूर्वकं सर्वमनुष्ठानं राक्षसाद्यपनुत्तये कर्तव्यमित्याह क्रतुः—

सदैवं भोजयेच्छ्राद्धं तत्पूर्वं च प्रवर्तयेत् ।

अन्यथा ह्यवलुम्पन्ति सदैवासुरराक्षसाः ॥

सदैवं श्राद्धं वैश्वदेविककर्मोपेतम्। सदैव सर्वदैव। मनुरपि—

देवकार्याद्द्विजातीनां पितृकार्यं विशिष्यते ।

दैवं हि पितृकार्यस्य पूर्वमाप्यायनं स्मृतम् ॥
तेषामारक्षभूतं तु दैवं पूर्वं नियोजयेत् ।
रक्षांसि विप्रलुम्पन्ति श्राद्धमारक्षवर्जितम् ॥

इति । देवकार्यात्पितृकार्यं विशिष्यते, देवकार्यस्याङ्गत्वात्पितृकार्यस्य प्रधानत्वादित्यभिप्रायः । पूर्वमाप्यायनं दैवं कर्म पूर्वानुष्ठेयं पितृकार्यस्योपबृंहकं उपकारि तदङ्गमिति यावत् । एवञ्च कुरुष्वेत्यनुज्ञानन्तरं 'देवताभ्यः पितृभ्यश्च' इति मन्त्रमुक्त्वा 'अपहताः' इति मन्त्रेण श्राद्धभूमौ तिलान् विकीर्य प्रथमं वैश्वदैविकब्राह्मणासनार्थं दर्भासनं दद्यादित्यनुष्ठानक्रमो वेदितव्यः। दर्भासनदानं च ब्राह्मणहस्ते अप आसिच्य कार्यम्।

पाणिप्रक्षाळनं दत्वा विष्टरार्थान् कुशानपि ।
आवाहयेदनुज्ञातो विश्वे देवास इत्यृचा ॥

इति याज्ञवल्क्यस्मरणात् । विष्टरार्थान् कुशान् आसनार्थान् कुशान् । यद्यपि पाणिप्रक्षाळनार्थमुदकं ब्राह्मणहस्ते दत्वा विष्टरार्थान् कुशानपि तत्रैव दत्वा आवाहयेदिति शब्दबलात्प्रतिभाति । तथापि विष्टरार्थान् कुशानासने दत्वेति विष्टरार्थपदसामर्थ्यादर्थः प्रत्येतव्यः । अत एव प्रचेताः—

दर्भांश्चैवासने दद्यान्न तु पाणौ कदाचन ।

इति । यत्तु तेनोक्तम्—

देवानामृजवो दर्भाः प्रदातव्याः पृथक्पृथक् ।
धर्मोसीत्यथ मन्त्रेण गृह्णीयुस्ते तु तान् कुशान् ॥

इति । तस्यायमर्थः—पूर्वोपक्लृप्तासनेषूपविष्टा आसनान्तरानाकांक्षा अपि धर्मोसीति मन्त्रमुच्चार्य तान् कुशानप्यासनार्थतया मनसा स्वीकुर्युः, न तु पाणिनेति । अतो न पूर्वापरविरोधः । देवस्वामिनाऽप्यविरोधार्थमेवमुक्तं—'पाणौ दर्भदानप्रतिषेध आसनास्तरणार्थदर्भविषयः, मन्त्रेण ग्रहणविधानसामर्थ्याद्याज्ञवल्क्यवचनाच्च विष्टरार्था दर्भाः पाणावेव देयाः' इति, तदयुक्तम्—आसनास्तरणार्थदर्भाणामासने प्रक्षिप्तव्यानां हस्ते दानाप्रसक्तेस्तत्र प्रतिषेधानवकाशात्,

आसने चासनं दद्याद्वामे वा दक्षिणेऽपि वा ।

इति विष्टरार्थदर्भाणामासने निधानविधायकादिपुराणवचनविरुद्धत्वाच्च । अत्र वाम इति पित्रर्थब्राह्मणासनदानविषयम् । दक्षिणं इति देवार्थब्राह्मणासनदानविषयम् । तथाचानन्तरमुक्तं तत्रैव—

पितृकर्मणि वामे वै दैवकर्मणि दक्षिणे ।

इति । वामे आसनस्य वामभागे । दक्षिणे दक्षिणभागे । दैविककर्मणि यवसहितं दर्भासनं दद्यात्, 'देवानां सयवा दर्भाः' इति काठकेऽभिधानात् । आसनस्य दक्षिणे भागे पुरूरवार्द्रवसंज्ञकानां विश्वेषां देवानामिदमासनमिति दर्भासनं दद्यात् । तथा च श्लोकसङ्ग्रहकारः—

अक्षय्यासनयोष्षष्ठी द्वितीयाऽऽवाहने स्मृता ।
अन्नदाने चतुर्थी स्यात् शेषास्सम्बुद्धयस्स्मृताः ॥

इति । दर्भासनदानानन्तरं गद्यसङ्ग्रहकारः—'ततः पुनरपो दत्वा दैवे क्षणः क्रियतामिति कर्ता, ओं तथेति विप्रो ब्रूयात्। प्राप्नोतु भवानिति कर्ता पुनर्ब्रूयात्। प्राप्नवानीति विप्रः पुनर्ब्रूयादिति। एतत्तु निमन्त्रणं ब्राह्मणहस्तमङ्गुष्ठव्यतिरिक्तं गृहीत्वा कर्तव्यं—

निरङ्गुष्ठं गृहीत्वा तु विश्वान् देवान् समाह्वयेत् ।

इति पुराणेऽभिधानात् । निरङ्गुष्ठं गृहीत्वा निमन्त्रणे कृते सत्यनन्तरं विश्वान् देवान् समाह्वयेदित्यर्थः । आवाहनप्रकारमाह यमः—

यवहस्तस्ततो देवान्विज्ञाप्यावाहनं प्रति ।
आवाहयेदनुज्ञातो विश्वेदेवास इत्यृचा ॥
विश्वेदेवाश्शृणुतेमं मन्त्रं जप्त्वा ततोऽक्षतान् ।
ओषधय इति मन्त्रेण विकिरेत्तु प्रदक्षिणम् ॥

इति । श्राद्धकर्ता गृहीतयवः पुरूरवार्द्रवसंज्ञकान् विश्वान् देवानावाहयिष्यामीति विशेषनाम्ना सामान्यनाम्ना च देवानामावाहनं वैश्वदेवब्राह्मणेभ्यो विज्ञाप्य तैरावाहयेत्यनुज्ञातो 'विश्वेदेवास आगत' इत्यनया ऋचा विश्वान् देवान् ब्राह्मणेष्वावाह्य यवान् ब्राह्मणस्य दक्षिणपादे सव्यपादे दक्षिणजानुनि सव्यजानुनि दक्षिणेंसे सव्येंसे शिरसि च समारोप्य ब्राह्मणेषु विश्वान् देवानागतान् ध्यात्वा 'विश्वे देवाश्शृणुत' इति मन्त्रं जपित्वा प्रदक्षिणं दक्षिणपादादि-

ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं वृद्धिवत्कृतम् ॥

इति कर्माङ्गश्राद्धलक्षणमभिदधता पारस्करेणैव वृद्धिवत्कृतमित्यभिधानात् कर्माङ्गश्राद्धं वृद्धिश्राद्धादन्यदिति दर्शितम्। नान्दीमुखं नान्दीमुखसंज्ञकपितृदेवताकं वृद्धिश्राद्धमिति यावत्।

एवं प्रदक्षिणीकृत्य वृद्धौ नान्दीमुखान् पितॄन्।

यजेत.................................... ॥

इति याज्ञवल्क्येन वृद्धिश्राद्धे नान्दीमुखसंज्ञकपितॄणां देवतात्वेन विधानात्। वृद्धिश्राद्धं च वृद्धवसिष्ठेन निरूपितम्—

पुत्रजन्मविवाहादौ वृद्धिश्राद्धमुदाहृतम्।

इति। पुत्रजन्मविवाहादौ क्रियमाणमाभ्युदयिकं श्राद्धं वृद्धिश्राद्धमिति व्यपदिश्यत इत्यर्थः। आदिशब्देन गर्भाधानपुंसवनसीमन्तव्यतिरिक्तानामन्नप्राशनचूडाकरणादिसंस्कारकर्मणां सङ्ग्रहणं, गर्भाधानपुंसवनसीमन्तेषु क्रियमाणाभ्युदयिकश्राद्धस्य कर्माङ्गश्राद्धकोटिप्रविष्टत्वात्। काम्यं फलकामनयाऽनुष्ठेयं महालयादिश्राद्धम्,

पुत्रानायुस्तथाऽऽरोग्यमैश्वर्यमतुलं तथा।

प्राप्नोति पञ्चमे दत्वा श्राद्धं कामांश्च पुष्कलान् ॥

इति पञ्चमपक्षे कन्यागते सूर्ये महालयाख्यश्राद्धस्य पुत्रादिकाम्यफलसाधकत्वस्मरणात्। पार्वणश्राद्धं सर्वश्राद्धप्रकृतिभूतममावास्याश्राद्धम्। तथाच शातातपः—

दर्शश्राद्धं तु यत्प्रोक्तं पार्वणं तत्प्रकीर्तितम्।

इति ।

एकोद्दिष्टं तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते ।

इतिवचनान्नैमित्तिकपदेनात्रैकोद्दिष्टश्राद्धमुक्तमिति यद्यपि प्रतिभाति । तथाऽपि तद्वचनोत्तरार्धे,

तदप्यदैवं कर्तव्यमयुग्मानाशयेद्द्विजान् ।

इति पूर्वार्धोक्तैकोद्दिष्टश्राद्धे वैश्वदैविकानिषेधेन तत्र कालकामसंज्ञया विश्वेषां देवानां निर्देशः कार्य इति विध्यसंभवात् योगरूढ्या प्रतीयमानमेकोद्दिष्टं हित्वा निमित्ते भवं नैमित्तिकमिति योगमाश्रित्य नैमित्तिकपदेन नवान्नलाभादिनिमित्ते सति पितृभ्यो भक्त्या क्रियमाणं श्राद्धमुक्तमित्यवगन्तव्यम् । अथवा—नैमित्तिकपदेनैकोद्दिष्टाभिधायकेन सपिण्डीकरणं लक्षणया निर्दिश्यते, सपिण्डीकरणे एकोद्दिष्टस्यापि सद्भावात् । एवञ्च—सपिण्डीकरणे विश्वेषां देवानां आवाहनार्थं कालकामसंज्ञया निर्देशः कार्यः । 'एवं सर्वत्र कीर्तयेत्' एवमुक्तरीत्या सर्वश्राद्धेषु नामग्रहणस्थाने कीर्तयेदित्यर्थः । आदिपुराणे विशेषनामानि दर्शितानि—

विश्वेदेवौ क्रतुर्दक्षः सर्वास्विष्टिषु कीर्तितौ ।
नित्यं नान्दीमुखश्राद्धे वसुसत्यौ च पैतृके ॥
नवान्नलम्भने देवौ कालकामौ सदैव हि ।
अपि कन्यागते सूर्ये श्राद्धे च धुरिलोचनौ ॥
पुरूरवार्द्रवौ चैव विश्वेदेवौ च पार्वणे ।

इति ।

एकोद्दिष्टं तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते ।

इतिवचनान्नैमित्तिकपदेनात्रैकोद्दिष्टश्राद्धमुक्तमिति यद्यपि प्रतिभाति । तथाऽपि तद्वचनोत्तरार्धे,

तदप्यदैवं कर्तव्यमयुग्मानाशयेद्द्विजान् ।

इति पूर्वार्धोक्तैकोद्दिष्टश्राद्धे वैश्वदैविकानिषेधेन तत्र कालकामसंज्ञया विश्वेषां देवानां निर्देशः कार्य इति विध्यसंभवात् योगरूढ्या प्रतीयमानमेकोद्दिष्टं हित्वा निमित्ते भवं नैमित्तिकमिति योगमाश्रित्य नैमित्तिकपदेन नवान्नलाभादिनिमित्ते सति पितृभ्यो भक्त्या क्रियमाणं श्राद्धमुक्तमित्यवगन्तव्यम् । अथवा—नैमित्तिकपदेनैकोद्दिष्टाभिधायकेन सपिण्डीकरणं लक्षणया निर्दिश्यते, सपिण्डीकरणे एकोद्दिष्टस्यापि सद्भावात् । एवञ्च—सपिण्डीकरणे विश्वेषां देवानां आवाहनार्थं कालकामसंज्ञया निर्देशः कार्यः । 'एवं सर्वत्र कीर्तयेत्' एवमुक्तरीत्या सर्वश्राद्धेषु नामग्रहणस्थाने कीर्तयेदित्यर्थः । आदिपुराणे विशेषनामानि दर्शितानि—

विश्वेदेवौ क्रतुर्दक्षः सर्वास्विष्टिषु कीर्तितौ ।
नित्यं नान्दीमुखश्राद्धे वसुसत्यौ च पैतृके ॥
नवान्नलम्भने देवौ कालकामौ सदैव हि ।
अपि कन्यागते सूर्ये श्राद्धे च धुरिलोचनौ ॥
पुरूरवार्द्रवौ चैव विश्वेदेवौ च पार्वणे ।

इति। सर्वास्विष्टिषु सर्वेषु कर्माङ्गश्राद्धेषु नवान्नलम्भने पैतृके नवान्नलाभरूपनिमित्ते सति, नवान्नभोजनोपक्रमात् पूर्वं पितृभक्त्या नवान्नेन क्रियमाणश्राद्धवत्। तच्च निमित्ताधिकारेण क्रियमाणानां विश्वेदेवसमन्वितानां श्राद्धानामुपलक्षणार्थम्। कन्यागते सूर्ये श्राद्धे पुत्रादिफलकामनया क्रियमाणमहालयाख्य इत्यर्थः। एतच्च सर्वकाम्यश्राद्धोपलक्षणतयोक्तम्। पार्वणे अमावास्यायां क्रियमाणे पार्वणश्राद्धे इति। क्रतुदक्षसत्यादीनां च दक्षप्रजापतेर्दुहितरि विश्वाख्यायां लोकविश्रुतायामुत्पत्तिस्समभूदित्युत्पत्तिमपि ज्ञात्वा आवाहनं कार्यम्। अतएवैषामुत्पत्तिः पुराणेऽभिहिता—

दक्षस्य दुहिता साध्वी विश्वा नाम परिश्रुता।
तस्याः पुत्रा महात्मानो विश्वे देवा इति श्रुताः॥

एवमुक्तोत्पत्तिरावाहनसमये ज्ञातव्येत्यभिप्रायः। अतएव क्रतुदक्षादिसंज्ञां दक्षदुहितुरुत्पत्तिं च ये न विदुः तेषामनुकल्पमाह शङ्खः—

नाम चैव तथोत्पत्तिं न विदुर्ये द्विजातयः।
श्लोकमेतं पठेयुस्ते ब्राह्मणानां समीपगाः॥
आगच्छन्तु महाभागा विश्वेदेवा महाबलाः।
ये ह्यत्र विहिताश्श्राद्धे सावधाना भवन्तु ते॥

इति। आगच्छन्तु महाभागा इति मन्त्रं वैश्वदैविकब्राह्मणसमीपस्थाः 'विश्वे देवाश्शृणुतेमम्' इति मन्त्रजपानन्तरं जपेयुरित्यर्थः। तथाच पुराणम्—

तथा मन्त्रं जपेन्मौनी विश्वेदेवास आगत ।
विश्वेदेवाश्शृणुतेति द्वितीयं तदनन्तरम् ॥
तृतीयं तु जपेन्मन्त्रं आगच्छन्त्वित्यतःपरम् ।

इति । विश्वेदेवास इत्यनया ऋचा प्रथममावाह्य तदनन्तरं विश्वेदेवाश्शृणुतेति मन्त्रं जपेदित्यन्वयः । यद्यपि कर्माङ्गश्राद्धादिषु न क्वापि दश विश्वेदेवा देवतात्वेन स्मृतिपुराणाभ्यामभिहिताः, किन्तु द्वौ द्वावेकैकस्मिन् श्राद्धे देवतात्वेनोक्तौ । तथाप्यावाहनादौ पुरूरवार्द्रवसंज्ञकान् विश्वान् देवानावाहयिष्यामीत्येवं बहुवचनान्ततयैव प्रयोगः कार्यः 'विश्वान्देवानावाहयिष्यामीति निरङ्कुष्ठं गृहीत्वा विश्वान् देवान् समावाहयेत्' इत्यादिस्मृतिपुराणेषु बहुवचनान्ततयैव प्रयोगदर्शनात् । यथा एकस्मिन् पितरि पितामहे प्रपितामहे वा आवाहनादिसर्वोपचारेषु पितरः पितामहाः प्रपितामहा इदं व आसनमित्यादिबहुवचनान्तोपि प्रयोगः पूजार्थं यथा नानुपपन्नः तथा द्वयोरपि पूजार्थं बहुवचनान्तप्रयोगो युक्त एव । वैश्वदैविकब्राह्मणानामनेकत्वेऽपि न प्रतिब्राह्मणमावाहनावृत्तिः, सकृदावाहनेनैवानेकब्राह्मणाधिष्ठानदेवताध्याससम्भवात् । आवाहनादूर्ध्वं तु प्रतिब्राह्मणं देवताध्यासात् ब्राह्मणभेदे सति तदुपाधितो देवताया अपि भेदो भवति, तेनावाहनोत्तरकाले यद्यद्देवताराधनं क्रियते यवारोपणादि सन्निपत्योपकारकं तत्पुरोडाशप्रदानादिवत्प्रतिब्राह्मणमावर्तनीयं, सन्निपत्योप-

कारकेष्वावृत्तिं विना ब्राह्मणान्तरे कार्यासिद्धेः । विश्वेदे-वाश्शृणुतेमम्' इति मन्त्रजपस्त्वावाहनोत्तरकाले क्रियमाणोपि नावर्तते, सकृज्जपेनैव जपसाध्यादृष्टसिद्धेः ॥

इति स्मृतिचन्द्रिकायां अवान्तरसङ्कल्पादि
वैश्वदैविकावाहनान्तकृत्यम्.

---

## अथ वैश्वदैविकार्चनविधिः.

तत्र याज्ञवल्क्यः—

यवैरन्ववकीर्याथ भाजने सपवित्रके ।
शन्नो देव्या अपः क्षिप्त्वा यवोसीति यवांस्तथा ॥

इति । अयमर्थः—वैश्वदैविकब्राह्मणयोः पादाद्यङ्गेषु यवान् समारोप्य 'विश्वेदेवाश्शृणुत' इत्यादिकं जपित्वा अर्घ्यभाजने द्वे उत्ताने निधाय तत्रैकैकस्मिन् भाजने द्विदर्भमेकैकं पवित्रं प्रागग्रमुदगग्रं वा निधाय 'शन्नो देवीरभिष्टये' इत्यृचा प्रतिपात्रं जलं निषिच्य

यवोसि धान्यराज त्वं वारुणो मधुसंयुतः ।
निर्णोदस्सर्वपापानां पवित्रमृषिभिः कृतम् ॥

इति मन्त्रेण यवान् प्रतिपात्रं प्रक्षिपेत् । तथाऽन्यदपि गन्धादिकं क्षिपेदिति । अत्राद्यपादस्यार्थो मत्स्यपुराणे स्पष्टमुक्तः—

विश्वान् देवान् यवैः पुष्पैरभ्यर्च्यासनपूर्वकम् ।

पूरयेत्पात्रयुग्मं तु स्थाप्य दर्भपवित्रके ॥ इति ॥

प्रचेतसा त्वन्त्यपादत्रयस्यार्थः स्पष्टमुक्तः—

एकैकस्यापि विप्रस्य अर्घ्यं पात्रे विनिक्षिपेत् ।
यवोसीति यवान् क्षिप्त्वा गन्धपुष्पैस्सुपूजितम् ॥

अर्घ्यमर्घ्यार्थं जलं, तदेकैकस्य विप्रस्य एकैकस्मिन् पात्रे मन्त्रावृत्त्या विनिक्षिपेत्, तदैव यवान् क्षिप्त्वा गन्धपुष्पैस्सुपूजितं कुर्यादित्यर्थः । अर्घ्यपात्रे विशेषमाह कात्यायनः— 'सौवर्णराजतौदुम्बरखड्गमणिमयानामन्यतमेषु यानि विद्यन्ते पत्रपुटादिषु वा, इति । औदुम्बरं ताम्रं, खड्गं खड्गमृगमयं, मणिमयं मरकतादिरत्नमयं, यानि वा कांस्यादितैजसानि विद्यन्ते तेषु वेति शेषः । बैजवापोपि—

राजतानि प्रशस्तानि पित्र्ये हैमानि दैविके ।
अपि वा ताम्रपात्राणि दैवे पित्र्येऽर्घ्यकर्मणि ॥

उत्तरार्धेऽपि प्रशस्तानीत्यनुषज्यते । राजतानि तु पात्राणि दैवे निन्दितानि, तथाच राजतं पात्रमधिकृत्य मत्स्येनोक्तम्—

शिवनेत्रोद्भवं यस्मादतस्तात्पितृवल्लभम् ।
अमङ्गळं तद्यत्नेन देवकार्येषु वर्जितम् ॥

शिवनेत्रोद्भवं शिवनेत्रजलप्रभवं, तथाच श्रुतिः—'सोऽरोदीद्य-दरोदीत्तद्रुद्रस्य रुद्रत्वं यदश्रुशीयत तद्रजतं हिरण्यमभवत्' इति । अमङ्गळं तदिसत्राश्रुप्रभवत्वादिसभिप्रायोऽवसेयः । अ-र्घ्यपात्रान्तर्धायकपवित्रे प्रत्यर्घ्यपात्रं भेदेन कार्ये इति चतु-

विंशतिमतेऽभिहितम्—'द्वेद्वे शलाके देवानां पात्रे कृत्वा पयः क्षिपेत्' इति । दर्भादिषु साग्रेषु शलाकाशब्दो वर्तते । द्वेद्वे इति वीप्सया प्रतिपात्रं द्वेद्वे शलाके निधातव्ये इति दर्शितम्। पवित्रकरणप्रकारमाह याज्ञवल्क्यः—

पवित्रे स्थ इति मन्त्रेण द्वे पवित्रे च का॰येत् ।
अनन्तर्गर्भे कुशच्छिन्ने कौशे प्रादेशसम्मिते ॥

कुशच्छिन्ने कुशमन्तर्धाय छिन्ने कौशे कुशमये पवित्रे स्थ इति मन्त्रेण 'पवित्रे स्थो वैष्णवी। वायुर्वा मनसा पुनातु' इति मन्त्रेण। यज्ञपार्श्वोपि—

ओषधीमन्तरे कृत्वाङ्गुष्ठाङ्गुलिपर्वणोः ।
छिन्द्यात्प्रादेशमात्रं तु पवित्रं विष्णुदैवतम् ॥
न नखेन न काष्ठेन न लोहेन न मृन्मयात् ।
नखेन तु भवेद्व्याधिः काष्ठेनार्थो न सिध्यति ॥
आयसेन भवेन्मृत्युः मृन्मये कलहो ध्रुवम् ।

इति । गन्धपुष्पैः सुपूजितकरणानन्तरं गार्ग्यः—

स्वाहेति चैव देवानां होमकर्मण्युदाहरेत् ।

होमशब्दोत्र त्यागसद्भावसामान्याद्दाने वर्तते । ततश्चायमर्थः—देवानामर्घ्यदानकर्मणि करिष्यमाणतया प्रस्तुते देवेभ्योऽर्घ्यं निवेदयितुं स्वाहेत्युदाहरेत् । 'स्वाहाऽर्घ्यम्' इत्युच्चार्य विप्र समीपे अर्घ्यपात्रं स्थापयेदित्यर्थः । स्थापनानन्तरं याज्ञवल्क्यः—

या दिव्या इति मन्त्रेण हस्तेष्वर्घ्यं विनिक्षिपेत् ।

इति । 'या दिव्या आपस्सुहवा भवन्तु' इति मन्त्रेण मन्त्रान्ते पुरूरवार्द्रवसंज्ञिका विश्वेदेवा इदं वो अर्घ्यमित्युक्त्वा वैश्वदैविकब्राह्मणस्यैकस्य हस्ते दक्षिणे अर्घ्यपवित्रेणान्तर्हिते एकपात्रस्थमुदकं कृत्स्नं दद्यादित्यर्थः ।

दत्वा हस्ते पवित्रं तु हस्तेष्वर्घ्यं विनिक्षिपेत् ।

इति गार्ग्यस्मरणात् । यद्यप्यत्रोपक्रमोपसंहारगतवचनयोर्विरोधः प्रतिभाति । तथाऽप्यनुपजाताविरोधित्वादुपक्रमानुरोधेनैवोपसंहारस्य वर्णनं कार्यमिति न्यायेन बहुवचनमत्र श्लोकसिद्ध्यर्थं प्रयुक्तमिति वर्णयितव्यम् । एवञ्च याज्ञवल्क्यवचनेऽपि 'हस्तेष्वर्घ्यं विनिक्षिपेत्' इत्यत्र हस्तेष्विति बहुवचनं श्लोकसिद्ध्यर्थं कृतं, हस्तस्याधिकरणत्वप्रतिपादनमात्रे तु तात्पर्यमिति मन्तव्यम् । ब्राह्मणहस्तेष्वर्घ्यसेचनानन्तरं याज्ञवल्क्यः—

दत्वोदकं गन्धमाल्यं धूपदानं सदीपकम् ।

इति । गन्धमाल्यधूपदीपदानानि प्रत्येकमुदकमादौ दत्वा कार्याणीत्यर्थः । तथाच गौतमः 'भिक्षादानमप्पूर्वं ददातिषु चैवम्' इति । आपः पूर्वं दत्ता यस्माद्भिक्षादानात्तदप्पूर्वं, ददातिषु भिक्षातो वस्त्वन्तरदानेष्वप्येवमप्पूर्वं दानं कार्यम् । वैश्वदैविकदानेषु समर्पणाय प्रयोक्तव्या मन्त्रा ब्रह्मपुराणे दर्शिताः—

इदं वः पाद्यमर्घ्यं च पुष्पदानविलेपनम् ॥

अयं दीपप्रकाशश्च विश्वेदेवास्समर्प्यते ॥

इति। विश्वेदेवा इदं वः पाद्यं विश्वे देवा इदं वो अर्घ्यं इति नपुंसकलिङ्गनिर्देशेन पाद्यादिकं, विश्वे देवा एष वो धूपः विश्वे देवा अयं वो दीपप्रकाशे इति पुल्लिङ्गनिर्देशेन धूपादिस्समर्प्यते विश्वेभ्यो देवेभ्यस्समर्पणीयमित्यर्थः । गन्धदानादावेवं प्रयोगः—ब्राह्मणहस्ते उदकं निनीय पुरूरवार्द्रवसंज्ञका विश्वेदेवा अयं वो गन्ध इति गन्धं ब्राह्मणहस्ते दद्यात्। पूर्ववदुदकं निनीय पुरूरवार्द्रवसंज्ञकाविश्वेदेवा इदं वो माल्यं इति माल्यं दद्यात्। पूर्ववदुदकं निनीय पूर्ववत्तेषां नाम गृहीत्वा अयं वो धूप इति धूपार्पणं, पूर्ववदुदकं निनीय देवतानामगृहीत्वा अयं वो दीप इति दीपार्पणम्, पुनरापो दत्वा नाम गृहीत्वा इदं व आच्छादनमिति वस्त्रतन्मूल्ययज्ञोपवीतेषु यथालाभमेकं दद्यात्। अर्चनं सर्वं सम्पूर्णमस्त्विति कर्ता ब्रूयात्। अस्तु सम्पूर्णमिति विप्रो ब्रूयात्। सङ्कल्पसिद्धिरस्त्विति भवन्तो ब्रुवन्त्विति कर्ता ब्रूयात्। अस्तु सङ्कल्पसिद्धिरिति विप्रो ब्रूयात्। आसनादौ सर्वत्र स्वासनं स्वर्घ्यं सुगन्धः सुमाल्यं सुधूपः सुदीपः स्वाच्छादनं इति विप्रो ब्रूयात्। एतत्सर्वं गद्यसङ्ग्रहकारेणोक्तम्। देवपित्रर्चनार्थं यानि गन्धपुष्पधूपदीपाच्छादनान्युपादेयानि वर्ज्यानि च तानि प्रागुपकल्प्यद्रव्यकथनावसरे कथितानीतीह नोक्तानि। तेनोपकल्प्यद्रव्यकथनावसरोक्तानीहोपादेयानि ॥

इति स्मृतिचन्द्रिकायां वैश्वदैविकार्चनविधिः.

---

## अथ पैतृकार्चनविधिः.

तत्र देवलः—

द्विजातयो यथाप्रोक्ता नियतास्स्युरुदङ्मुखाः ।
पूजयेद्यजमानस्तु विधिवद्दक्षिणामुखः ॥

याज्ञवल्क्योपि—

अपसव्यं ततः कृत्वा पितॄणामप्रदक्षिणम् ।

इति। वैश्वदेवार्थमुपवीतत्वेन स्थितं यज्ञसूत्रं ततो वैश्वदैविकार्चनानन्तरमपसव्यं प्राचीनावीतं कृत्वा पितॄणामुपचारभूतासनादिपदार्थानप्रदक्षिणं कुर्यादित्यर्थः । यद्यपि वैश्वदैविकासनदानानन्तरं पैतृकासनदानं वैश्वदैविकावाहनानन्तरं पैतृकावाहनमित्येवं पदार्थानुसमयेनैवासनावाहनार्घ्यगन्धपुष्पधूपदीपाच्छादनाख्याः पदार्थाः वैश्वदैविकाः पैतृकाश्च अनुष्ठेयाः, न तु वैश्वदैविकासनाद्याच्छादनान्तपदार्थकाण्डादूर्ध्वं पैतृकासनादिपदार्थानां पदार्थानुसमयेनानुष्ठानम्, अन्याय्यत्वात्। तथाऽप्यत्र वैश्वदैविकपदार्थानां काण्डानुसमयेनानुष्ठानस्य वाचनिकत्वात्तथैवानुष्ठानं कार्यं, वाचनिकत्वं च 'अपसव्यं ततः कृत्वा' इत्यादिना वचनेन वैश्वदेविकार्चनपदार्थकाण्डादूर्ध्वं पैतृकार्चनविधानात्सिद्धम् । कथं पुनः पैतृकार्चनमित्यपेक्षिते स एवाह—

द्विगुणांस्तु कुशान् दत्वा उशन्तस्त्वेत्यृचा पितॄन् ।
आवाह्य तदनुज्ञातो जपेदायन्तु नस्ततः ॥

द्विगुणान् तिलान्, 'पितॄणां द्विगुणांस्तिलैः' इति स्मरणात्। कुशान् त्रिपञ्चादिविषमसङ्ख्याकान् 'पित्र्येऽयुग्मांस्तथैव च' इति स्मरणात्। दत्वा आसनस्य वामभागे 'प्रदद्यादासने दर्भान् न तु पाणौ कदाचन। पितृकर्मणि वामे स्यात्' इति स्मरणात्। आसनदानात् पूर्वं पश्चाच्च ब्राह्मण हस्ते अपामासेचनं कार्यं 'अपः प्रदाय दर्भान् द्विगुणान् आसनं प्रदायापः प्रदद्यात्' इति शौनकस्मरणात्। 'पितॄनावाहयेत्' इत्यत्र पितृशब्देन कर्तुरतीताः पूर्वपुरुषाः पितृपितामहप्रपितामहा उक्ताः, तेषां श्राद्धकर्मणि हविःप्रत्युद्देश्यतया देवतात्वेन आवाह्यत्वात्। तथा चापस्तम्बः—'अथैतन्मनुः श्राद्धशब्दं कर्म प्रोवाच प्रजानिःश्रेयसाय तत्र पितरो देवता ब्राह्मणस्त्वाहवनीयार्थे' इति। श्राद्धशब्दं कर्म श्राद्धनामधेयं कर्म। प्रजानिश्श्रेयसाय पुत्रपौत्रादिसन्ततिश्रेयःप्राप्त्यर्थम्। तत्र श्राद्धनामधेये कर्मणि। पितरो देवताः श्राद्धकर्तुः पितृपितामहप्रपितामहा लोकान्तरगताः सम्प्रदानत्वेन हविःप्रत्युद्देश्या, न तु ब्राह्मणास्संप्रदानत्वेन हविःप्रत्युद्देश्याः। किन्त्वाहवनीयार्थे देवतोद्देशेन त्यक्तस्य हविषः प्रक्षेप्यमाणस्य धारणरूपे आहवनीयकार्ये केवलं वर्तन्त इत्यर्थः। तत्कार्ये वर्तनं च 'ब्राह्मणस्य हस्ते होतव्यम्' इतिवदत्र वचनाभावान्न हस्तद्वारा, किंतु—

द्वौ दैवे पितृकृत्ये त्रीनेकैकमुभयत्र वा।

भोजयेदिति वचनात् त्यक्तान्नप्राशनद्वारेति गम्यते। पितृकृत्ये यजमानस्य पितृपितामहप्रपितामहानुद्दिश्य त्यक्तान्नभोजनकृत्ये। अत एव ब्रह्मपुराणे—

पितॄन् पितामहन् यक्ष्ये भोजनेन यथाक्रमम्।
प्रपितामहान्वै सर्वांश्च तत्पितॄंश्चानुपूर्वशः॥

तत्पितॄन् प्रपितामहस्य पितृपितामहप्रपितामहान्। पिण्डदानसमये हस्तलग्नेन लेपनेन यक्ष्ये इत्यर्थः। बैजवापिनाऽपि यजमानस्य पितृपितामहप्रपितामहानां श्राद्धदेवतात्वमभिधाय सुस्पष्टं तेषामेवावाहनमुक्तं—'तिष्ठन् पितॄन् आवाहयिष्ये' इत्यामन्त्र्य 'उशन्तस्त्वा, इत्यनया यजमानस्य पितरं पितामहं प्रपितामहं नामभिरावाह्य' इति। पुराणेऽपि श्राद्धकर्तुः पूर्वपुरुषाणामेव श्राद्धदेवतात्वमभिसंधाय सुस्पष्टं तेषामेव कव्यभागित्वमुक्तं—

या तु पिण्डक्रिया तत्र ब्राह्मणानां तु भोजनम्।
यजमानस्य पूर्वेषां तत्तु गच्छति नान्यथा॥

तत्र श्राद्धकर्मणि या पिण्डक्रिया आद्यपिण्डक्रिया पितृसम्बन्धिनी कृता 'ब्राह्मणानां तु भोजनं, यथासुखं जुषध्वम्' इति यद्यदन्नं ब्राह्मणभोजनाय निवेदितं तद्द्विविधमन्नं यजमानस्य पूर्वेषां श्राद्धकर्तुः पितृपितामहप्रपितामहानामुपभोगाय गच्छति नान्यथा नान्येषामुपभोगाय गच्छतीत्यर्थः। कथं पुनस्सर्वेषां पुरुषाणां प्रातिस्विकशुभाशुभकर्मवशेन स्व-

र्गनरकादिगतानां दूरस्थकव्यभोक्तृत्वसामर्थ्यरहितानामुपभोगाय नेतृपुरुषशून्यमचेतनमन्नादि द्रव्यं गच्छतीत्यनुपपत्तिनिराकरणार्थमुक्तं तत्रैव—

यथा गोषु प्रणष्टेषु वत्सो विन्दति मातरम् ।
एवं श्राद्धेऽन्नमुद्दिष्टं मन्त्रः प्रापयते पितॄन् ॥

मन्त्रो मन्त्रसामर्थ्यम् । मन्त्रसामर्थ्यमपि ब्राह्मणभोजनादिना नष्टमन्नं कथं प्रापयतीत्यनुपपत्तिनिराकरणाय मत्स्येनोक्तं—

नाम गोत्रं पितॄणां तु प्रापकं हव्यकव्ययोः ।
नाममन्त्रास्तथाऽऽदेशाः भवान्तरगतानपि ॥
प्राणिनः प्रीणयन्त्येते तदाहारत्वमागतान् ।
देवो यदि पिता जातश्शुभकर्मनियोगतः ॥
तस्यान्नममृतं भूत्वा दिव्यत्वेऽप्यनुगच्छति ।
देवत्वे भोग्यरूपेण पशुत्वे तु तृणं भवेत् ॥
श्राद्धान्नं वायुरूपेण नागत्वेऽप्युपगच्छति ।
पानं भवति यक्षत्वे गृध्रत्वे तु तथाऽऽमिषम् ॥
दनुजत्वे तथा मांसं प्रेतत्वे रुधिरोदकम् ।
मानुष्ये त्वन्नपानादि नानाभोगकरं तथा ॥
रतिशक्तिः स्त्रियः कान्ता भोज्यं भोजनशक्तिता ।
दानशक्तिस्सविभवा रूपमारोग्यमेव च ॥
श्राद्धपुष्पमिदं प्रोक्तं फलं ब्रह्मसमागमः ।

इति । नामानि देवदत्तयज्ञदत्तादीनि । मन्त्राः 'पृथिवी ते पात्रम्'

इत्यादयः । आदेशा इदमन्नादिकममुष्मै भवत्वित्येवमादयो निर्देशाः।तदाहारत्वमागतान् तत्तज्जात्युचिताहारत्वं प्राप्तान्। तस्यान्नं तत्तदुद्देशेन त्यक्तमन्नं अमृतं भूत्वा यत्रासौ स्थितः तत्र मन्त्रसामर्थ्यात्तत्तद्भोगयोग्यं द्रव्यान्तरं भूत्वाऽनुगच्छति भोग साधनं भवति । दिव्यत्वे दिविस्थितत्वे देवत्वे । भोग्यरूपेण दिवोऽन्यत्र लोकान्तरे वर्तमाने देवत्वे स्थिते देवोचितभोग्य रूपेण । इदं स्वकर्मानुसारिशरीरोचितान्नादिरूपेण भोगसाधनत्वं, श्राद्धकर्मणः पुष्पं अवान्तरफलम् । ब्रह्मसमागमो ब्रह्म लोकप्राप्तिः परमफलं प्रोक्तमित्यर्थः । अत्रावान्तरफलप्राप्तिः कालादिविशेषलाभे भवति । तथाच हारीतः—

काले न्यायागतं पात्रे विधिना प्रतिपादितम् ।
प्राप्नोत्यन्नं यथादत्तं जन्तुर्यत्रावतिष्ठते ॥

इति । परमफलप्राप्तिस्तु गयादिदेशविशेषलाभे भवति ।

यन्नाम्ना पातयेत्पिण्डं तं नयेद्ब्रह्म शाश्वतम् ।

इति गयादिदेशविशेषकृतस्य श्राद्धस्य फलत्वेन श्रवणात्।शाश्वतं ब्रह्म नयेत् ब्रह्मणा सह ब्रह्मप्राप्त्यापादकं ब्रह्मलोकं नयेदित्यर्थः । एवमापस्तम्बादिवचनैः श्राद्धकर्मणि न ब्राह्मण उद्देश्यः । किंतु श्राद्धकर्तुः पितृपितामहप्रपितामहा लोकान्तरगता उद्देश्या इति सिद्धम् । तेषूद्देश्यपित्रादिषु वस्वादिरूपतया उद्देशार्थं यथाक्रमं वस्वादिबुद्धिः कार्येत्याह शातातपः—

वसवः पितरो ज्ञेयाः रुद्रा ज्ञेयाः पितामहाः ।

प्रपितामहास्तथाऽऽदित्या इत्येषा वैदिकी श्रुतिः ॥

एवं ज्ञात्वा श्राद्धे कृते वस्वादीनामपि प्रीतिर्भवतीत्याह पैठीनसिः— ‘वसवः पितरो रुद्राः पितामहा आदित्याः प्रपितामहा य एवं विद्वान् पितॄन् यजते वसवो रुद्रा आदित्याश्चास्य प्रीता भवन्ति’ इति । पित्रादिष्वेव वस्वादिरूपमनुसन्धायानुष्ठितेन श्राद्धेन प्रीता वस्वादयः श्राद्धजनितप्रीतिशालित्वेन श्राद्धदेवताभूतपित्रादिकल्पाः पुत्रादिदत्तान्ननिदानकस्वामृताद्यन्नपानान्तस्य प्राप्तिं नामगोत्रमन्त्रादिवस्तुसामर्थ्येन कुर्वतां मनुष्याणां पितॄन् शुभाशुभकर्मारब्धशरीरान्तरगतान् प्रीणयन्तीत्यर्थः । तेन पुत्रादिभिरवश्यं नामगोत्रमन्त्राद्युच्चारणवद्वस्वादिरूपेण पित्रादयो ध्यातव्याः । तथाऽऽह याज्ञवल्क्यः—

वसुरुद्रादितिसुताः पितरश्श्राद्धदेवताः ।

प्रीणयन्ति मनुष्याणां पितॄन् श्राद्धेन तर्पिताः ॥

अदितिसुता आदित्याः । एवञ्चापस्तम्बादिवचनानां शातातपादिवचनानां च न परस्परविरोधः । तेन श्राद्धकर्तुः पूर्वपुरुषा एव लोकान्तरगताः श्राद्धदेवता इति सिद्धम् । यत्तु देवलेनोक्तं—

वसवः पितरो ज्ञेयाः रुद्रा ज्ञेयाः पितामहाः ।

प्रपितामहास्तथाऽऽदित्याः श्रुतिरेषा सनातनी ॥

प्रेतानुद्दिश्य यत्कर्म क्रियते मानुषैरिह ।

तुष्यन्ति पितरस्तेन न प्रेताः पितरस्स्मृताः ॥

इति । अयमर्थः—मानुषैः पुत्रादिभिरिह मनुष्यलोके यच्छ्राद्धाख्यं कर्म प्रेतान् परलोकगतान् पित्रादीन् श्राधे उद्देश्यभूतान् वस्वादिरूपेण ध्यातानुद्दिश्य क्रियते तेन तथाकृतेन कर्मणा तस्मिन् कर्मणि वस्वादिरूपेण ध्यात्वोद्दिष्टाः पितरः पित्रादयस्तुष्यन्ति न पुनस्स्वरूपेणोद्दिष्टाः यतो न प्रेताः परलोकगताः स्वरूपमात्रेण श्राद्धदेवताभूताः पितरस्स्मृता इति । अतः अनेनापि सह आपस्तम्बादिवचनानां न विरोधः । एवं निरूपितं श्राद्धकर्तुः पित्रादीनां देवतात्वं मातृपितामह्यादिसहितानामेव न तु केवलानामित्याह शातातपः—

एकमूर्तित्वमायाति सपिण्डीकरणे कृते ।
पत्नी पतिपितृणां तु तत्तदंशेषु भागिनी ॥

एतद्वचनं पित्रादिदैवत्ये श्राद्धे तत्पत्नीनां सहभावेन देवतात्वं बोधयति । ततश्च सपत्नीकाः पितरो देवता इत्येषोऽर्थ उक्तो भवति । एवंच पार्वणादिश्राद्धे पित्रादीनां सपत्नीकानां च तृप्तिर्भवति न पुनः केवलानामिति मन्तव्यम् । अत एव बृहस्पतिः—

स्वेन भर्त्रा समं श्राद्धे माता भुङ्क्ते सुधामयम् ।
पितामही च स्वेनैव स्वेनैव प्रपितामही ॥

इति । एवमेव वस्वादिरूपेण मातामहादीनामपि श्राद्धदेवतात्वं तत्पत्नीनां च सहभावेन देवतात्वमवगन्तव्यं, 'मातामहानामप्येवम्' इति याज्ञवल्क्यादिभिरुक्तत्वात् । एवं निरू-

पितश्राद्धदेवताऽऽवाहने विशेषः पुराणे दर्शितः—

अपसव्यं ततः कृत्वा तिलानादाय संयतः ।
पितॄनावाहयामीति पृच्छेद्विप्रानुदङ्मुखान् ॥
आवाहयेत्यनुज्ञात उशन्तस्त्वेत्यृचा पितॄन् ।
ततः क्षिप्त्वाऽपसव्यं च पितॄन् ध्यायन् समाहितः ॥
जपेदायन्तु न इति मन्त्रं सम्यगशेषतः ।

इति । उशन्तस्त्वेत्यृचा पितॄनित्यादेरयमर्थः—उशन्तस्त्वेत्यृचा पितृपितामहप्रपितामहानावाह्य अनन्तरमप्रदक्षिणं पूर्वोपात्तांस्तिलान् 'नमो वः पितरः' इति मन्त्रेण शिरःप्रभृति पादान्तं क्षिप्त्वा पितॄन् ध्यायन् 'आयन्तु नः' इति मन्त्रं जपेदिति । तथा प्रचेताः—

शिरःप्रभृति पादान्तं नमो व इति पैतृके ।

पैतृके कर्मणि 'नमो वः पितरः' इति मन्त्रेण शिरःप्रभृति पादान्तमप्रदक्षिणं पुष्पतिलादिभिः पूजनं कुर्यादित्यर्थः । बैजवापेनाप्यावाहने विशेषो दर्शितः—"तिष्ठन् पितॄनावाहयिष्यामीत्यामन्त्र्योशन्तस्त्वेत्यनया यजमानस्य पितरं पितामहं प्रपितामहं नामभिरावाह्य 'आयन्तु नः पितरः" इति जप्त्वा' इति । नामभिः द्वितीयादिविभक्त्यन्तैः । तथा च श्लोकसङ्ग्रहकारः—

अक्षय्याऽऽसनयोष्षष्ठी द्वितीयावाहने तथा ।
अन्नदाने चतुर्थी स्याच्छेषास्सम्बुद्धयस्स्मृताः ॥

इति । एतासु षष्ठ्यादिविभक्तिषु सर्वत्र एकवचनबहुवचन योर्विकल्प एव स्मृतिपुराणगृह्यादिषु पितृपितामहप्रपितामहा दिशब्दानां क्वचिदेकवचनान्ततया क्वचिद्बहुवचनान्ततया च तत्र तत्र प्रयोगदर्शनात् । एवञ्चासनदानावाहनयोरेवं प्रयोगः— प्राचीनावीती उदङ्मुखतया प्रथमोपविष्टविप्रहस्ते जलं निनीय कुशासनयुग्मान्मध्यभङ्गतो द्विगुणीकृतान् सतिलान् गृहीत्वा दक्षिणामुख आसीनोऽस्मत्पितुर्वसुरूपस्यामुकगोत्रस्यामुकशर्मणस्सपत्नीकस्येदमासनं इति विप्रस्यासनस्य वामभागे पूर्वगृहीतान् सतिलान् कुशान् निक्षिप्य विप्रहस्ते पुनर्जलं निनयेत् । एवमनन्तरोपविष्टब्राह्मणहस्ते तदनन्तरोपविष्टब्राह्मणहस्ते च जलनिनयनादि पुनर्जलनिनयानान्तं कुर्यात् । पितामहस्य रुद्ररूपस्य प्रपितामहस्यादित्यरूपस्येति विशेषः—एवमेव मातामहस्थानस्थविप्रत्रयहस्तेषु जलदानादि कुर्यात् । मातामहस्य वसुरूपस्य मातुःपितामहस्य रुद्ररूपस्य मातुःप्रपितामहस्यादित्यरूपस्येति विशेषः । एवं षट्सु विप्रेषु पदार्थानुसमयेनासनं दत्वाऽनन्तरं प्रतिविप्रं निमन्त्रणं पूर्वप्रकरणोक्तप्रकारेण कुर्यात् । दैवे क्षणः क्रियतामित्यादिवाक्यस्थदैवपदस्थाने श्राद्धे इति सप्तम्यन्तपदं षट्सु विप्रेषु प्रयोक्तव्यम् । ओं तथेत्यादिकं तु पूर्वप्रकरणोक्तप्रकारेणैव प्रयोक्तव्यम् । षष्ठं विप्रं निमन्त्र्याथ तिलानादाय प्राचीनावीती दक्षिणाभिमुखस्तिष्ठन्नस्मत्पितृपितामहप्रपितामहान् वसुरुद्रादित्यरूपान् आ-

वाहयिष्ये इत्युदङ्मुखतयाऽऽसीनान् ब्राह्मणान् पृष्ट्वा आवाहयेत्तैरनुज्ञातः 'उशन्तस्त्वा हवामहे' इत्यृचमुक्त्वा ऋगन्तेऽस्मत्पितरं वसुरूपममुकगोत्रममुकशर्माणं सपत्नीकं अस्मत्पितामहं रुद्ररूपममुकगोत्रममुकशर्माणं सपत्नीकं अस्मत्प्रपितामहमादित्यरूपममुकगोत्रममुकशर्माणं सपत्नीकमावाहयामीति प्रथमे विप्रे पितरं, द्वितीये पितामहं, तृतीये प्रपितामहं, आवाह्य 'नमो वः पितरः' इति मन्त्रेण शिरसि सव्यांसे दक्षिणांसे सव्यजानुनि दक्षिणजानुनि सव्यपादे दक्षिणपादे च प्रतिविप्रं तिलानारोप्य प्रथमे विप्रे पितरं वसुरूपं सपत्नीकं, द्वितीये पितामहं रुद्ररूपं सपत्नीकं, तृतीये प्रपितामहमादित्यरूपं सपत्नीकं ध्यायन् 'आयन्तु नः पितरः' इत्यादिकामृचं सकृज्जपेत् । एवं मातामहाद्यावाहनं कुर्यात् । तत्रायं विशेषः—अस्मन्मातामहमातुःपितामहमातुःप्रपितामहान् वसुरुद्रादित्यरूपानावाहयिष्ये इति मातामहादिस्थानस्थान् विप्रान् पृच्छेत् । उशन्तस्त्वेति मन्त्रान्ते मातामहं वसुरूपं अमुकगोत्रममुकशर्माणं सपत्नीकं, एवं मातुःपितामहं सपत्नीकं रुद्ररूपममुकगोत्रममुकशर्माणं, एवं मातुःप्रपितामहमादित्यरूपममुकगोत्रममुकशर्माणं सपत्नीकं आवाहयामीति प्रथमे विप्रे मातामहं, द्वितीये मातुःपितामहं, तृतीये मातुःप्रपितामहं आवाह्य प्रतिविप्रमेकैकं ध्यायन् 'आयन्तु नः' इति जपेत् । 'उशन्तस्त्वा, आयन्तु नः' इति मन्त्रद्वयगतपितृशब्दस्थाने मातामहशब्दः न प्रयोक्तव्यः ।

'न पिता वर्धते' इति श्रुत्या जनकैकनिष्ठपितृशब्दव्यतिरिक्तपितृशब्दोहप्रतिषेधात् । 'आयन्तु नः पितरः' इति जपानन्तरं कर्तव्यमुक्तं पुराणे—

जपेदायन्तु न इति मन्त्रं सम्यगशेषतः ।
रक्षार्थं पितृसत्रस्य त्रिःकृत्वस्सर्वतोदिशम् ।
तिलांस्तु प्रक्षिपेन्मन्त्रैरुच्चार्यापहता इति ॥

'अपहता असुरा रक्षाꣳसि पिशाचा ये क्षयन्ति पृथिवीमनु । अन्यत्रेतो गच्छन्तु यत्रैषां गतं मनः' इति मन्त्रमुच्चार्य सर्वतोदिशं ब्राह्मणान् परितस्त्रिवारमप्रदक्षिणं तिलान् प्रक्षिपेदित्यर्थः । पितृसत्रं पितृयागः, श्राद्धमिति यावत् ॥

इति स्मृतिचन्द्रिकायां पैतृकार्चनविधावावाहनान्तोपचारविधिः.

---

## अथार्घ्याद्युपचारविधिः.

तत्र पुराणं—

सौवर्णराजताम्भोजमणिपात्राण्यथापि वा ।
अर्घ्यार्थं संस्करोत्येव शुभपत्रपुटादि वा ॥

अर्घ्यार्थे अर्घ्योदकस्थापनार्थं दर्भेष्वासादनप्रोक्षणाभ्यां सौवर्णादिषु यथालाभमन्यतमानि पात्राणि संस्कुर्यादेवेत्यर्थः । पत्रपुटादीत्यादिशब्देन चमसादिकं गृह्यते । अत एव विष्णुः—

'दक्षिणाग्रेषु दर्भेषु चमसेषु दक्षिणापवर्गेषु त्रिषु पवित्रान्तर्हितेषु अप आसिञ्चेत् । शं नो देवीरभिष्टये' इति । दक्षिणाग्रेषु दर्भेषु दक्षिणापवर्गतयाऽऽसादितेषु चमसाद्यर्घ्यपात्रेषु त्रिषु पवित्रान्तर्हितेषु शं नो देवीरिति मन्त्रेण प्रतिपात्रमपो निनयेदित्यर्थः । प्रचेता अपि—'यज्ञियवृक्षचमसेषु पवित्रान्तर्हितेष्वेकैकस्मिन् अप आसिञ्चेत्' इति । शौनकोपि—"तैजसाश्ममयमृन्मयेषु पात्रेष्वेकद्रव्येष्वनेकद्रव्येषु वा दर्भान्तर्हितेष्वपः प्रदाय शं नो देवीरभिष्टये इत्यनुमन्त्रितान् तिलानावपति—

तिलोसि पितृदेवत्यो गोसवो देवनिर्मितः ।
प्रत्नवद्भिः पृक्तस्स्वधया पितॄनिमान् लोकान् प्री-
णयाहि नः स्वधा नमः" ॥

इति । तैजसं कांस्यादिमयम् । अश्ममयं मरकतादिमणिमयम् । एकद्रव्येषु कांस्यराजतताम्रादीनामन्यतमेषु । अनेकद्रव्येषु कांस्यादिनानाद्रव्यमयेषु वा । दर्भान्तर्हितेषु पवित्रान्तर्हितेषु । शं नो देवीरिति मन्त्रेणापो निनीयानुमन्त्रितासु पूर्वोक्तमन्त्रेण नीतास्वप्सु तिलोसीति मन्त्रेण तिलान् प्रक्षिपेदित्यर्थः । पात्रेष्विति बहुवचनं त्रिष्वेवावतिष्ठते, प्रकृतिभूते त्रिदेवताके श्राद्धे प्रतिदैवतमेकैकपात्रविधिपरत्वात् । अत एव प्रचेतसा—'त्रीण्येवोदपात्राणि' इत्युक्तम् । पित्रादीनां त्रयाणामेकैकस्यानेकब्राह्मणनियोजने सर्वेषामेकब्राह्मणनियोजनेऽपि श्राद्धस्य त्रिदेवताकत्वात्त्रीण्येवोदपात्राणि न तु ब्राह्मणसंख्यया सङ्ख्या

तानीत्यर्थः। अत एव तिलैस्तथेत्यधिकृत्य बैजावापेनोक्तं—

नीत्वा पितॄणां त्रीण्येव कुर्यात् पात्राणि धर्मवित्।
एकस्मिन्वा बहुषु वा ब्राह्मणेषु यथाविधि॥

इति। तिलैर्नीत्वा तिलानर्घ्योदकेषु प्रक्षिपेदित्यर्थः। अर्घ्योदकसंस्कारार्थं पवित्रकरणप्रकारमाह स एव—

कुशौ समावशीर्णाग्रावनन्तर्गर्भकौ कुशैः।
छिनत्ति तत्पवित्रं स्याच्छ्राद्धे कर्मणि सर्वदा॥

इति। कुशाविति युग्मसङ्ख्या वैश्वदैविकार्घ्यपात्रपवित्रविषया। पैतृकार्घ्यपात्रपवित्रविषये अनुचितत्वात्। अत एव चतुर्विंशतिमते पैतृकार्घ्यपवित्रे अयुग्मसङ्ख्या दर्शिता—

तिस्रस्तिस्रःश्शलाकास्तु पितृपात्रेषु पार्वणे।

इति। शलाकाः शलाकासन्निभा दर्भाः, अच्छिन्नाग्रा इति यावत्। अर्घ्यपात्रेषु तिलप्रक्षेपानन्तरं ब्रह्मपुराणे कर्तव्यमुक्तं—

अर्घ्याः पुष्पैश्च गन्धैश्च ताः प्रपूज्याश्च शास्त्रवत्।

इति। अर्घ्या अर्घ्यार्था या आपः तिलमिश्रास्ताः गन्धैः पुष्पैश्च प्रपूज्याः। तासु गन्धपुष्पाणि प्रक्षिपेदित्यर्थः। गन्धादिप्रक्षेपानन्तरं शौनकः—'ताः प्रतिग्राहयिष्यंश्च स्वधार्घ्याः' इति। ताः अर्घ्यार्था अपः ब्राह्मणैः प्रतिग्राहयिष्यन् स्वधार्घ्या इति मन्त्रेण ब्राह्मणानां पुरस्स्थापयेदित्यर्थः। स्थापनानन्तरं पैठीनसिः—'ततो ब्राह्मणहस्तेषूदकपूर्वं दर्भान् प्रदायोदकपूर्वमर्घ्योदकं ददाति या दिव्या आपः इत्यृचैतत्ते

अर्घ्योदकमिसप उपस्पृशेदित्यत्रमेवेतरयोः' इति । अर्घ्यस्थापनानन्तरं ब्राह्मणहस्तेषु प्रथममपो निनीयार्घ्यपवित्रदर्भान् दक्षिणाग्रतया क्षिप्त्वा पुनरपो निनीय 'या दिव्या आपः' इति मन्त्रमुक्त्वा मन्त्रान्ते अस्मत्पितरमुकगोत्र अमुकशर्मन् वसुरूप सपत्नीकैतत्ते अर्घ्योदकमिति दक्षिणहस्ते पितृतीर्थेनार्घ्यं दत्वाऽप उपस्पृशेत् । एवमेवेतरयोः पितामहप्रपितामहयोरपि ब्राह्मणहस्ते अर्घ्यं दद्यादित्यर्थः । अस्मत्पितामह अमुकगोत्र अमुकशर्मन् रुद्ररूप सपत्नीक, अस्मत्प्रपितामहादित्यरूपेति तु विशेषः । कात्यायनेन 'या दिव्या आपः' इति मन्त्रं कृत्स्नं पठित्वाऽर्घ्यसमर्पणमुक्तम्—"सपवित्रेषु हस्तेषु—'या दिव्या आपः पयसा संबभूवुः या अन्तरिक्ष उत पार्थिवीर्याः । हिरण्यवर्णा यज्ञियास्ता न आपश्शंस्योना सुहवा भवन्तु' इति । पितस्ते अर्घ्यं पितामहैतत्ते अर्घ्यं प्रपितामहैतत्ते अर्घ्यमिति ब्राह्मणाञ्जलिषु पात्राणि निनीय पितृभ्योऽक्षय्यमस्त्विति शेषं दर्भेष्ववनेजयति इति" पात्राणि पात्रस्थोदकानीत्यर्थः । धर्मेण गोत्रग्रहणं च कार्यमित्युक्तम्—"'या दिव्या आपः' इति पात्रं पाणिभ्यामुद्धृत्य नाम गोत्रं च गृहीत्वा सपवित्रे हस्तेऽर्घ्यं दद्यात्" इति । पाणिभ्यामुद्धृतेन पात्रेण दद्यादिति गम्यते । प्रचेता अपि—

अप्रदक्षिणमेतेषामेकैकं तु पितृक्रमात् ।
सम्बोध्य गोत्रनामभ्यामेष तेऽर्घ्यमितीरयेत् ॥

एतेषां पितृपितामहप्रपितामहानां पितृक्रमात् पित्रादिक्रमादेकैकं गोत्रनामभ्यां सम्बोध्य एष तेऽर्घ्यमित्युक्त्वा एकैकं ब्राह्मणमेकैकेनार्घ्येणार्चयेदित्यर्थः। तथा चाह गौतमः—

पूर्ववत्पृथगेकैकमेकैकेनार्चयेत्क्रमात्।

इति। एतत् 'त्रीन् पित्र्ये' इत्युक्तब्राह्मणसङ्ख्यापक्षाभिप्रायेणोक्तम्। 'त्रीन् त्रीन्' इत्युक्तब्राह्मणसङ्ख्यपक्षे तु त्रीन् ब्राह्मणानेकैकेनार्घ्येणार्चयेत्। अत एव पैठीनसिना हस्तेष्वित्याद्युक्तम्। न च वाच्यं 'त्रीन् पित्र्ये' इति पक्ष एव हस्तेष्वित्युपपद्यते, त्रिषु पितृवर्गब्राह्मणेषु दक्षिणहस्तत्रयसम्भवादिति। यतस्तेन पितृस्थानस्थब्राह्मणार्चन एव हस्तेष्वित्युक्त्वा एवमितरयोरित्यभिधानात्। तस्मात्त्रीन् त्रीन् पित्र्ये इति पक्षे पितृस्थानस्थब्राह्मणदक्षिणहस्तेष्वपामासेचनाद्यर्घ्यनिनयनान्तं सकृत्कुर्यात्। तथा पितामहस्थानस्थब्राह्मणहस्तेषु चैवं निनयेत्, एवमितरयोरित्यभिधानात्। एवं मातामहादीनामर्घ्यपात्रासादनादि ब्राह्मणहस्तेष्वर्घ्यदानान्तं यथोक्तं नामगोत्रसहितं पदार्थानुसमयेन कुर्यात्, 'मातामहानामप्येवम्' इत्यतिदेशस्मरणात्। पित्रादिब्राह्मणहस्तेष्वर्घ्यदानानन्तरं याज्ञवल्क्यः—

दत्वाऽर्घ्यं संस्रवांस्तेषां पात्रे कृत्वा विधानतः।
पितृभ्यस्स्थानमसीति न्युब्जं पात्रं करोत्यधः॥

तेषां प्रतिविप्रं दत्तानां अर्घ्याणां संस्रवान् विप्रहस्तेभ्यः अन्येषु पात्रेषु गलितान् पितृपात्रे सम्भृत्य तत्पात्रं 'पितृभ्यः

स्थानमसि' इति मन्त्रेण न्युब्जमधोबिलं अधःकरोति भूम्यां निदध्यात् न पात्रादेरुपरीत्यर्थः । तथाच प्रचेताः—

प्रथमे पितृपात्रे तु सर्वान् सम्भृत्य संस्रवान् ।
पितृभ्यस्स्थानमसीत्युक्त्वा कुर्याद्भूमावधोमुखम् ॥

अत्र गोभिलेनोक्तो विशेषः 'न्युब्जं कुर्यात्पवित्रवत्' इति । ब्राह्मणहस्तेषु निक्षिप्तानि पवित्राण्यादाय पितृपात्रे निधाय तैस्सह भूमौ न्युब्जं कुर्यादित्यर्थः । कात्यायनेनात्र विशेष उक्तः—'कुशवत्यां भूमौ अधोमुखं कुर्यात्तस्योपरि च कुशम्' इति । निदध्यादिति शेषः । मत्स्येनापि—'दत्वा संस्रवमादितः । पितृपात्रे निधायाथ न्युब्जमुत्तरतो न्यसेत्' इति । आदितः प्रथममर्घ्यं दत्वा पितृपात्रे संस्रवं निधाय तत्पात्रं ब्राह्मणाध्यासितदेशादुत्तरतः किञ्चिद्दूरे अधोमुखं निदध्यादित्यर्थः । अत्रिणाऽपि पितृपात्रं प्रकृत्य विशेष उक्तः—'गन्धादिभिस्तदभ्यर्च्य' इति । आदिशब्देन पुष्पाणि गृह्यन्ते । 'गन्धमाल्यैस्तदभ्यर्च्य' इति शौनकस्मरणात् । एवं न्युब्जकरणमनित्यं,

अपसव्यं ततः कृत्वा पिण्डपार्श्वे समाहितः ।
क्षिप्त्वा दर्भपवित्राणि[1] मोचयेत्संस्रवांस्ततः ॥

इत्यत्रिवचने स्वधावाचनकालपर्यन्तं संस्रवोदकधारणदर्शनात् । धारणं च पितृपात्रस्योत्तानतया स्थपने सति भवति न तु न्युब्जतया स्थापने । तस्मादुत्तानतया स्थापनपक्षोपि गम्यते ।

[1] क्षिप्त्वाऽथ दर्भपत्राणि. इति पाठान्तरम्.

अस्मिन् पक्षे पितृपात्रस्य पितामहादिपात्रेणापिधानं कार्यम् । तथाच कात्यायनः—

पैतृकं प्रथमं पात्रं तस्मिन् पैतामहं न्यसेत् ।
प्रपितामहं ततो न्यस्य नोद्धरेन्न च चालयेत् ॥

पितृपात्रं पितामहपात्रेऽपिधाय प्रपितामहपात्रेण पिदध्यादित्यर्थः। (प्रपितामहपात्राभावेऽन्येन केनचित्पात्रेण पिदध्यादित्यर्थः।) अधोमुखतया उत्तानतया वा न्यस्तस्य पात्रस्यान्यथाकरणे कात्यायनेन दोषो दर्शितः—

स्पृष्टमुद्धृतमन्यत्र नीतमुद्घाटितं तथा ।
पात्रं दृष्ट्वा व्रजन्त्याशु पितरः प्रस्रवन्ति च ॥

उद्घाटितं पिधायकपितामहादिपात्रापसारणेन विवृतमित्यर्थः। अत एवोशना—

उत्तानं विवृतं वाऽपि पितृपात्रं यदा भवेत् ।
अभोज्यं तद्भवेदन्नं क्रुद्धैः पितृगणैर्गतैः ॥

इति । न्युब्जं कृतं पितृपात्रं यदोत्तानं भवेत् । उत्तानतया स्थापितं पात्रान्तरेण पिहितं पितृपात्रं यदा वा विवृतं भवेदिति पूर्वार्धस्यार्थः । न्युब्जं पात्रं कृत्वाऽऽह बैजवापः—

तस्योपरि कुशान् दत्वा प्रदद्याद्देवपूर्वकम् ।
गन्धपुष्पाणि धूपं च दीपं वस्त्रोपवीतके ॥

तस्योपरि कुशान् दत्वा तस्य न्युब्जकृतपितृपात्रस्योपरि कुशगन्धपुष्पाणि दत्वा वैश्वदैविकब्राह्मणपूर्वकं गन्धादि दद्या-

दित्यर्थः । अनेन गन्धदानं वैश्वदैविकब्राह्मणेषु कृत्वा पैतृकब्राह्मणेषु कार्यमित्युच्यते । एवमेव पुष्पदानाद्यपि । ततश्च वैश्वदैविकब्राह्मणार्चनं च पदार्थानुसमयेन सहैव कार्यमिति वचोभङ्ग्याऽभिहितम् । एवञ्च वैश्वदैवे याज्ञवल्क्येन काण्डानुरूपसमयक्रम उक्तः, तेन सह अनेनोक्तपदार्थानुसमयरूपक्रमस्य विकल्पो वेदितव्यः । न चायं विकल्पो गन्धदानप्रभृत्येव न पुनः प्रागपीति वाच्यं, अर्धवैशसापत्तेः, 'देवांश्च पितॄंश्चावाहयिष्ये इत्यनुज्ञाप्य' इत्यादिना गन्धादिदानात्प्रागेव सहानुष्ठानस्य पैठीनसिना स्मृतत्वाच्च । विष्णुनाऽपि गन्धादिदानमुक्तं—'अनुलेपनवस्त्रालङ्करणपुष्पधूपैर्यथाशक्ति विप्रान् समभ्यर्च्य' इति । अनुलेपनादीनि पित्रादिदेवतोद्देशेन विप्रेभ्यो दद्यादित्यर्थः । अत एव पैठीनसिः—'गन्धान् पितृगोत्रनाम गृहीत्वाऽपःस्पृशेदेवमितरयोर्धूपदीपमाल्याच्छादनमेवम्' इति । पित्रर्थब्राह्मणहस्तेऽपो निनीय गन्धान् चन्दनकुङ्कुमकर्पूरादीनादाय अस्मत्पितरोऽमुकगोत्रा अमुकशर्माणो वसुरुद्रादित्यरूपास्सपत्नीका अमी वो गन्धा इति ब्राह्मणहस्त एव गन्धान् दत्वा उदकं स्पृशेत् । एवमेवेतरयोः पितामहप्रपितामहयोर्गन्धसमर्पणम् । रुद्ररूपेति पितामहे, प्रपितामहे आदित्यरूपेति विशेषः । पुष्पधूपदीपमाल्याच्छादनादिदानं चैवं गन्धदानवदेव कार्यमित्यर्थः । तथाच ब्रह्मपुराणं—

इदं वः पुष्पमित्युक्त्वा पुष्पाणि च निवेदयेत् ।

अयं वो धूप इत्युक्त्वा धूपं सौम्यं निवेदयेत् ॥

इदं वो माल्यमित्युक्त्वा दद्यान्माल्यं सुशोभनम् ।

इति । एवमनया रीत्या इदं वो ज्योतिरित्युक्त्वा दीपं निवेदयेत् । इदं व आच्छादनमित्युक्त्वा वस्त्रं निवेदयेदित्यादि स्वयमेवोह्यम् । अत एवोहप्रकारप्रदर्शनार्थं देवलेनोक्तं—

इदं ज्योतिरिति ज्योतिः सुज्योतिरिति तेऽपि च ।

इति । इदं वो ज्योतिरिति ज्योतिर्निवेदयेत् । सुज्योतिरिति ते विप्रा ब्रूयुरित्यर्थः । 'सुज्योतिरिति तेऽपि च' इति चशब्दात् स्वासनमस्तु स्वर्घ्यं सुगन्धाः सुपुष्पाणि सुधूपः सुदीपः स्वाच्छादनमित्यासनादिषु यथालिङ्गं प्रतिवचनानि विप्रा ब्रूयुरिति सूचितमिति मन्तव्यम् । अत एव गृह्यसङ्ग्रहकारेणैतानि प्रतिवचनान्युक्तानि । कीदृशा गन्धा देया इत्यपेक्षिते ब्रह्मपुराणं—

श्वेतचन्दनकर्पूरकुङ्कुमानि शुभानि तु ।

विलेपनार्थं दद्यात्तु यच्चान्यत्पितृवल्लभम् ॥

इति । लेपनं च विप्राः स्वयं कुर्युः श्राद्धकर्ता वा । तत्र श्राद्धकर्त्रा विलेपनपक्षे विशेषमाह व्यासः—

विपवित्रकरो गन्धैर्गन्धद्वारेति पूजयेत् ।

इति । गन्धद्वारेति मन्त्रेण तदन्ते नामगोत्रग्रहणपूर्वकं अमी वो गन्धा इत्युक्त्वा ब्राह्मणहस्ते गन्धान् प्रदाय तैर्गन्धैः पूजयेत् । विपवित्रकरो विप्रललाटे गन्धं विलेपयेदित्यर्थः ।

स्वयं विलेपनपक्षेऽपि गन्धद्वारेति मन्त्रोऽस्ति, गन्धदाने करणमन्त्रत्वात्। विपवित्रकरत्वलक्षणधर्म एव न विद्यते। अत एव श्राद्धकर्त्रा विलेपनपक्ष एव सपवित्रकरेण विलेपने कृते वृद्धशातातपेन दोषो दर्शितः—

पवित्रं तु करे कृत्वा यस्समालभते द्विजान्।
राक्षसानां भवेच्छ्राद्धं निराशाः पितरो गताः॥

समालम्भनं गन्धैर्विलेपनम्। पक्षद्वयसाधारणदोषो देवलेन दर्शितः—

यज्ञोपवीतं विप्राणां स्कन्धान्नैवावतारयेत्।
गन्धादिपूजासिद्ध्यर्थं दैवे पित्र्ये च कर्मणि॥

विप्राणां यज्ञोपवीतं गन्धाद्यनुलेपनसिद्ध्यर्थमनुलेपको नावतारयेदित्यर्थः। स्कन्धादवतार्यानुलेपने कृते शङ्खेन दोष उक्तः—

उपवीतं कटौ कृत्वा कुर्याद्गात्रानुलेपनम्।
एकवासाश्च योऽश्नीयात् निराशाः पितरो गताः॥

क्रतुना तु ललाटे वर्तुलतया पुण्ड्रे कृते दोष उक्तः—

ललाटे पुण्ड्रकं दृष्ट्वा स्कन्धे मालां तथैव च।
निराशाः पितरो यान्ति दृष्ट्वा तु वृषलीपतिम्॥

इति दोषस्मार्तवचनेन कल्प्यस्य निषेधस्य कल्पसूत्रोर्ध्वपुण्ड्रविधिबाधेन कल्प्यत्वाद्वर्तुलपुण्ड्रविषयमेतत्। स्कन्धे मालाधारणे दोष

स्मरणात् शिरस्थेन विप्रेण माला धार्या। तत्रापि शिखायामेव—

न नियुक्तशिखावर्जं मालां शिरसि वेष्टयेत्।

इति वृद्धमनुस्मरणात्। नियुक्तः श्राद्धे निमन्त्रितो विप्रः। माल्यं च विहितपुष्पमयं देयम्। कानि पुनर्विहितानि पुष्पाणीत्यपेक्षिते ब्रह्मपुराणे—

शुक्लास्सुमनसश्श्रेष्ठाः तथा पद्मोत्पलानि च।
गन्धरूपोपपन्नानि यानि चान्यानि कृत्स्नशः॥

इति। विष्णुस्तु पुष्पदाने मन्त्रमाह 'पुष्पावतीरिति पुष्पम्' इति। दद्यादिति पूर्ववाक्यश्रुतमिहानुषज्यते।

ओषधयः प्रतिमोदध्वं पुष्पावतीस्सुपिप्पलाः।
अयं वो गर्भऋत्वियः प्रत्नं सधस्थमासदत्॥

इति मन्त्रस्य मध्यमप्रतीकोपादानमेतत् पुष्पावतीरिति। मन्त्रान्ते नामगोत्रग्रहणपूर्वकमिदं वः पुष्पमिति पुष्पं देयम्। धूपद्रव्ये विशेषश्शङ्खेनोक्तः—

धूपार्थे गुग्गुलं दद्यात् घृतयुक्तं मधूत्कटम्।

इति। व्यासस्तु धूपदाने मन्त्रमाह—'धूपं च धूरसीत्युक्त्वा' इति। 'धूरसि धूर्व धूर्वन्तम्' इति यजुर्वेदमन्त्रमुक्त्वा धूपं दद्यादित्यर्थः। पुराणे तु मन्त्रान्तरमुक्तं—

वनस्पतिरसो दिव्यो गन्धाढ्यस्सुमनोहरः।
आघ्रेयस्सर्वदेवानां धूपोऽयं प्रतिगृह्यताम्॥

इति। धूरसीत्यनेन सहास्य विकल्पो वेदितव्यः। अत्रापि मन्त्रान्ते नामगोत्रग्रहणपूर्वकमयं वो धूप इति धूपो देयः। हस्तवात-प्रापितो धूपो न विप्रेण सेव्यः तस्य निषेधात्। शातातपः—

हस्तवाताहतं धूपं ये पिबन्ति द्विजोत्तमाः।
वृथा भवति तच्छ्राद्धं तस्मात्तं परिवर्जयेत्॥

दीपे तु विशेषमाह मरीचिः—

घृताद्वा तिलतैलाद्वा नान्यद्रव्यात्तु दीपकम्।

इति। आच्छादने मन्त्रमाच्छादनाभावे तत्प्रतिनिधिं चाह शातातपः—'युवा सुवासा इति वस्त्रं दद्यात्तदभावे यज्ञोपवीतम्' इति। अत्रापि मन्त्रान्ते नामगोत्रग्रहणपूर्वकं इदं व आच्छादनमिदं वो यज्ञोपवीतमिति वा उक्त्वा आच्छादनं यज्ञोपवीतं वा देयम्। अन्यान्यपि ग्राह्यवर्जनीयगन्धपुष्पधूपदीपाच्छादनविषयाणि स्मृत्यन्तरवचनानि सन्ति, तानि चा[illegible]भिः श्राद्धाङ्गद्रव्योपकल्पनप्रकरणे लिखितानीहाप्यनुसन्धे[illegible]। एवं मातामहादीनामपि गन्धपुष्पादिदानं नामगोत्र[illegible]तं पदार्थानुसमयेन कार्यं, 'मातामहानामप्येवम्' इत्यतिदेश-स्मरणात्। मातुःप्रपितामहाच्छादनानन्तरं अर्चनं पूर्णमस्त्विति कर्ता ब्रूयात्। अस्त्विति विप्रा ब्रूयुः। संकल्पसिद्धिरस्त्विति भवन्तो ब्रुवन्त्विति कर्ता वदेत्। अस्तु सङ्कल्पसिद्धिरिति विप्रा वदेयुः॥

इति स्मृतिचन्द्रिकायां अर्घ्याद्युपचारविधिः.

---

## अथाग्नौकरणविधिः.

तत्र कात्यायनः—

गन्धान् ब्राह्मणसात्कृत्वा पुष्पाण्यृतुभवानि च ।
धूपं चैवानुपूर्वेण अग्नौ कुर्यादतःपरम् ॥

ऋतुभवानि पुष्पाणि स्वोद्भवकालत्वेन प्रसिद्धवसन्तादिकालप्रभवानि । चशब्दोऽनुक्तसमुच्चयार्थः । एवञ्चायमर्थः—गन्धपुष्पालङ्कारधूपाच्छादनानि ब्राह्मणार्थानि कृत्वाऽनन्तरमग्नौकरणाख्यं कर्म कुर्यादिति । कथं कुर्यादित्यपेक्षिते हारीतः—'अथोद्धृतान्नः पङ्क्तिमूर्धनि सर्वान् पृच्छत्यग्नौ करिष्ये' इति । निगमोपि—'अन्नमुद्धृत्याभिघार्याग्नौ करिष्य इति पृच्छति' । इति । विष्णुपुराणेऽपि—

अग्नौ करिष्य इत्युक्ता तैरुक्तः क्रियतामिति ।
गृह्योक्तेनैव विधिना हुत्वा पात्रेषु दापयेत् ॥

हुत्वा हुतशेषं पितृब्राह्मणभाजनेषु दद्यादित्यर्थः । गृह्योक्तेनैवेत्येवकारो न धर्मशास्त्राद्युक्तविधिनिवृत्त्यर्थः, धर्मशास्त्रोक्तविधेर्गृह्योक्तविधेश्च परस्परापेक्षत्वात् । तेनात्रैवकारः पुराणोक्तविधिनिवृत्त्यर्थः । अत एव गृह्योक्तविधानेनाग्नौकरणं कार्यमित्यभिधाय तस्मिन्नेव पुराणे गृह्येष्वनुक्तो विधिर्दर्शितः—

जुहुयाद्व्यञ्जनक्षारवर्जमन्नं ततो नरः ।
अनुज्ञातो द्विजैस्तैस्तु त्रिःकृत्वो भरतर्षभ ॥

इति । व्यञ्जनक्षारवर्जमन्नं हविष्यमन्नमित्यर्थः । यत्तु पुराणान्तरे—

पुष्पाणां च फलानां च भक्ष्याणां च प्रयत्नतः ।
अग्रमुद्धृत्य सर्वेषां जुहुयाज्जातवेदसि ॥

इति पित्रर्थपाकसिद्धलवणादिसंस्पृष्टाहविष्यहोमस्मरणं तद्येषां गृह्येऽग्नौकरणहोमानन्तरं अहविष्यहोमान्तरममन्त्रकं कार्यमिति विधीयते तद्विषयम् । अतो न पूर्वोक्तविरोधः । जातवेदसि उष्णभस्मगताग्नावित्यर्थः । तथाचापस्तम्बेनाग्नौकरणाङ्गतयोक्तं 'न क्षारलवणहोमो विद्यते तथाऽवरान्नसंसृष्टस्याहविष्यस्य होमः। उदीचीनमुष्णं भस्मापोह्य तस्मिन् जुहुयात्तद्धुतमहुतं चाग्नौ भवति' इति । पारस्करोप्यग्नौकरणमाह—

दत्वा गन्धादि धूपांश्च सर्पिष्मद्वाविरुद्धरेत् ।
पैतृकैरभ्यनुज्ञातो जुहोति पितृयज्ञवत् ॥

इति । पैतृकैर्ब्राह्मणैरिति शेषः—

अग्नौ कुर्यादनुज्ञातो ब्राह्मणो ब्राह्मणैस्सह ।

इति मनुस्मरणात् । ब्राह्मणैः पैतृकैस्सर्वैस्सह युगपदनुज्ञात इत्यर्थः । पितृयज्ञवज्जुहोतीत्यस्यार्थो हारीतेन प्रपञ्चितः—'कुरुष्वेत्यनुज्ञातः पूर्वोद्धृतेऽग्नौ सकृदाच्छिन्नैरुपमूललूनैः परिस्तीर्णे समित्तन्त्रेण प्राङ्मुखो मेक्षणेनाहुतिद्वयं हुत्वा मेक्षणमग्नावेव कुर्यात्' इति । पूर्वोद्धृतेऽग्नौ परिस्तरणात्पूर्वमेवोद्बोधितेऽग्नौ मूलसमीपप्रदेशे सकृदेकयत्नेन छिन्नैर्दर्भैः परिस्तीर्णे समित्तन्त्रेण

प्राङ्मुखो मेक्षणेन आहुतिद्वयार्थमेकामेव समिधमादाय मेक्ष णेन यज्ञियकाष्ठकृतेन आहुतिद्वयं हुत्वा अग्नावेव मेक्षणं प्रक्षिपेदित्यर्थः । समित्तन्त्रेणेत्यनेन न पितृयज्ञधर्म उक्तः, पितृयज्ञे समिदाधानस्याभावात् । किंत्विह धर्मान्तरमुपादिष्टम् । तेन सुयज्ञोप्युपादिष्टधर्माभ्यां सहातिदिष्टधर्मानाह—'परिसमूह्य पर्युक्ष्य परिस्तीर्य दक्षिणं जान्वाच्य यज्ञोपवीती प्राङासीनो मेक्षणेन जुहोति' इति । अत्र परिसमूहनपर्युक्षणे उपदिष्टे । 'जुहुयात्पितृयज्ञवत्' इत्यतिदेशतः प्राप्तौ होममन्त्रौ मदालसया दर्शितौ—

अग्नये कव्यवाहनाय स्वाहेति प्रथमाहुतिः ।
सोमाय वै पितृमते स्वाहेत्यन्या तथा भवेत् ॥

वैशब्दः पादपूरणार्थत्वात्स प्रयोगकाले न प्रयोज्यः । गोबिलने तु विपरीतक्रमेण पुरस्तात्स्वाहाकारौ होममन्त्रौ अग्नौकरणमधिकृत्योक्तौ—'मेक्षणेनोपघातं जुहुयात्स्वाहा सोमाय पितृमते इति प्रथमां, स्वाहाऽग्नये कव्यवाहनायेति द्वितीयां, अत ऊर्ध्वं प्राचीनावीती' इति । होमानन्तरं प्राचीनावीतीत्यभिधानादर्थाद्धोमे यज्ञोपवीतीत्येवेति गम्यते । मेक्षणेनोपघातं मेक्षणेनावदाय जुहोतीत्यर्थः । पुराणे त्वाहुतित्रयपक्षः स्वधानमोन्तैर्मन्त्रैरुक्तः—

अन्तर्निधाय समिधं जुहुयाज्जातवेदसि ।
अग्नये कव्यवाहनाय स्वधा नम इति ब्रुवन् ॥

सोमाय च पितृमते स्वधा नम इति ब्रुवन् ।
यमायाङ्गिरसां पत्ये स्वधा नम इति ब्रुवन् ॥
इत्येते होममन्त्रास्तु त्रयाणामनुपूर्वशः ।
उत्तरतोऽग्नये नित्यं सोमायेति च दक्षिणे ।
एतयोरन्तरे नित्यं जुहुयाद्वै विवस्वतः ॥

इति । अत्र निधेयायास्समिधो ग्राह्याग्राह्यत्वनिरूपणार्थमुक्तं तत्रैव—

पलाशफल्गुन्यग्रोधप्लक्षाश्वत्थविकङ्कताः ।
उदुम्बरशमीबिल्वचन्दना याज्ञियाश्च ये ॥
पनसो देवदारुश्च सालश्चखदिरस्तथा ।
समिदर्थे प्रशस्तास्स्युरेते वृक्षा विशेषतः ॥
ग्राह्याः कण्टकिनश्चैव यज्ञिया ये च केचन ।
श्लेष्मातको नक्तमालः कपित्थः शाल्मलिस्तथा ॥
नीपो विभीतकश्चैव श्राद्धकर्मणि गर्हिताः ।
चिरिबिल्वस्तथा टङ्कस्तिन्दुकाम्रातकौ तथा ॥
तिल्वकः कोविदारश्च एते श्राद्धविगर्हिताः ।

फल्गुः काकोदुम्बरिका । एवमुक्ताहुतिसंख्याविकल्पो व्यपदेशादेव सिद्धः । प्रकृतौ पिण्डपितृयज्ञे पक्षद्वयमप्युक्तम् । तथाऽऽपस्तम्बः पिण्डपितृयज्ञमधिकृत्याह— 'अध्वर्युरुपवीती दक्षिणं जान्वाच्य मेक्षणे उपस्तीर्य तेनावदायाभिघार्य सोमाय पितृपीताय स्वधा नम इति दक्षिणाग्नौ जुहोति ।

यमायाङ्गिरस्वते पितृमते स्वधा नम इति द्वितीयां, अग्नये कव्यवाहनाय स्वधा नम इति तृतीयां. ये मेक्षणे तण्डुलास्तान् हुत्वा तूष्णीं मेक्षणमादधाति न यमाय जुहोती त्येके' इति। स्वधानमोऽन्तमन्त्राणां स्वाहाकारान्तमन्त्रैस्सह विकल्पोपि पूर्ववदतिदेशत एव सिद्धः, प्रकृतौ द्विविधमन्त्राणामभिधानात्। तत्र स्वधानमोन्ता मन्त्रा आपस्तम्बेनोक्ता दर्शिताः। स्वाहान्तमन्त्रास्तु पिण्डपितृयज्ञे साङ्ख्यायनेनोक्ताः—'दक्षिणं जान्वाच्य यज्ञोपवीती प्राङासीनो मेक्षणेन जुहोत्यग्नये कव्यवाहनाय स्वाहा सोमाय यमायाङ्गिरस्वते पितृमते स्वाहा' इति। सोमायेत्यत्र पितृमते स्वाहेत्यनुषज्यते। अतोऽग्नये स्वाहा सोमाय स्वाहेति विशेषविहितावपि मन्त्रावतिदेशतोऽग्नौकरणे स्तः, प्रकृतावेवंविधयोरपि मन्त्रयोरुपदेशात्। तथाच पिण्डपितृयज्ञमधिकृत्य बैजावापः—'आज्यमासिच्योद्वास्य यज्ञोपवीतीसन्वाहार्यपचने मेक्षणेन द्वे आहुती जुहोत्यग्नय इति पूर्वां सोमायेत्युत्तराम्' इति। अन्वाहार्यपचनो दाक्षिणाग्निः। एवं पिण्डपितृयज्ञहोमे यज्ञोपवीतित्वं 'उपवीतं देवानाम्' इति श्रुत्या दैविकधर्मत्वेनावगतं ब्रुवाणा आपस्तम्बसाङ्ख्यायनबैजवापकल्पसूत्रकाराः पिण्डपितृयज्ञे होमात्मकं प्रधानं दैविकमिति मन्यन्ते। कात्यायनोप्येवमेव मन्यते। यदाह—

अग्नौकरणहोमस्तु कर्तव्य उपवीतिना।

प्राङ्मुखेनैव देवेभ्यो जुहोतीति श्रुतिश्रुतेः ॥

इति । अयमर्थः—अग्नौकरणहोमप्रकृतिभूतपिण्डपितृयज्ञहोमविधायकश्रुतौ 'स उद्वास्याग्नौ द्वे आहुती जुहोति देवेभ्यः' इति श्रुतेः तद्बलात्प्रकृतिदैविकधर्मवत् तद्विकृतिभूताग्नौकरणहोमोप्युपवीतित्वादिदैविकधर्मेण कर्तव्य इति । अत्र 'द्वे आहुती जुहोति' इति विहितहोमद्वये 'सोमाय पितृमते स्वाहाऽग्नये कव्यवाहनाय स्वाहा' इति मन्त्रवर्णे देवतात्वेनावगतयोः सोमाग्न्योः चातुर्मास्यान्तर्गतपितृयज्ञवाक्यशेषादिषु कचित्पितृरूपेण कचिद्देवरूपेण व्यपदेशदर्शनादिह किं पितृरूपयोर्देवतात्वमुत देवरूपयोरिति संदेहे देवेभ्ये इत्यनुवादसरूपार्थवाददर्शनादिह देवरूपयोरेव देवतात्वमिति गम्यत इत्यभिप्रायेण देवेभ्यो जुहोतीति श्रुतिश्रुतेरित्युक्तम् । न तु साक्षाद्देवरूपयोरेव देवतात्वमिति श्रुतौ श्रूयत इत्यभिप्रायेणेति मन्तव्यम् । अत एवानन्तरमपरितोषात्पक्षान्तरमुक्तं तेनैव—

अपसव्येन वा कार्यो दक्षिणाभिमुखेन वा ।
निरुप्य हविरन्यस्मा अन्यस्मै न हि हूयते ॥

इति । अस्यार्थः—पिण्डपितृयज्ञे 'पितृभ्यो जुष्टं निर्वपामि' इति मन्त्रेण सकृदेव होमार्थं पितृदेवतार्थं च निर्वापः क्रियते। ततश्च निर्वापमन्त्रसामर्थ्यात् पितृरूपयोरेव सोमाग्न्योर्होमदेवतात्वमिति गम्यते । देवरूपयोस्तु देवतात्वे देवेभ्य इति

वाक्यशेषबलादाश्रियमाणे अन्यस्मै निरुप्तमन्यस्मै हूयत इत्ययुक्तं स्यात्। तस्मात्पितृरूपयोरेव देवतात्वं तेन प्रकृतिभूतो होमः प्राचीनावीतिना दक्षिणाभिमुखेन च क्रियते इति विकृतिभूताग्नौकरणहोमोपि प्राचीनावीतिना दक्षिणामुखेन च कार्य इति। अयमेव पक्षश्श्रेयानिति मन्यमान आश्वलायनः स्वमतत्वेन पिण्डपितृयज्ञहोमं पैतृकधर्मकं परमतत्वेन दैविकधर्मकमाह—'प्राचीनावीतीध्ममुपसमाधाय मेक्षणेनावदायावदानसंपदा जुहुयात्सोमाय पितृमते स्वधा नमोऽग्नये कव्यवाहनाय स्वधा नम इति स्वाहाकारेण वाऽग्निपूर्वं यज्ञोपवीती' इति। एवं प्रकृतिभूतपिण्डपितृयज्ञस्योभयविधत्वेन विकल्पितधर्मकत्वात्तद्विकृतिभूताग्नौकरणहोमोऽप्यतिदेशत एव विकल्पितधर्मक इति यज्ञोपवीतिना प्राचीनावीतिना वा कार्यः। तत्राश्वलायनगृह्यानुसारिणां पैतृकधर्मकः कार्यः। तथाच तेनैव स्वकृतगृह्येऽभिहितम्—'उद्धृत्यघृताक्तमन्नमनुज्ञापयत्यग्नौ करिष्ये करवै करवाणीति वा। प्रत्यभ्यनुज्ञा क्रियतां कुरुष्व कुर्विति वा। अथाग्नौ जुहोति यथोक्तं पुरस्तात्' इति। कात्यायनगृह्ये तु—'उद्धृत्य घृताक्तमन्नं पृच्छत्याग्नौ करिष्य इति कुरुष्वेत्यनुज्ञातः पिण्डपितृयज्ञवद्धुत्वा' इत्युक्तं, तत्र यद्यपि पिण्डपितृयज्ञशब्देन पिण्डैस्साध्यः पितृयज्ञः पिण्डपितृयज्ञ इति व्युत्पत्त्या पिण्डदानात्मकपितृयज्ञस्यैव नामधेयं, न तु होमात्मकपिण्डपितृयज्ञस्येति प्रतिभाति, तथाऽपि पिण्डदाना-

त्मकपितृयज्ञस्य होमात्मकपितृयज्ञस्य च दण्डिन इतिवल्लक्षणया नामधेयं, चातुर्मास्येषु प्रथमपर्वणि क्रियमाणानामाग्नेयादि सप्तयागानां वैश्वदेवयागस्य च वैश्वदेवनामधेयवत् । एवञ्च पिण्डदानं होमश्चात्र प्रधानं, न तु पिण्डदानमेव प्रधानं होमोऽङ्गम् । यत एवं होमोपि प्रधानं, अत एवोक्तमापस्तम्बेन– 'यदि जीवपिता दद्यादाहोमात्कृत्वा विरमेत्' इति । यदि तु होमोऽङ्गं, तदा पिण्डदानाख्यप्रधाननिवृत्तौ प्रयोजकप्रधानस्याभावादङ्गभूतहोमस्यापि निवृत्तेः 'आहोमात्कृत्वा विरमेत्' इति सूत्रमत्यन्तानुपपन्नं स्यात् । ततो ज्ञायते होमात्मकोपि पितृयज्ञः प्रधानभूत इति । एवञ्च पितृयज्ञवद्धुत्वा, इत्यस्यायमर्थः—होमात्मकपिण्डपितृयज्ञवदग्नौकरणं कुर्यादिति। एवं वदतस्तस्य स्वकीयस्मृतौ—

प्राङ्मुखेनैव देवेभ्यो जुहोतीतिश्रुतिश्रुतेः ।<br>
निरूप्य हविरन्यस्मा अन्यस्मै न हि हूयते ॥

इत्येताभ्यामुक्तदैविकपैतृकधर्मकपिण्डपितृयज्ञवादित्यभिप्रायः प्रत्येतव्यः, पिण्डपितृयज्ञविधायकसूत्रविशेषानुक्तेः । बैजवापगृह्ये— 'यज्ञोपवीत्यग्नौ करवाणीत्यामन्त्र्यग्नौकरणम्' इत्यभिधानात् स्वसूत्रोक्तपिण्डपितृयज्ञवदग्नौकरणहोमो दैविकधर्मवानिति स्फुटम् । यत्तु याज्ञवल्क्येन पिण्डपितृयज्ञमनुक्त्वैवोक्तं—

ओं कुरुष्वेत्यनुज्ञातो हुत्वाऽग्नौ पितृयज्ञवत् ।

इति, यच्च पारस्करेण—

पैतृकैरभ्यनुज्ञातो जुहोति पितृयज्ञवत् ॥

इति, । अत्र सर्वत्र दैविकधर्मकपितृयज्ञवादित्यर्थो ग्राह्यः 'दैविकधर्मकपितृयज्ञवत्' इति बहुभिस्सूत्रकारैरुक्तत्वात् । न च बहुभिरुक्तत्वमप्रयोजकमिति वाच्यं 'भूयसां स्यात्सधर्मत्वम्' इति जैमिनिना प्रयोजकत्वस्याभिधानात् । ननु भूयसामपि मतं 'निरुप्य हविरन्यस्मा अन्यस्मै न हि हूयते' इति न्यायविरुद्धत्वादप्रयोजकम् । मैवं—ते खल्वापस्तम्बादयोप्येवं मन्यन्ते यथा दर्शयागेनैकदेवतासम्बन्धित्वेन निरुप्तेषु शूर्परूपैकस्थानगतेषु प्रोक्षितव्येषु 'अग्नये वो जुष्टं प्रोक्षामि' इति प्रोक्षणमन्त्रस्थो व इत्ययं शब्दः केषुचित्पर्यवस्यति न सर्वेषु वर्तते । यथाच तेष्वेव व्रीहिषु 'इन्द्राग्निभ्यां वो जुष्टं प्रोक्षामि' इति प्रोक्षणमन्त्रस्थो व इत्ययं शब्दः केषुचित्पर्यवस्यति न सर्वेषु वर्तते । तथा स्थालीरूपैकस्थानगतेषु व्रीहिषु 'पितृभ्यो वो जुष्टं निर्वपामि' इति निर्वापमन्त्रस्थो व इत्ययं शब्दः केषुचित्पर्यवस्यति न सर्वेषु व्रीहिषु वर्तते इति न स्थालस्थं सर्वं पितृभ्यो निरुप्तं किन्तु तदर्धम्, तेन पितृभ्यो निरुप्तं पितृमदन्तसोमादिभ्यो हूयते अतो न भूयसां मतं न्यायविरुद्धमिति सर्वमनवद्यम् । तूष्णीमेव सर्वनिर्वापपक्षे तु न्यायाविरोधस्सुतराम् । सोऽपि पक्ष आपस्तम्बेनोक्तः—'मृण्मये निर्वपति पितृभ्यो वो जुष्टं

निर्वपामीति तूष्णीं वा' इति। भेदेन निर्वापपक्षे दूरोत्सारितो न्यायविरोधः। अयं तु पक्षो वत्सेनोक्तः *— 'पवित्रान्तर्हिते चरुं निर्वपति त्रिर्यज्ञोपवीती दक्षिणेन हस्तेन त्रिः प्राचीनावीती सव्येन हस्तेन यज्ञोपवीती मेक्षणेन जुहुयात्सोमाय पितृमते स्वधा नमो यमायाङ्गिरस्वते पितृमते स्वधा नमोऽग्नये कव्यवाहनाय स्वधा नमः' इति। तस्मात्स्मृतिषु पितृयज्ञशब्देन दैविकधर्मपितृयज्ञाभिधानं युक्तम्। यत्तु मनुनोक्तं—

अपसव्यमग्नौ कृत्वा सर्वमावृत्परिक्रमम्।

इति। तदाश्वलायनशाखीयविषयम्—

स्वाहा स्वधा नमः सव्यमपसव्यं तथैव च।
आहुतीनां तु या सङ्ख्या साऽवगम्या स्वसूत्रतः॥

इति कात्यायनस्मरणात्। एवंच याऽऽपस्तम्बेनोक्ताऽऽहुतीनां त्रयोदशसङ्ख्या साऽऽपस्तम्बसूत्रिणामित्यवगन्तव्यम्। आपस्तम्बेन धर्मशास्त्रसूत्रे—'उद्ध्रियतामग्नौ च क्रियतामित्यामन्त्रयते। काममुद्ध्रियतां काममग्नौ च क्रियतामित्यतिसृष्टमुद्धरेज्जुहुयाच्च' इत्यग्नौकरणविधानादाहुतिसङ्ख्या यद्यपि वक्तव्या। तथाऽपि स्वकृतगृह्यसूत्रे अनूदितमन्त्रविधानमुखेनार्थादाहुतीनां त्रयोदश सङ्ख्या दर्शितेति तत्र सङ्ख्या नोक्तेति मन्तव्यम्। अति सृष्टोऽभ्यनुज्ञातः। एवंचोद्धरणप्रश्नादिकं कृत्वाऽन्नमुद्धृत्याग्नेरुप समाधानाद्याज्यभागान्तं कुर्यात्, आपस्तम्बीयगृह्योक्तक्रमेण

* चरकाध्वर्युसूत्रकृत् वत्स इति हेमाद्रिः.

वक्ष्यमाणतत्तत्प्रधानहोमसाधारणतया प्राच्याङ्गकलापस्य विहितत्वात् । आज्यभागान्ते—'यन्मे माता' इत्यादिमन्त्रैर्जुहुयात् । तथा चापस्तम्बीयगृह्यसूत्रं– 'अन्नस्योत्तराभिर्जुहोत्याज्याहुतीरुत्तराः' इति । उद्धृतस्यान्नस्य किञ्चित्किञ्चिदवदानधर्मेणावदाय दर्व्यां निधाय 'यन्मे माता प्रलुलोभ चरति, यास्तिष्ठन्ति' इति द्वाभ्यां ऋग्भ्यां अमुष्मै स्वाहेत्यन्ताभ्यां अमुष्मा इत्यत्र चतुर्थ्यन्ततया पितुर्नाम गृहीत्वा द्वे आहुती जुहोति। एवमेव 'यन्मे पितामही प्रलुलोभ चरति, अन्तर्दधे पर्वतैः' इति द्वाभ्यामृग्भ्याममुष्मै स्वाहेत्यन्ताभ्यां अमुष्मा इत्यत्र चतुर्थ्यन्ततया पितामहस्य नाम गृहीत्वा द्वे आहुती जुहोति । एवमेव 'यन्मे प्रपितामही प्रलुलोभ चरति, अन्तर्दध ऋतुभिः' इति द्वाभ्यां अमुष्मै स्वाहेत्यन्ताभ्यां अमुष्मा इत्यत्र चतुर्थ्यन्ततया प्रपितामहस्य नाम गृहीत्वा द्वे आहुती जुहोति । 'यन्मे मातामही प्रलुलोभ चरति, यास्तिष्ठन्ति' इति द्वाभ्यां मातामहाय द्वे आहुती जुहोति । 'यन्मेमातुः पितामही प्रलुलोभ चरति, अन्तर्दधे पर्वतैः' इति द्वाभ्यां मातुःपितामहाय द्वे आहुती जुहोति । 'यन्मे मातुःप्रपितामही प्रलुलोभ चरति, अन्तर्दध ऋतुभिः' इति द्वाभ्यां मातुः प्रपितामहाय द्वे आहुती जुहोति । अत्र प्रथममन्त्रे यन्मे मातामही प्रलुलोभ चरति ............ तन्मे रेतो मातामहो वृङ्क्तामित्यूहः कार्यः । द्वितीये मन्त्रे अन्तरन्यं मातामहाद्दध इत्यूहः । मन्त्रद्वयेऽप्यमुष्मा इत्यत्र मातामहस्य

चतुर्थ्यन्ततया नामग्रहणं कार्यम् । तृतीये मन्त्रे यन्मे मातुः पितामही प्रलुलोभ चरति ........तन्मे मातुः पितामहो वृङ्क्तामित्यूहः । चतुर्थे मन्त्रे मातुः पितामहादध इत्यूहः । मन्त्रद्वयेऽप्यमुष्मा इत्यत्र मातुः पितामहनामग्रहणं कार्यम् । पञ्चमे मन्त्रे यन्मे मातुः प्रपितामही प्रलुलोभ चरति........तन्मे मातुः प्रपितामहो वृङ्क्तामित्यूहः । षष्ठे मन्त्रे अन्तरन्यंमातुः प्रपितामहादध इत्यूहः । मन्त्रद्वयेऽप्यमुष्मा इत्यत्र मातुः प्रपितामहनामग्रहणं कार्यम्,

योज्याः पित्रादिशब्दानां स्थाने मातामहादिकाः ।
अन्नहोमे तथा स्पर्शे जलपिण्डादिदानके ॥
यन्मे मातामहीत्यादि तत्रोदाहरणं भवेत् ।

इति गृह्यभाष्यार्थसङ्ग्रहकारेणोक्तत्वात् । स्पर्शे 'एष ते तत मधुमानूर्मिस्सरस्वान्' इत्यादिमन्त्रत्रयेण ब्राह्मणभोजनार्थान्नस्पर्शे । ततः पूर्ववदन्नदाय 'ये चेह पितरः' इत्यृचा एकामाहुतिं जुहोति एवमन्नाहुतीर्हुत्वा षडाज्याहुतीर्जुहोति — तत्र 'स्वाहा पित्रे' इति पुरस्तात्स्वाहाहुतिं जुहोति । उपरिष्टात्स्वाहाकारेण द्वितीयाम् । एताभ्यामेव मन्त्राभ्यां तृतीयां चतुर्थीमाहुतिं हुत्वा स्वधा स्वाहेति पञ्चमीं जुहोत्यग्नये कव्यवाहनाय स्वाहेति षष्ठीं ततस्स्विष्टकृतं हुत्वा भक्ष्यभोज्यसर्वविधाहविष्यान्नात्किंचिदादायोदीचीनं भस्मापोह्य तस्मिन्नुष्णे भस्मनि तूष्णीं जुहोति । ततो लेपयोः प्रस्तरवत्तूष्णीं बर्हि-

रक्त्वाऽग्नौ प्रहरतीत्यादि परिषेचनान्तं पाश्वात्याङ्गकलापमाग्नेय-स्थालीपाकोक्तं कृत्वा हुतशेषं ब्राह्मणभोजनपात्रेषु निदध्यात्। एतत्सर्वं तद्भाष्यार्थसङ्ग्रहकारेणोक्तं—

अग्नीन्धनादि प्रतिपद्य कर्म कृत्वाऽऽज्यभागान्तमथावदाय।
यन्मेति मन्त्रैः प्रतिमन्त्रमग्नौ कुर्युस्तथा सप्तभिरन्नहोमान्॥
स्वाहादिमन्त्रैरपि सर्पिषा स्युर्होमास्ततास्स्विष्टकृतं च हुत्वा।
भस्माप्यपोह्याहविरन्नहोमो लेपेषु दर्व्योश्च समञ्जनादि॥
शेषं च कृत्वा परिषेचनान्तं पात्रेषु दद्याद्धुतशेषमन्नम्॥

इति। सप्तभिरन्नहोमा इत्यनूहितमन्त्राभिप्रायोक्तं, ऊहितमन्त्र साहित्ये त्रयोदशसङ्ख्यासम्पत्तेस्सप्तभिरित्ययोगात्। एवमेत दग्नौकरणं प्राचीनावीतिना कार्यं, पैतृकत्वात्। तथा चा-पस्तम्बेन स्वकृतगृह्यशास्त्रादावुक्तं—'अपरपक्षे पित्र्याणि प्राची-नावीतिना प्रसव्यं दक्षिणतोपवर्गः' इति। तत्रापि यदपैतृक-माघारसमिन्धनादिकं तत् यज्ञोपवीतिना कार्यं, अत एव भाष्यार्थसङ्ग्रहकारेणोक्तं—

आघारदार्वग्निमुखाज्यभागप्रदक्षिणानुव्रजनेषु तद्वत्।
आघारयोस्स्विष्टकृति प्रदिष्टं यज्ञोपवीतं हि कपर्दिनस्स्यात्॥

इति स्मृतिचन्द्रिकायां अग्नौकरणविधिः.

---

## अथोभयविधाग्नौकरणार्थाग्निनिर्णयः.

तत्र याज्ञवल्क्यः—

कर्म स्मार्तं विवाहाग्नौ कुर्वीत प्रत्यहं गृही ।
दायकालाहृते वाऽपि श्रौतं वैतानिकाग्निषु ॥

स्मार्तं कर्म औपासनहोमवैश्वदेवकरणाग्नौकरणादिकम् । विवाहाग्नौ विवाहकालोत्पन्नौपासनाग्नौ । दायकालाहृते दायकाले वैश्यादिकुलादाहृत्योत्पादिते औपासनाग्नौ कुर्वीतेत्यर्थः । सर्वाधाने औपासनासम्भवे त्वापस्तम्बोक्ताग्नौकरणहोमस्य लोपः, न तु वैतानिकाग्नावनुष्ठानं, 'श्रौतं वैतानिकाग्निषु' इत्यभिधानात् । न तु लौकिके, देवतादेरिवाग्नेरपि प्रतिनिध्यभावात् । अत एव सर्वाधानेनौपासनासंभवे धूर्तस्वामिनोक्तं—'श्राद्धमूर्ध्वं होमात्कर्तव्यं ब्राह्मणस्त्वाहवनीयार्थे इति तस्यापि प्रधानत्वात्' इति । तस्यापि होमादूर्ध्वं क्रियमाणस्यान्नप्रदानलक्षणश्राद्धस्यापीत्यर्थः । पितृयज्ञधर्मकाग्नौकरणस्य तु सर्वाधानेनौपासनाभावेऽपि न निवृत्तिः 'कर्म स्मार्तं विवाहाग्नौ' इत्यादिनोपदिष्टौपासनाग्न्यभावेऽपि 'पितृयज्ञवत्' इत्यतिदेशतःप्राप्तदक्षिणाग्नेस्सम्भवाद्दक्षिणाग्नावनुष्ठानम् । अनेनैवाभिप्रायेण मार्कण्डेयेनोक्तं—

आहिताग्निस्तु जुहुयाद्दक्षिणाग्नौ समाहितः ।

इति । आपस्तम्बोक्ताग्नौकरणे तु पिण्डपितृयज्ञातिदेशाभावान्न

दक्षिणाग्निप्राप्तिरिति सर्वाधाने धूर्तस्वाम्युक्ताग्नौकरणाभाव एव युक्तः। पूर्वोक्ताभिप्रायेण वायुपुराणेऽप्युक्तं—

आहृत्य दक्षिणाग्निं तु होमार्थं वै प्रयत्नतः।

अग्न्यर्थं लौकिकं वाऽपि जुहुयात्कर्मसिद्धये ॥

इति। अस्यार्थः—अग्नौकरणहोमार्थं गृह्याग्न्यभावे दक्षिणाग्निं लौकिकं वाऽप्याहृत्य स्वीकृत्य होमकर्मसिद्धये जुहुयादिति। अग्न्यर्थमित्यनेन गृह्याग्निभावे तु नाग्न्यन्तरस्वीकार इत्यर्थादुक्तम्। तत्र दक्षिणाग्निपक्षस्य प्रवासादिना असम्भवे लौकिकाग्निपक्षः, तस्योपदेशातिदेशरूपप्रमाणद्वयावगतस्य दक्षिणाग्निबाधकत्वेनागत्याऽऽश्रयणीयत्वात्। अत एव प्रयत्नतो दक्षिणाग्निमाहृत्येत्युक्तम्। यत्तु स्मृत्यन्तरं—

साग्निरग्नावनग्निस्तु द्विजपाणावथाप्सु वा।

कुर्यादग्नौ क्रियां नित्यं लौकिके नेति निश्चितम् ॥

इति। तस्यायमर्थः—अग्निमान्पुरुषः औपासनाग्नौ दक्षिणाग्नौ वा पूर्वोक्तव्यवस्थयाऽग्नौकरणं कुर्यात्। दायात्प्रागस्वीकृतौपासनतया छिन्नाग्नितया वा भार्याविधुरतया वा योऽग्निरहितः स द्विजपाणावप्सु वाऽग्नौकरणं कुर्यात्, न जातु लौकिकाग्नौ कुर्यादिति। ततश्च न वायुपुराणवचनविरोधः। श्रौताग्निना साग्निकस्याप्यनग्निकवत्कचिद्विषये द्विजपाणावग्नौकरणं कार्यम्। तथाच स्मृत्यन्तरं—

हस्तेऽग्नौकरणं कुर्यादग्नौ वा साग्निको द्विजः।

इति । अत्राग्निशब्देन न गृह्याग्निरुच्यते । तस्मिन् विद्यमाने हस्तपक्षानवकाशात् । तेन श्रौताग्निरुच्यते लौकिको वा । साग्निकशब्देन सर्वाधान्येवोच्यते । ततश्चायमर्थः—सर्वाधानेनौपासनाग्न्यभावे पितृयज्ञधर्मकाग्नौकरणं दक्षिणाग्नौ, तदसंनिधाने लौकिकाग्नौ द्विजपाणौ वा कुर्यादिति । अत्रापि प्रवासादिना दक्षिणाग्न्यभावे लौकिकाग्निहस्तपक्षौ पूर्वोक्तन्यायवदवगन्तव्यौ । लौकिकाग्नेस्तादृशविशेषानवगमात्पाणिना सह समविकल्प एव । यद्यपि न्यायतोऽग्नेः प्रतिनिध्यभावः; तथाऽपि न प्रतिनिधिन्यायेनात्र दक्षिणाग्न्यादेरुपादानम् । किंतु गृह्याग्न्यभावेन तत्साध्यकर्मणोऽननुष्ठाने प्राप्ते वचनेनागृह्याग्न्यादावपि गृह्याग्निसाध्यं कर्म विधीयत इति न कश्चिद्दोषः। एवंचानाहिताग्नेरौपासनवदाहिताग्नेरप्यर्धाधानिनः उभयविधाग्नौकरणहोमः औपासन एव । सर्वाधानेनौपासनरहितस्याहिताग्नेरापस्तम्बोक्ताग्नौकरणाभाव एव । पिण्डपितृयज्ञधर्मकाग्नौकरणस्य तु दक्षिणाग्नौ, तदसंनिधौ लौकिकाग्नौ द्विजपाणौ वाऽनुष्ठानम् । अनग्निकस्य द्विजपाणावप्सु वा उभयविधमग्नौकरणमिति सिद्धम् । अनाहिताग्नेरौपासनवदाहिताग्नेरर्धाधानेनौपासनवतः प्रवासादिना कथञ्चिदौपासनासंनिधाने द्विजपाणावप्सु वाऽग्नौकरणं कर्तव्यम् । तथाच विष्णुधर्मोत्तरे मार्कण्डेयः—

अनाहिताग्निश्चौपसदेऽग्न्यभावे द्विजेऽप्सु वा ।

इति। औपसदो गृह्याग्निः। अनाहिताग्निश्चेति चशब्द आहिताग्नेस्समुच्चयार्थः। ततश्चायमर्थः— अनाहिताग्निराहिताग्निश्चार्धाधानेनौपासनवान गृह्याग्निसंनिधौ तत्रैवाग्नौकरणं कुर्यात्। अग्न्यभावे गृह्याग्न्यसंनिधानेऽप्सु द्विजपाणौ वाऽग्नौकरणं कुर्यादिति। अत्राप्स्विति पक्षस्य विषयविशेषः कात्यायनेन दर्शितः—

अग्नौकरणहोमं तु कुर्यादप्स्विति यन्मतम्।
स यदाऽपां समीपे स्यात् श्राद्धं ज्ञेयो विधिस्तदा॥

एवंचापां समीपादन्यत्र यदा श्राद्धं तदैव द्विजपाणाविति पक्षो ग्राह्यः। अयं च विषयविभागः 'अनग्निस्तु द्विजपाणावथाप्सु वा' इत्यत्रापि द्रष्टव्यः, विष्णुधर्मोत्तरे मार्कण्डेय इत्युक्तस्मृत्यन्तरविवक्षायां कारणाभावात्। यत्तु मनुनोक्तं—

अग्न्यभावे तु विप्रस्य पाणावेवोपसादयेत्।

इति, तत् भार्यापरिग्रहात् पूर्वमनुष्ठेयनित्यनैमित्तिकश्राद्धविषयम्। अयमेव विषयो जातूकर्णेन स्पष्टीकृतः—

अग्न्यभावे तु विप्रस्य पाणौ दद्यात्तु दक्षिणे।
अग्न्यभावः स्मृतस्तावद्यावद्भार्यां न विन्दति॥

इति। दक्षिणे पाणौ दद्यात् उभयविधाग्नौकरणाहुत्यर्थमन्नमिति शेषः। यत्तु गृह्यपरिशिष्टकारेणोक्तं—

अन्वष्टक्यं च पूर्वेद्युर्मासिमास्यथ पार्वणम्।
काम्यमभ्युदयेऽष्टम्यामेकोद्दिष्टमथाष्टमम्॥

चतुर्ष्वाद्येषु साग्नीनामग्नौ होमो विधीयते ।
पित्र्यब्राह्मणहस्ते स्यादुत्तरेषु चतुर्ष्वपि ॥

इति, 'हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टकाः' इति विहितान्यष्टकाश्राद्धानि । तत्र अष्टकाश्राद्धदिनादुत्तरादिने नवम्यां क्रियमाणं श्राद्धमन्वष्टक्यं, पूर्वेऽह्नि सप्तम्यां क्रियमाणं श्राद्धं पूर्वेद्युरिति पदेन लक्षणयोक्तम् । प्रतिमासं क्रियमाणमापरपक्षिकं श्राद्धं मासिमासीत्यनेनोक्तम् । पार्वणं सर्वश्राद्धप्रकृतिभूतं दर्शश्राद्धम् । काम्यं पुत्रादिकामनया क्रियमाणं श्राद्धम् । आभ्युदयिकं श्राद्धमभ्युदयपदेनोक्तम् । अष्टकाख्यं श्राद्धं अष्टम्यामिति पदेनोक्तम् । एकोद्दिष्टमिति पदेन सपिण्डीकरणं लक्षणयोक्त, सपिण्डीकरणे एकोद्दिष्टस्यापि सद्भावात् । एषां मध्ये आद्येषु चतुर्षु साग्निकानामग्नावेवाग्नौकरणहोमः । उत्तरेषु तु साग्नीनां पित्र्यब्राह्मणहस्त एवेति तस्यार्थः । तदेतत् येषां गृह्यपरिशिष्टं तेषामेव व्यवस्थापकं न सर्वेषाम् । अतो न पूर्वोक्तव्यवस्थाविरोध इति सर्वमनवद्यम् । यदा तु पाणिहोमपक्षः तदैकस्यैव विप्रस्य पाणौ होमो न सर्वविप्राणामित्याह कात्यायनः—

पित्र्ये यः पङ्क्तिमूर्धन्यः तस्य पाणावनग्निकः ।
हुत्वा मन्त्रवदन्येषां तूष्णीं पात्रेषु निक्षिपेत् ॥

। । पित्र्यप्रथमब्राह्मणपाणौ होमोऽयं न नियः,

दैवविप्रकरेऽनाग्निः कृत्वाऽग्नौकरणं द्विजः ।

इति यमेन वैश्वदैविकब्राह्मणपाणावग्नौकरणहोमविधानात्। एवञ्च व्रीहियववत्पित्र्यवैश्वदैविकब्राह्मणपाण्योर्विकल्पो वेदितव्यः। दैवविप्रकरहोमपक्षेऽपि हुतशेषं पित्र्यब्राह्मणभोजनपात्रेष्वेव निक्षिपेत्। तथाच वायुपुराणं—

हुत्वा दैवकरेऽनाग्निः शेषं पित्र्ये निवेदयेत्।
न हि स्मृताश्शेषभाजो विश्वेदेवाः पुराणगैः॥

दैवविप्रकरादन्यत्र पितृविप्रपाण्यग्नौ होमेऽपि हुतशेषभाजो विश्वेदेवा न भवन्तीति ज्ञापयितुं न हि स्मृताश्शेषभाजो विश्वेदेवा इति सामान्येनोक्तम्। यत एव सामान्येन शेषभाजो विश्वेदेवा न भवन्तीति अत एव विशेषेण पुराणान्तरे शेषदानं प्रतिषिध्यते—

अग्नौकरणशेषं तु न दद्याद्वैश्वदैविके।

इति। अग्नौकरणहोमं वैश्वदैविकब्राह्मणपाणौ कुर्वन्नप्येकब्राह्मणपाणावेव कुर्यात्, गुणानुरोधेन प्रधानानावृत्तेरग्नित्वेनैकविप्रपाणावेवानुष्ठेयत्वात्। तदेतदुक्तं वायुपुराणे—

वैश्वदैवे यदैकस्मिन् भवेयुः द्व्यादयो द्विजाः।
तदैकपाणौ होतव्यं स्याद्विधिर्विहितस्तथा॥

यदैकस्मिन् वैश्वदैविकब्राह्मणभोजनकर्मणि द्वौ चत्वारः षडित्येवं युग्मसङ्ख्यया द्व्यादयो विप्रा दैविकत्वेन भवेयुः तदैकस्य प्रथमोपविष्टस्य विप्रस्य पाणौ होतव्यं तत्राहुतिविधिर्विहितस्स्यादनुष्ठितो भवेदित्यर्थः। एवं ब्राह्मणपाणावग्नौकरणहोमं

करिष्ये करवै करवाणीति वा ब्राह्मणानुज्ञापनं, तथाऽस्त्विति ब्राह्मणैः प्रतिवचनं भवेदित्याह शौनकः—'अनग्निकश्चेदाद्यं गृहीत्वा भवत्स्वेवाग्नौकरणमिति पूर्ववत्तथाऽस्तु' इति। अनग्निकश्चेत् ब्राह्मणपाणावग्नौकरणहोमं कुर्याच्चेत्। आद्यं घृताक्तमन्नम्। पूर्ववत् ब्राह्मणानुज्ञापनमिति शेषः। तथाऽस्त्विति ब्राह्मणानां प्रतिवचनमिति शेषः। यत्तु स्मृत्यर्थसारेऽभिहितं—'पाणिहोमे त्विध्मप्रेक्षणविप्रानुज्ञा न सन्ति' इति, तत्र विप्रानुज्ञाभावोक्तिरेतद्वचनादर्शननिबन्धनेत्युपेक्षणीया। प्रेक्षणाभावोक्तिरपि चिन्त्या, प्रेक्षणकार्यस्य विध्यदर्शनात्। यच्च तत्रैवाभिहितं 'परिसमूहनपर्युक्षणे स्तः' इति, तदपि चिन्त्यं, तयोर्दृष्टकार्यस्य धूल्यपगमादेरत्राभावात्। नियमादृष्टमात्रस्याप्रयोजकत्वात्। यस्य त्वदृष्टसंस्कारः कार्यं परिस्तरणस्य तदत्रास्ति। तथाच यमः—

अग्नौकरणवत्तत्र होमो दैवकरे भवेत्।
पर्यस्तदर्भानास्तीर्य यतो ह्यग्निसमो हि सः॥

इति। दैवकरो वैश्वदैविकब्राह्मणपाणिः। पर्यस्तदर्भाः परितः सर्वतो न्यसनीयदर्भाः परिस्तरणदर्भा इति यावत्। दैवकरग्रहणं पित्र्यब्राह्मणकरस्याप्युपलक्षणार्थम्। ब्राह्मणपाणौ हुतं तदानीय तदानीमेव ब्राह्मणेन न भोक्तव्यं, अपितु भोजनकाले। तथाच बह्वृचगृह्यपरिशिष्टं—

अन्नं पाणितले दत्तं पूर्वमश्नन्त्यबुद्धयः ।
पितरस्तेन तृप्यन्ति शेषान्नं न लभन्ति ते ॥
यच्च पाणितले दत्तं यच्चान्यदुपकल्पितम् ।
एकीभावेन भोक्तव्यं पृथग्भावो न विद्यते ॥

शेषान्नं विप्रभोजनार्थं सम्पादितमन्नम् । पित्र्यब्राह्मणपाणितलादन्यत्र पितृयज्ञवदग्नौकरणम् । पैतृकश्राद्धे मातामहश्राद्धे च वैश्वदैविकं तन्त्रं, द्रव्यदेवतावदधिकरणकारकैक्यस्यापि सम्प्रतिपन्नत्वात् । पित्र्यब्राह्मणपाणितले क्रियमाणं तु मातामहब्राह्मणपाणितलेऽप्यावृत्त्या कार्यं, अधिकरणकारकैक्यस्यासम्प्रतिपन्नत्वात् । अत एव कात्यायनः—

मातामहस्य भेदेऽपि कुर्यात्तन्त्रे च साग्निकः ॥

इति । अयमर्थः—मातामहस्य ब्राह्मणपाणौ पृथगग्नौकरणं कुर्यात् । एतच्च वैश्वदैविकभेदपक्षे तन्त्रपक्षे च समानमिति । यस्मिन् विषये साग्निकस्य पाणौ अग्नौकरणमुक्तं तस्मिन्विषये इदं वचनं द्रष्टव्यम् ।

इति स्मृतिचन्द्रिकायामुभयविधाग्नौकरणार्थाग्निनिर्णयः.

---

## अथ परिवेषणविधिः.

तत्रादावमत्राणि सति सम्भवे श्रेष्ठानि सम्पाद्यानि । दैवे सौवर्णानि श्रेष्ठानि । पित्र्ये राजतानि । तथाच श्रेष्ठानीत्यनुवृत्तावत्रिः—

भोजने हेमरूप्याणि दैवे पित्र्ये यथाक्रमम् ।

इति । एतेषामलाभे विष्णुः—'तैजसानि पात्राणि दद्यात्' इति । तैजसानि कांस्यताम्रादीनि । तेषामलाभे पालाशपर्णनिर्मितानि—

पालाशेभ्यो विना न स्युः पर्णपात्राणि भोजने ।

इत्यत्रिणाऽभिधानात् । पर्णपात्रपक्षेऽपि घृतादिद्रव्यधारणार्थं तैजसानि सति सम्भवे सम्पाद्यानि । 'घृतादिदाने तैजसानि पात्राणि' इति विष्णुस्मरणात् । तेषामभावे पालाशपर्णनिर्मितपत्रपुटानि घृतादिधारणार्थानि भवन्ति न कदाचिन्मृन्मय पात्राणि,

न मृन्मयानि कुर्वीत भोजने दैवपित्र्ययोः ।

इत्यत्रिस्मरणात् । यथासम्भवलब्धानां चैतेषां पात्राणां द्विः प्रक्षाळनं कार्यं, तत्रादावपो निनीय हस्तेन निर्मृज्य प्रक्षाळनं, अनन्तरं जलेनैव । तथाच ब्रह्माण्डपुराणम्—

प्रक्षाळ्य हस्तपात्रादि पश्चादद्भिर्विधानवत् ।
प्रक्षाळनं जलं दर्भैः तिलैर्मिश्रं क्षिपेच्छुचौ ॥

हस्तपात्रादीति मध्यमपदलोपी समासः । हस्तनिर्मृष्टं पात्रादि प्रक्षाळ्येत्यर्थः । पात्रशब्देन तलमुक्तं, आदिशब्देन घृतादेर्धारणार्थानि गृह्यन्ते । पात्रप्रक्षाळनानन्तरं याज्ञवल्क्यः—

हुतशेषं प्रदद्यात्तु भाजनेषु समाहितः ।
यथालाभोपपन्नेषु रौप्येषु तु विशेषतः ॥

भाजनेषु पित्र्यब्राह्मणार्थभाजनेष्वित्यर्थः, रौप्येषु तु विशेषत

इति पित्र्यकर्मणि प्रशस्तरौप्यसमभिव्याहारात्। शौनकेन तु स्पष्टमुक्तम्—

हुत्वाऽग्नौ परिशिष्टं तु पितृपात्रेष्वनन्तरम्।
निवेद्यैवापसव्येन परिवेषणमाचरेत् ॥

अपसव्येनेति पूर्वेणैव सम्बध्यते, न पुनरुत्तरेण।

अपसव्येन कर्तव्यं पित्र्यं कृत्यं विशेषतः।
अन्नदानादृते सर्वमेवं मातामहेष्वपि ॥

इति कार्ष्णाजिनिस्मरणात्। अन्नदानं अन्नप्रक्षेपः परिवेषणमिति यावत्। एवञ्च श्राद्धकर्त्रा परिवेषणं कार्यमित्यर्थादुक्तम्। उक्तं च साक्षान्मनुना—

पाणिभ्यामुपसंगृह्य स्वयमन्नस्य बन्धुकम्।
विप्रान्तिके पितॄन् ध्यायन् शनैरुपरि निक्षिपेत् ॥

अन्नस्य बन्धुकं अन्नेन पूर्णं परिवेषणपात्रमिति यावत्। पाणिभ्यामुपसंगृह्य विप्रभोजनपात्रे शनैर्निक्षिपेत्। पितॄन् ध्यायन्निति पित्र्यविप्रविषयं, दैवविप्रविषये अन्नमित्युक्तत्वात्?। यत्तु वायुपुराणेऽभिहितं—

परिवेषणं प्रशस्तं स्याद्भार्यया पितृतृप्तये।
पितृदेवमनुष्याणां स्त्रीसाहाय्यं यतः स्मृतम् ॥

इति, तत्र प्रशस्तमित्यत्र परिचारककर्तृकपरिवेषणादिति शेषो द्रष्टव्यः। स्वयंकर्तृकपरिवेषणापेक्षया प्राशस्त्यासम्भवात्। अत एवानन्तरमुक्तं तत्रैव—

फलस्यानन्तता प्रोक्ता स्वयं तु परिवेषणे।

इति। एवञ्च स्वयं पत्नी अन्ये वा नियताः शूद्रव्यतिरिक्ताः परिवेषणं कर्तुमर्हन्तीत्यवगन्तव्यम्। पत्न्यप्यसवर्णा न परिवेषणार्हा। अत एव नारायणेनोक्तं—

यद्द्रव्यं यत्पवित्रं च यत्पित्र्यं यत्सुखावहम्।
द्विजातिभ्यस्सवर्णाया नार्या हस्तेन दीयते॥

इति। हस्तेन हस्तद्वयेनेत्यर्थः।

उभाभ्यामपि हस्ताभ्यां आहृत्य परिवेषयेत्।

इति मत्स्येनोक्तत्वात्। हस्तद्वयेनापि न साक्षाद्देयं, किन्तु दर्व्यादिद्वारा।

हस्तदत्तास्तु ये स्नेहलवणव्यञ्जनादयः।
दातारं नोपतिष्ठन्ति भोक्ता भुञ्जीत किल्बिषम्॥

इति वृद्धशातातपेन साक्षाद्धस्तदत्तस्य दोषहेतुत्वस्मरणात्। दर्व्यादिकं च सति सम्भवे सुवर्णादिमयं ग्राह्यं,

सौवर्णराजताभ्यां वा खड्गेनोदुम्बरेण वा।
दत्तमक्षय्यतां याति फल्गुपात्रेण वा पुनः॥

इति हारीतस्मरणात्। खड्गेन खड्गमृगशृङ्गकृतदर्व्यादिना। फल्गुपात्रेण काकोदुम्बरिकाख्यवृक्षदारुकृतदर्व्यादिना। पुराणे तु परिवेषणसाधनानि निषिद्धानि दर्शितानि—

नापवित्रेण हस्तेन नैकेन न विना कुशम्।
नायसेनायसे नैव श्राद्धे तु परिवेषयेत्॥

अपवित्रेण दुर्लेपसंसर्गादिना अपवित्रेण । आयसेन अयोमय-दर्व्यादिना । आयसे अयोमयपात्रेऽपि नैव परिवेषयेत् । अनिषिद्धदर्व्याद्यसम्भवेऽपि तत्रैवोक्तं—

तस्मादन्तरितं देयं पर्णेनाथ तृणेन वा ।

इति । यस्मादाहृत्य हस्तेन दानं निषिद्धं तस्मादनिषिद्धदर्व्याद्यसंभवे पर्णादिना प्रान्तरितं कृत्वा देयमित्यर्थः । भोक्तारं द्विजं प्रत्याह वसिष्ठः—

उभयोर्हस्तयोर्मुक्तं पितृभ्योऽन्नं निवेदितम् ।
तदन्नं सम्प्रतीच्छन्ति असुरा दुष्टचेतसः ॥
तस्मादशून्यं हस्तेन कुर्यादन्नमुपस्थितम् ।
भाजनं तु समालभ्य तिष्ठेदोच्छेषणाद्द्विजः ॥

इति । परिवेषणोपक्रमप्रभृति भुक्तशिष्टस्य भाजनाद्बहिष्करण-पर्यन्तं वामहस्तेन भाजनमपरित्यजन्नेव वर्तेत । कण्डूयनार्थं वामहस्तव्यापारसमये दक्षिणहस्तेन भाजनं समालभ्य वर्तेतेति तात्पर्यार्थः । परिवेषणारम्भप्रकारमाह शौनकः—

पाकं सर्वमुपानीय संवेद्य च पृथक्पृथक् ।
विधिना दैवपूर्वं तु परिवेषणमाचरेत् ॥

इति । संवेद्य भोक्तॄणां संविदितं कृत्वेत्यर्थः ।

भक्ष्यभोज्यगुणानुक्त्वा भोजयेद्ब्राह्मणान् शनैः ।

इति बृहस्पतिस्मरणात् । पाकं सर्वमित्यस्यार्थो मनुना प्र-पञ्चितः—

भक्ष्यं भोज्यं च विविधं मूलानि च फलानि च ।
हृद्यानि चैव मांसानि पानानि सुरभीणि च ॥
उपानीय च तत्सर्वं शनकैस्सुसमाहितः ।
परिवेषयेत्तु प्रयतो गुणान् सर्वान् प्रचोदयन् ॥

प्रचोदयन् प्रख्यापयन्नित्यर्थः । देवपूर्वं परिवेषयेदिति विधेरर्थवादः पुराणे दर्शितः—

तप्यमानास्तपस्तीव्रं प्रेषिता ब्रह्मशासनात् ।
विश्वेदेवास्तु रक्षार्थं पितृयज्ञेषु सर्वदा ॥
अतः पूर्वं प्रदातव्यं तेभ्योऽन्नं पितृकर्मणि ।

इति । प्रदातव्यं भाजनेषु प्रक्षेप्तव्यम् । देवपूर्वं परिवेषणमाचरेदिति वदन् परिवेषणार्थं प्रथममाज्येनोपस्तरणं दैवपूर्वं कृत्वा अन्नं दत्वा एवमेव पायसादि सर्वं पृथक्पृथक् परिवेषणीयमिति दर्शयति । अन्यान्यपि परिवेषणीयान्याह मनुः—

गुणांश्च सूपशाकाद्यान् पयो दधि घृतं मधु ।
विन्यसेत्प्रयतस्सम्यग्भूमावेव समाहितः ॥

गुणान् साक्षाद्भुजिक्रियानिर्वर्तकान् न तु ग्राहकतया गुणभूतान् सूपशाकमध्वादीन् भूमौ निहितेषु स्वल्पभाजनेषु प्रक्षिपेत् न प्रधानान्नार्थमहाभाजने निहितेष्वित्यर्थः । तथाच हारीतः—'भूमावेव निदध्यान्नोपर्युपरि पात्राणि' इति । अस्यार्थः—यान्युपरिपात्राणि महाभाजनोपरि निधेयानि घृताद्याधारभूतानि स्वल्पपात्राणि तान्यत्र भूमावेव निदध्यात् न महाभाज-

नस्योपरीति । महाभाजनमप्यत्र पूर्वोक्तपिष्टकादिरचितपरितःकाष्ठ्यचतुरश्रमण्डलोपरि निधाय पायसापूपादि विविधमन्नं प्रक्षिपेत् । न तु यन्त्रिकादेरुपरि निधायेति 'भूतलान्नोद्धरेत्पात्रम्' इत्यादिवचनसिद्धं बोद्धव्यम् । श्राद्धार्थं यद्यत्पाकादिनोपकल्पितं तत्सर्वं किञ्चित्किञ्चिदादायावश्यं परिवेषणीयम् । अत एव प्रचेतसोक्तं—

'सर्वं च प्रकृतं दत्वा पात्रमालभ्य जपेत्'

इति । जप्यमाह पैठीनसिः—'पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे जुहोमि स्वधा' इति । जपानन्तरं कात्यायनः—'वैष्णव्यर्चा यजुषा चाङ्गुष्ठमन्नेऽवग्राह्य' इति । का पुनरत्र वैष्णवी ऋक्, कस्य चाङ्गुष्ठमित्यपेक्षिते याज्ञवल्क्यः—

इदं विष्णुरिति त्वन्ने द्विजाङ्गुष्ठं निवेशयेत् ।

इति । यमस्तु सार्थवादमङ्गुष्ठनिवेशनविधिं वदन् अत्र विनियुक्तयजुर्मन्त्रस्वरूपमाह—

अङ्गुष्ठमात्रो भगवान् विष्णुः पर्यटते महीम् ।
राक्षसानां वधार्थाय कोऽल्पवान् प्रहरिष्यति ॥
तस्माच्छ्राद्धेषु सर्वेषु अङ्गुष्ठग्रहणं स्मृतम् ।
विष्णो हव्यं च कव्यं च ब्रूयाद्रक्षेति च क्रमात् ॥

ब्रूयात् दैवे पित्र्ये चान्न इति शेषः । अत्र दैवेऽन्ने अङ्गुष्ठनिवेशनात् प्राग्विष्णो हव्यं रक्षेति यजुर्ब्रूयात् । पित्र्येऽन्ने तु विष्णो कव्यं रक्षेति यजुर्ब्रूयादिति । अत्रैवं वृद्धाचारा-

नुसारी प्रयोगः— यज्ञोपवीती दक्षिणं जान्वाच्य उदङ्मुखः प्रथमं देवतार्थपरिविष्टमन्नमभ्युक्षणेनावोक्ष्य पात्रमालभ्य 'पृथिवी ते पात्रम्' इति जपाद्यङ्गुष्ठनिवेशनान्तं कृत्वा प्राचीनावीती सव्यं जान्वाच्य दक्षिणामुखः पित्र्यं परिविष्टमन्नमभ्युक्षणेनावोक्ष्य पात्रमालभ्य जपाद्यङ्गुष्ठनिवेशनान्तं कुर्यात्। एवं मातामहादिपात्रस्थानेषु अभ्युक्षणावोक्षणाद्यङ्गुष्ठनिवेशनान्तं कार्यम्। अभ्युक्षणावोक्षणाद्यङ्गुष्ठनिवेशनान्तं दैवे पित्र्ये च ब्राह्मणानेकत्वे प्रतिब्राह्मणपात्रं कार्यम्,

एकैकस्याथ विप्रस्य गृहीत्वाऽङ्गुष्ठमादरात्।

इति ब्रह्माण्डपुराणेऽभिधानात्। सर्वभाजनस्थेष्वन्नेषु अङ्गुष्ठनिवेशनानन्तरं चतुर्विंशतिमतेऽभिहितं—

पात्रालम्भं द्विजः कुर्यादिदं वोऽन्नमिति ब्रुवन्।

इति। अयमर्थः—परिविष्टान्नाधारभूतपात्रालम्भनं वामहस्तेन कृत्वाऽन्नत्यागात्पात्रमनुत्सृजन्नेव 'विश्वेदेवा इदं वोऽन्नम्' इत्युच्चारयन्नन्नत्यागं कुर्यादिति। विष्णुस्त्वन्नत्यागात्प्राक् सर्तव्यमाह—'नमो विश्वेभ्यो देवेभ्यः इत्यन्नमादौ प्राङ्मुखयोर्निवेदयेत्। पित्रे पितामहाय प्रपितामहाय च नामगोत्राभ्यामुदङ्मुखेषु' इति। चशब्दात्प्रपितामहाय च निवेदयेदित्याह। विश्वेभ्यो देवेभ्यः पित्रे पितामहाय चेति चतुर्थ्या विश्वेषां देवानां पित्रादेश्च देवतात्वं प्रदर्श्यते। विश्वेदेवा देवता पित्रादयो देवतेति स्मृत्वा निवेदनार्थं, प्राङ्मुखयोरुदङ्मुखेष्विति

सप्तम्या ब्राह्मणानामाहवनीयार्थत्वं प्रदर्श्यते । आहवनीयार्थे ब्राह्मण इति स्मृत्वा निवेदनार्थम् । एतदुक्तं भवति—परिविष्टान्नत्यागात्पूर्वममुकनामानौ विश्वेदेवा देवता इदमन्नं हविः ब्राह्मण आहवनीयार्थे इत्यादि स्मृत्वा नमश्शब्दोच्चारणपूर्वकमन्नं निवेदयेदिति । तथा पिताऽमुकगोत्रोऽमुकशर्मा देवता इदमन्नं हविर्ब्राह्मण आहवनीयार्थे पितामहोऽमुकगोत्रोऽमुकशर्मा देवता इदमन्नं हविर्ब्राह्मण आहवनीयार्थे इत्यादि स्मृत्वा नमश्शब्दोच्चारणपूर्वकं निवेदयेदिति । एवं च श्राद्धाख्यं कर्म होमात्मकमित्यवगम्यते । ततश्च निवेदयेदित्यनेन होमात्मकं कर्म-कुर्यादिति वचोभङ्ग्या द्योत्यते । अत एव श्राद्धाख्यं कर्म होमात्मकम् । अत एव ब्रह्मपुराणे—

एतद्वो अन्नमित्युक्त्वा विश्वान् देवांश्च यजेत् । इत्युक्तम् । होमयागयोरत्यल्पभेदत्वाद्धोमात्मके श्राद्धे अनास्थया यजेदित्युक्तिर्युज्यते । अहोमात्मकत्वे तु यजेदित्युक्तिरत्यन्तासमञ्जसा स्यात् । तेनात्र श्राद्धाख्यं कर्म होमात्मकमित्यवगम्यते, ब्राह्मण आहवनीयार्थ इति स्मरणात् । अनन्तरं ब्राह्मणाध्यासितां भूमिं गयारूपां ध्यात्वा ब्राह्मणं च गदाधररूपं ध्यात्वाऽन्नं निवेदयेत् ॥

श्राद्धभूमौ गयां ध्यात्वा ध्यात्वा देवं गदाधरम् ।
ताभ्यां चैव नमस्कृत्य ततः श्राद्धं प्रवर्तयेत् ॥

इति पुराणेऽभिधानात् । वैश्वदेवान्नत्यागप्रकारमाह अत्रिः—

हस्तेन मुक्तमन्नाद्यमिदमन्नमुदीरयेत् ।
स्वाहेति च ततः कुर्यात्स्वसत्ताविनिवर्तनम् ॥

अयमर्थः—परिवेषकहस्तेन निर्मुक्तं परिविष्टमन्नाद्यं पुरोवर्तित्वादिदमन्नमिति प्रदेयहविर्निर्देशार्थं देवतोद्देशकशब्दोच्चारणानन्तरमुदीरयेत् । तत इदमन्नमित्युदीरणानन्तरं स्वाहेति हविर्दानप्रकाशकं शब्दमुदीरयेत् । ततस्स्वाहाशब्दोदीरणानन्तरं स्वसत्ताविनिवर्तनं कुर्यात् । स्वशब्देनात्र स्वत्वं निर्दिश्यते । स्वत्वस्य सद्भावः स्वसत्ता तस्या विनिवर्तनं निवर्तकं कर्म यन्मानसं न ममेति बुद्धिरूपं स्वत्वत्यागाख्यं तत्कुर्यादिति । पित्रादिभ्योऽन्नत्यागप्रकारमपि स एवाह—

गोत्रसम्बन्धनामानि इदमन्नं ततस्स्वधा ।
पितृकर्मण्युदीर्याथ स्वसत्तां विनिवर्तयेत् ॥

अयमर्थः—पितृपितामहादिक्रमादेकैकं देवतात्वेनोद्दिष्टं पित्रे अमुकगोत्रायामुकशर्मणे पितामहायामुकगोत्रायामुकशर्मणे इत्यादिगोत्रसम्बन्धनामानि चतुर्थ्यन्तान्युदीर्य ततः प्रदेयहविर्द्रव्यनिर्देशकमिदमन्नमित्युदीर्य ततः कुर्याद्दानप्रकाशकं स्वधाशब्दमुदीर्य स्वसत्तां विनिवर्तयेत् । स्वत्वध्वंसकरं न ममेति बुद्धिरूपं मानसं कर्म कुर्यादिति । एवं विष्णुत्रिवचनाविहितान्नत्यागप्रकार एव व्यक्तीकरणार्थं प्रयोगसौकर्यार्थं च पुनः प्रपञ्च्यते । मातुः प्रपितामहार्थेऽन्ने अङ्गुष्ठनिवेशनानन्तरं वैश्वदेविकब्राह्मणसंनिधावुदङ्मुख उपविश्योपवीती दक्षिणं जान्वाच्य

दक्षिणहस्तेन यवसहितमुदकमादाय सव्यहस्तेन पात्रमालभ्य पुरूरवार्द्रवसंज्ञिका विश्वेदेवा देवता इदमन्नं हविर्ब्राह्मण आहवनीयार्थे इयं भूर्गया अयं भोक्ता ब्राह्मणो गदाधरः पुरूरवार्द्रवसंज्ञिकेभ्यो विश्वेभ्यो देवेभ्य इदं परिविष्टमन्नमातृप्तेः परिवेक्ष्यमाणं च स्वाहा नमो नममेत्युक्त्वा भाजनसमीपे यवसहितमुदकं निनीय भक्त्या प्रणामं कुर्यात्। वैश्वदेविकब्राह्मणानेकत्वे तत्तद्भाजने परिविष्टमन्नमेवं त्यजेत् । ततः पित्र्यब्राह्मणसंनिधौ दक्षिणामुख उपविश्य सव्यं जान्वाच्य प्राचीनावीती हस्तेन तिलानुदकं चादाय वामहस्तेन पात्रमालभ्य अस्मत्पिताऽमुकगोत्रोऽमुकशर्मा वसुरूपः सपत्नीको देवतेदमन्नं हविरित्यादि ब्राह्मणो गदाधर इत्यन्तं पूर्ववदुक्त्वा अस्मत्पित्रेऽमुकगोत्रायामुकशर्मणे वसुरूपाय सपत्नीकाय परिविष्टमन्नमातृप्तेः परिवेक्ष्ययाणं च स्वधा नमो न ममेत्युक्त्वा भाजनसमीपे तिलसहितमुदकं निनीय भक्त्या प्रणामं कुर्यात् । ब्राह्मणानेकत्वे तत्तद्ब्राह्मणभाजने परिविष्टमन्नमेवं त्यजेत् । पितामहादिभ्योऽप्येवमेवान्नत्यागः । अस्मत्पितामहोऽमुकगोत्रोऽमुकशर्मा रुद्ररूपः सपत्नीकः........अस्मत्पितामहायामुकगोत्रायामुकशर्मणे रुद्ररूपायेति पितामहीयान्नत्यागे विशेषः। अस्मत्प्रपितामहोऽमुकगोत्रोऽमुकशर्माऽऽदित्यरूपः सपत्नीकः ........ प्रपितामहायामुकगोत्रायामुकशर्मणे आदित्यरूपायेति प्रपितामहीयान्नत्यागे विशेषः । अस्मन्मातामहोऽमुकगोत्रोऽमुकशर्मा

वसुरूपः सपत्नीकः..........मातामहायामुकगोत्रायामुकशर्मणे वसुरूपायेत्यादिविशेषः । मातुःपितामहीयान्नत्यागे विशेषः, मातुःप्रपितामहीयान्नत्यागे विशेषश्च स्वयमूह्यः । मातुःपितामहादिस्थानेऽपि ब्राह्मणानेकत्वे पूर्वोक्तप्रकारेणान्नत्यागावृत्तिः । यदा तु पित्रादीनामेक एव ब्राह्मणस्तदा यावन्त उद्देश्यास्तावतो भागानेकस्मिन् भाजने परिविष्टस्यान्नादेर्बुद्ध्या कृत्वा एकैकं भागमेकैकं पित्रादिकमुद्दिश्य त्यजेत् । यदा त्वतिथिर्भोजनार्थमुपविष्टस्तदा तं गन्धपुष्पादिभिरर्चयित्वा पितृभ्योऽन्नत्यागानन्तरं अस्मै ब्राह्मणाय विष्णुरूपाय शिवरूपाय वा इदमन्नमातृप्तेः परिवेक्ष्यमाणं च नमो न ममेति परिविष्टमन्नं त्यजेत् । अत्र विष्णुपुराणं—

पिता पितामहश्चैव तथैव प्रपितामहः ।
तृप्तिं प्रयान्तु ते भक्त्या यन्मयैतदिहाहृतम् ॥
मातामहस्तृप्तिमुपैतु तस्य
तथा पिता तस्य पिता च योऽन्यः ।
विश्वे च देवाः परमां प्रयान्तु
तृप्तिं प्रणश्यन्तु च यातुधानाः ॥
यज्ञेश्वरो हव्यसमस्तकव्य-
भोक्ताऽव्ययात्मा हरिरीश्वरोऽत्र ।
तत्सन्निधानादपयान्तु सद्यः
रक्षांस्यशेषाण्यसुराश्च सर्वे ॥

एवमुक्तपौराणिकश्लोकजपानन्तरं लघुयमः—

अन्नहीनं क्रियाहीनं मन्त्रहीनं च यद्भवेत् ।
सर्वमच्छिद्रमित्युक्त्वा ततो यत्नेन भोजयेत् ॥

अच्छिद्रं जायतामित्यध्याहारेणाच्छिद्रभाषणवाक्यं पूरणीयं, साकाङ्क्षत्वात् । बोधायनेन तु अच्छिद्रं जायतामित्येवोक्तम् । यद्यपि लघुयमवचनादच्छिद्रभाषणानन्तरमेव भोजनप्रतीतेरापोशनहस्तेषु ब्राह्मणेषु सत्स्वाच्छिद्रभाषणं कार्यमिति प्रतिभाति, तथाऽपि प्रागेवापोशनतः कार्यं न पश्चात् । यथाऽऽह प्रचेताः—

आपोशनकराग्राणामच्छिद्रस्य च भाषणात् ।
निराशाः पितरो यान्ति देवैस्सह न संशयः ॥

किं तर्हि आपोशनदानानन्तरं कर्तव्यमित्युक्ते स एवाह—

आपोशनं प्रदायाथ सावित्रीं त्रिर्जपेदथ ।
मधु वाता इति त्र्यृचं मध्वित्येव त्रिकं तथा ॥

मध्वित्येतावत्त्रिरावर्तनीयमिति चतुर्थपादस्यार्थः । व्याहृतीर्जपित्वा सावित्रीं जपेत्, 'सव्याहृतिकां गायत्रीम्' इति याज्ञवल्क्यस्मरणात् । आपोशनदानविधानान्नित्यभोजनाश्रितनियमाः पर्युक्षणादयः प्राणाहुत्यन्ता भोक्तृणामत्रापि सन्तीति गम्यते । अत एव कस्यचिद्भोजननियमस्यात्र प्रतिषेधार्थं तदनुष्ठाने दोषमाह भरद्वाजः—

पितृणामन्नमादाय बलिं यस्तु प्रयच्छति ।
स्तेयेन ब्रह्महा तेन सुवर्णस्तेयकृद्भवेत् ॥

पितॄणामन्नं देवपित्रर्थं परिविष्टमन्नम् । अत एव सामान्येनोक्तमत्रिणा—

दत्ते वाऽप्यथवाऽदत्ते भूमौ यो निक्षिपेद्बलिम् ।
तदन्नं निष्फलं याति निराशैः पितृभिर्गतैः ॥

बलिं नित्यभोजननियमविधिषूक्तं बलिं,

भोजनात्किञ्चिदन्नाग्रं धर्मराजाय वै बलिम् ।
दत्वाऽथ चित्रगुप्ताय प्रयतश्चेदमुच्चरेत् ॥

इति विहितामिति यावत् । व्याहृत्यादिजपानन्तरं याज्ञवल्क्यः—'जप्त्वा यथासुखं वाच्यम्' इति । यथासुखमिति पदमपरिपूर्णत्वादन्विताभिधानात् पदान्तरमपेक्षते । तेन जुषध्वमिति पदमध्याहार्यम् । अत एव—

जुषध्वमिति ते चोक्तास्सम्यग्विधृतभाजनाः ।
कृतमौनास्समश्नीयुरापोशनादनन्तरम् ॥

इति व्यासेनोक्तम् । आपोशनादनन्तरं अमृतोपस्तरणमसीति मन्त्रेणापः पीत्वा तदनन्तरमित्यर्थः । प्राणाहुतयस्त्वशनक्रियायामनुप्रविष्टा इति तासां करणेऽपि समश्नीयुरापोशनादनन्तरमित्यस्य न कश्चिद्विरोधः । भोक्तुमुपक्रान्तेषु ब्राह्मणेषु श्राद्धकर्तुः कर्तव्यमाह कात्यायनः—'अश्नत्सु जपेद्व्याहृतिपूर्वां गायत्रीं सप्रणवां सकृत्त्रिर्वा रक्षोघ्नीः पित्र्यमन्त्रान् पुरुषसूक्तमप्रतिरथमन्यानि च पवित्राणि' इति । रक्षोघ्नीः 'कृणुष्व पाजः प्रसितिं न पृथ्वीम्' इत्याद्या ऋचः । पित्र्य-

मन्त्राः—'उदीरतामवरे' इत्यादयः। अप्रतिरथः—'आशुश्शिशानः' इति सूक्तम्। मनुरपि—

स्वाध्यायं श्रावयेत्पित्र्ये धर्मशास्त्राणि चैव हि।
आख्यानानीतिहासांश्च पुराणान्यखिलानि च॥

श्रावयेद्यज्ञोपवीतीति शेषः।

अपसव्येन कर्तव्यं सर्वं श्राद्धं यथाविधि।
सूक्तस्तोत्रजपं मुक्त्वा विप्राणां च विसर्जनम्॥

इति जमदग्निस्मरणात्। सूक्तस्तोत्रग्रहणं भुञ्जानेषु विप्रेषु यद्यज्जप्यं तस्य सर्वस्योपलक्षणार्थम्। बृहस्पतिस्तु मन्त्रादिजपादन्यदपि कर्तव्यमाह—

भक्ष्यभोज्यगुणानुक्त्वा भोजयेद्ब्राह्मणान् शनैः।

इति। भोक्तारं भोजयितारं च प्रत्याह वृद्धशातातपः—

अपेक्षितं याचितव्यं श्राद्धार्थमुपकल्पितम्।
न याचते द्विजो मूढः स भवेत्पितृघातकः॥
अपेक्षितं यो न दद्याच्छ्राद्धार्थमुपकल्पितम्।
कृपणो मन्दबुद्धिश्च न स श्राद्धफलं लभेत्॥

न केवलं श्राद्धफलालाभः अपितु कष्टतमजन्मप्राप्तिरपि। तथाच निगमः—

अपेक्षितं न दद्याद्यश्श्राद्धार्थमुपकल्पितम्।
अथ कृच्छ्रासु घोरासु तिर्यग्योनिषु जायते॥

यत्तु वायुपुराणेऽभिहितं—

याचते यदि दातारं ब्राह्मणो ज्ञानवर्जितः ।
पितरस्तस्य रुष्यन्ति दातुर्भोक्तुर्न संशयः ॥

यच्च यमेन—

कृच्छ्रद्वादशरात्रेण मुच्यन्ते कर्मिणस्ततः ।
तस्माद्विद्वान्नैव दद्यान्न याचेन्न तु दापयेत् ॥

इति । तत् श्राद्धार्थमनुपकल्पितवस्तुविषयं, सामान्येनाभिधानात् । श्राद्धार्थमुपकल्पितान्नादिविषयेऽप्यत्यन्ताधिकं दाता न दद्यात् । भोक्ता च न प्रतिगृह्णीयात् । तथा च शङ्खलिखितौ— 'नात्यधिकं दद्यान्न प्रतिगृह्णीयात्' इति । अत्यधिकान्नस्यापरिग्रहणार्थं पूर्वपरिविष्टं प्रभूतमत्रास्ति किमन्येनेति भोक्ता न वक्तव्यं, किंतु हस्तसंज्ञया सूचनीयम् । तथाच तावेव— 'अन्नपानादि न प्रभूतमिति ब्रूयुरन्यत्र हस्तसंज्ञायाः' इति । निगमोपि—

नान्नपानादिकं श्राद्धे वारयेन्मुखतः क्वचित् ।
अनिष्टत्वाद्बहुत्वाद्वा वारणं हस्तसंज्ञया ॥

एवं याचनमपि न मुखतः कुर्यात्, मौनभङ्गप्रसङ्गात् । तेन तदपि हस्तसंज्ञया कार्यम् । एवं दात्राऽपि पुनर्दानसमये अत्यधिकदानं न भविष्यतीति ज्ञापनार्थमीपद्ददामीति मुखतो न वक्तव्यम् । किंतु तूष्णीं किंचित् प्रदर्श्य प्रतिषेधसूचकहस्तसङ्केताभावेऽभ्यनुज्ञासूचकहस्तसङ्केते वा देयम् । यदाह यमः—

यावद्धविष्यं भवति यावदिष्टं प्रदीयते ।
तावदश्नन्ति पितरो यावन्नाह ददाम्यहम् ॥

इति । परिविष्टान्नेषु यन्निरवशेषतया भुक्तं यच्च भोक्तुं पुनः-पुनर्गृह्यते तत्तस्येष्टमित्यनुमाय तदानीय प्रदर्श्य प्रतिषेधसूचनाभावे देयम् । तथाच स एव—

यद्यद्रोचेत विप्रेभ्यस्तद्दद्यादविमत्सरः ।

इति । मत्सरग्रहणं दोषान्तराणामुपलक्षणार्थम् । अत एव ब्रह्माण्डपुराणं—

न चाश्रु पातयेज्जातु न शुक्तां गिरमीरयेत् ।
न चोद्वीक्षेत भुञ्जानं न च कुर्वीत मत्सरम् ॥
न दीनो न च वा क्रुद्धो न चैवान्यमना नरः ।
एकाग्रमाधाय मनः श्राद्धं कुर्यात्सदा बुधः ॥

इति । शुक्तां निष्ठुराम् । कार्ष्णाजिनिरपि—

कुर्यादथापरिश्रान्तो दम्भाहङ्कारवर्जितः ।
क्रोधं लोभं तथा मोहं वर्जयेच्छ्राद्धकर्मणि ॥

इति । समानेषु स्वस्य श्रैष्ठ्यसिद्धये परमश्रेष्ठानि भक्ष्यभोज्यानि दद्यादित्याह स एव—

भक्ष्यभोज्यानि चोष्याणि पेयलेह्ययुतानि च ।
सर्वश्रेष्ठानि यो दद्यात्सर्वश्रेष्ठो भवेन्नरः ॥

दत्तेषु भक्ष्यादिषु आतृप्तेः स्वेच्छया न किञ्चिदवशेषयेत् ।

तथाच सुमन्तुः—

अक्रोधनो रसान् सम्यगद्याद्यद्यस्य रोचते ।
आतृप्तेर्भोजनं तेषां कामतो नावशेषणम् ॥

इति स्मृतिचन्द्रिकायां परिवेषणविधिः.



अथान्यान्यपि निमन्त्रितब्राह्मणविषयाणि
कानिचिद्वचनानि लिख्यन्ते.

तथाच प्रचेताः—

पीत्वाऽऽपोशनमश्नीयात् पात्रदत्तमगार्हितम् ।
सर्वेन्द्रियाणां चापल्यं न कुर्यात्पाणिपादयोः ॥

इन्द्रियादिषु चापल्यं भोजनार्थव्यापाराद्भ्यधिकव्यापारः । तस्मिंस्तु कृते भुक्तमन्नं न पितॄन् प्रीणातीत्याह हारीतः—

उद्धृत्य पाणी विहसन् सक्रोधो विस्मयान्वितः ।
श्राद्धकाले तु यत् भुङ्क्ते न तत्प्रीणाति वै पितॄन् ॥

बोधायनोपि—

पादेन पादमाक्रम्य यो भुङ्क्तेऽनापदि द्विजः ।
नैवासौ भोज्यते श्राद्धे निराशाः पितरो गताः ॥

वाग्व्यापारस्सर्वोपि न कार्यः । यदाह निगमः—'तूष्णीं भुञ्जीरन्नविलोकयमाना अनुद्धृत्य पात्रम्' इति । अविलोकयमानाः दिश इति शेषः । मनुरपि—

अत्युष्णं सर्वमन्नं स्यादश्नीरंश्चैव वाग्यताः ।
न च द्विजातयो ब्रूयुः दात्रा पृष्टान् हविर्गुणान् ॥

अश्नीरंश्चैवेत्येवशब्देन एकपङ्क्त्युपविष्टब्राह्मणेषु भुञ्जानेषु कथञ्चिदन्योन्यस्पर्शने सत्यपि भोजनोपरमो नैव कार्य इत्याह । अत एव शङ्खः—

श्राद्धपङ्क्तौ तु भुञ्जानो ब्राह्मणो ब्राह्मणं स्पृशेत् ।
तदन्नमत्यजन् भुक्त्वा गायत्र्यष्टशतं जपेत् ॥

वाग्यमनविधानादेव हविर्गुणवचननिषेधसिद्धौ पुनर्निषेधो हस्तसङ्केतेनाप्यतत्सूचनार्थः । अतो हस्तसङ्केतेनापि हविर्गुणकथने दोषमाहात्रिः—

हुङ्कारेणापि यो ब्रूयाद्धस्ताद्वाऽपि गुणान्वदेत् ।
भूतलाच्चोद्धरेत्पात्रं मुञ्चेद्धस्तेन वाऽपि तत् ॥
प्रौढपादो बहिःकक्षो बहिर्जानुकरोऽथवा ।
अङ्गुष्ठेन विनाऽश्नाति मुखशब्देन वा पुनः ॥
पीतावशिष्टतोयादि पुनरुद्धृत्य वा पिबेत् ।
खादितार्धं पुनः खादेत् मोदकादि फलानि वा ॥
मुखेन वा धमेदन्नं निष्ठीवेत् भाजनेऽथवा ।
इत्थमश्नन् द्विजः श्राद्धं हत्वा गच्छत्यधोगतिम् ॥

प्रौढपाद आसनाध्यारोपितपादः । बहिःकक्ष उत्तरवासोबहिर्भूतकक्षद्वयः । भूतलात्पात्रोद्धरणे दोषोऽन्नाद्याधारमहाभाजनविषयः । पानाद्याधारलघुपात्रस्य 'पुनरुद्धृत्य वा पिबेत्' इत्य-

नेनोद्धाराभ्यनुज्ञावगमात् । यत्तु देवलेनोक्तं—

अन्नपानकशीतोदं ददद्भिरवलोकितः ।
वक्तव्ये कारणे संज्ञां कुर्वन् भुञ्जीत पाणिना ॥

इति । अपेक्षानुसारेणान्नपानशीतलवार्यादिदातृभिरपेक्षां ज्ञातुमवलोकितः क्षुत्पिपासादिलक्षणे अपेक्षादेः कारणे वक्तव्ये पाणिना संज्ञां सङ्केतं अपेक्षादिसूचकं कुर्वन् भुञ्जीतेति तस्यार्थः प्रत्येतव्यः । न तु स्वादुत्वादिहविर्गुणरूपे अपेक्षाकारणे संज्ञां कुर्वन्निति, एवंविधार्थपरिग्रहे पूर्वोक्तवचनविरोधापत्तेः । अन्नपानदात्रा तु हविर्गुणप्रश्नोऽप्यर्थं दोषत्वान्न कार्य इत्याह शङ्खः—

श्राद्धे नियुक्तान् भुञ्जानान्न पृच्छेल्लवणादिषु ।
उच्छिष्टाः पितरो यान्ति पृच्छतो नात्र संशयः ॥
दातुः पतति बाहुर्वै जिह्वा भोक्तुश्च भिद्यते ।

इति । लवणादिषु न्यूनाधिक्याभावेन हविषः साद्गुण्यं पुनरपि प्रदानार्थं न पृच्छेत् । न च पृष्ट्वा सम्यक्त्वेन ज्ञातं दद्यात्, 'दातुः पतति बाहुः' इति दोषश्रवणात् । 'जिह्वा भोक्तुश्च भिद्यते' इति निन्दाबलाद्धविषस्साद्गुण्यं सङ्केतेनापि भोक्ता न सूचयेदिति निषेधविधिर्गम्यते । पादुकयोरुपविष्टपीठे वा पादौ निधाय न निमन्त्रिता अश्नीयुरित्याह विष्णुः—'अश्नीयुर्ब्राह्मणा न सोपानत्काः न पीठोपरि निहितपादाः' इति । अत्र द्वितीयनिषेधातिक्रमेण यो भुङ्क्ते तस्य दोषमाह वृद्धशातातपः—

आसने पादमारोप्य यो भुङ्क्ते द्विजसत्तमः ।
हन्ति दैवं च पित्र्यं च तदन्नं च प्रजाः पशून् ॥

निषेधान्तरमाह प्रचेताः—

न स्पृशेद्वामहस्तेन भुञ्जानोऽन्नं कदाचन ।
न पादौ न शिरो बस्तिं न पदा भाजनं स्पृशेत् ॥

निगमोपि—

मांसापूपफलेक्ष्वादि दन्तच्छेदं न भक्षयेत् ।
ग्रासशेषं न पात्रेऽस्येत्पीतशेषं च नो पिबेत् ॥

दन्तच्छेदं न भक्षयेत् हस्तेन मांसादि धृत्वा स्वल्पं स्वल्पं दन्तैश्छित्वा न भक्षयेत् ग्रासशेषं आस्यार्पितग्रासशेषं पुनर्भाजने नास्येत् न क्षिपेत् । उशनाऽपि—

भाजनं तु न निश्शेषं कुर्यात्प्राज्ञः कथञ्चन ।
अन्यत्र दध्नः क्षीराद्वा क्षौद्रात्सक्तुभ्य एव च ॥

इति, यत्तु जमदग्निनोक्तं 'न निन्देयुर्नावशेषयेयुः' इति, तत् अधिकावशेषविषयम् । यतोऽनन्तरमाह स एव—

'अल्पं पुनरुत्स्रष्टव्यं तस्यासंस्कृतप्रमीतानां भागधेयत्वात्' इति । प्रचेता अपि वर्जनीयमाह—

दन्तच्छेदं हस्तपानं वर्जयेच्चातिभोजनम् ।

इति । हस्तपानं हस्तेन पेयादिपानं वर्जयेत् । अपितु लघुपात्रे कुर्यात् । अतिभोजनं तृप्तौ सत्यामपि भोजनम् ॥

इति स्मृतिचन्द्रिकायां निमन्त्रितभोक्तृविषयाणि ॥

अथान्नविकिरणादिविधिः ।

तृप्तिं बुद्ध्वान्नमादाय सतिलं पूर्ववज्जपेत् ।

तृप्तिं पृच्छेत्................................ ॥

इति। पूर्ववज्जपेदित्यादेरर्थः कात्यायनेन प्रपञ्चितः 'गायत्रीं मधु मध्विति च जपित्वा तृप्तास्स्थ इति पृच्छति' इति। एवं पृष्टाः ते विप्राः तृप्ताः स्मः, इति ब्रूयुः

तृप्ताः स्थ इति पृष्टास्ते ब्रूयुस्तृप्तास्स्म इत्यपि ।

इति व्यासस्मरणात् । तृप्ताः स्मः इत्युक्ते अनन्तरं ब्रह्माण्डपुराणे—

प्रोक्ष्य भूमिमथाद्भिस्तुभूमौ पितृपरायणः ।

ततो विकिरणं कुर्याद्विधिदृष्टेन कर्मणा ॥

किं पुनार्विधिदृष्टं कर्मेत्यपेक्षिते मनुः—

सार्ववर्णिकमन्नाद्यं संनीयाप्लाव्य वारिणा ।

समुत्सृजेद्भुक्तवतामग्रतो विकिरं भुवि ॥

सर्वे विप्रभुक्तान्नव्यञ्जनवर्णाः प्रकारा यस्मिन्नन्नाद्ये तत्सार्ववर्णिकं अन्नाद्यं संनीय यद्यदन्नं विप्रैरुपभुक्तं ततस्तत एकदेशमवदायावदाय क्वचित्पात्रे एकीकृत्येत्यर्थः ।

मत्स्यपुराणे—

भुक्तवत्सु ततस्तेषु भाजनेष्वाऽन्तिके नृप * ।

सार्ववर्णिकमन्नाद्यं संनीयाप्लाव्य वारिणा ॥

* स्वतः

समुत्सृजेद्भुक्तवतामग्रतो विकिरेद्भुवि ।

आप्लाव्य अवोक्ष्येत्यर्थः । समुत्सृजेत् विनिक्षिपेत् । 'ये अग्नीति भुवि क्षिपेत्' इति प्रचेतसाऽभिधानात् । ये अग्नीति मन्त्रः कात्यायनेन दर्शितः—

ये अग्निदग्धा ये अनग्निदग्धा ये वा जाताः कुले मम ।

भूमौ दत्तेन पिण्डेन तृप्ता यान्तु परां गतिम् ॥

इति। यद्यपि भूमौ दत्तेनेति मन्त्रवर्णात् विधायकसर्ववचनेषु भुवीत्यभिधानाच्च न दर्भास्तरणमत्रास्तीति प्रतिभाति । तथाऽपि 'दर्भेषु विकिरश्च यः' इति मनुवचने दर्भसत्त्वानुवाददर्शनाद्दर्भानास्तीर्य तत्र विकिरो देय इति विधिः कल्पयते । तेन दर्भास्तृतभूमौ विकिरो देयः न केवलायामिति मन्तव्यम् । सार्ववर्णिकान्नोद्धरणादि सर्वं प्राचीनावीतिना कार्यम् । सूक्तादिजपव्यतिरिक्ते श्राद्धकर्मणि प्राचीनावीतित्वाभिधानात् । विकिरनिक्षेपस्थाने विक्षेपात्पूर्वं पिण्डदानोक्तप्रकारेण तूष्णीं सतिलं वारि क्षिप्त्वा विकिरस्योपरि पुनः सतिलं वारि निक्षेप्तव्यम् ॥

उदङ्मुखानां विप्राणां पुरतस्सोदकं ततः ।

अन्नं तु किरेत् भक्त्या.................... ॥

इति मार्कण्डेयेनोक्तत्वात् । अन्नं विकीर्यानन्तरं उपवीती भूत्वाऽऽचामेत् । अनाचमने दोषस्मरणात् । तथाच मरीचिः—

श्राद्धेषु विकिरं दत्वा यो नाचामेन्मतिभ्रमात् ।
पितरस्तस्य षण्मासं भवन्तुच्चिछष्टभोजिनः ॥

तदनन्तरं ब्राह्मणांश्चाचमयेत् । तथाच मदालसावाक्यम् ॥

.... ........... ................ प्रकीर्य भुवि सर्वतः ।
तदन्वाचमनार्थाय दद्यादापस्सकृत्सकृत् ॥

तदनु अन्नविकिरणात्पश्चादाचमनार्थाय नित्यभोजननियमेषु उक्तं 'अमृतापिधानमसि' इति मन्त्रपूर्वकं यद्गण्डूषं तदर्थं वैश्वदैविकविप्रपूर्वकं प्रतिविप्रं सकृत्सकृदपो निनयेदित्यर्थः । गण्डूषकरणं च विप्रैर्हस्तलेपप्रक्षाळनमकृत्वैव कार्यमिति सूचयितुं सकृत्सकृद्दद्यादित्युक्तम् । एवंच यथा हस्तप्रक्षाळनं कृत्वा गण्डूषकरणे नित्यभोजने पुरुषार्थविध्यतिक्रमात्पुरुषदोषः, तथाऽत्र श्राद्धार्थविध्यतिक्रमाच्छ्राद्धस्य वैगुण्यं भवति । तथाऽऽह मरीचिः—

हस्तौ प्रक्षाळ्य गण्डूषं यः पिबेदविचक्षणः ।
आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठते ॥

इति। गण्डूषं यः पिबेत् भोजने विरते 'अमृतापिधानमसि' इति मन्त्रेणापो यः पिबेदित्यर्थः। गण्डूषार्थोदकदानानन्तरं विष्णुः— 'उदङ्मुखेष्वाचमनमादौ दद्यात् प्राङ्मुखेषु ततः प्रोक्षणं इति श्राद्धशेषं प्रोक्ष्य दर्भपाणिस्सर्वं कुर्यात्' इति । पैतृकब्राह्मणेषु प्रथमं हस्तप्रक्षाळनपूर्वकाचमनार्थमपो दत्वा पश्चाद्वैश्वदैविकब्राह्मणेषु दत्वा 'सुप्रोक्षितम्' इति मन्त्रेण श्राद्धदेशं प्रोक्ष्य

दर्भपाणिस्सर्वमुपारितनं कर्म कुर्यादित्यर्थः । एवम्भूतहस्तप्रक्षाळनपूर्वकाचमनक्रमविधिं हेतुवन्निगदार्थवादसहितमाह शातातपः–

विश्वेदेवनिविष्टानां चरमं हस्तधावनम् ।
विसर्जनं च निर्दिष्टं तेषु रक्षा यतास्स्थिरा ॥ इति ॥

इति स्मृतिचन्द्रिकायां अन्नविकिरणादिविधिः.

---

## अथ पिण्डदानविधिः.

तत्र मनुः—

पिण्डनिर्वापणं केचित् पुरस्तादेव कुर्वते ।

इति । ब्राह्मणभोजनात्पुरस्तात् तेषामर्चनानन्तरं अग्नौकरणानन्तरं वा पिण्डनिर्वापणं केचित्कुर्वत इत्यर्थः । एवमेव स्मृत्यन्तरेषु भोजनात्पुरस्तात्पिण्डनिर्वापणस्य कालद्वयदर्शनात् । केचिदितिवचनादपरे ब्राह्मणभोजनात्परस्तादाचमनात्प्रागूर्ध्वं वा (ब्राह्मणविसर्जनादूर्ध्वं वा) पिण्डनिर्वपणं कुर्वत इत्यवगम्यते । स्मृत्यन्तरेषु ब्राह्मणभोजनादूर्ध्वमेव कालद्वयदर्शनात् । अत्र यथास्वशाखं व्यवस्था । तथाच स्मृत्यन्तरम्—

मुनिभिर्भिन्नकालेषु पिण्डदानं तु यत्स्मृतम् ।
तत्स्वशाखामतं यत्र तत्र कुर्याद्विचक्षणः ॥

तत् भिन्नकालेषु स्मृतं पिण्डदानं यस्मिन् काले कृतं स्वशाखायामनुमतं अनुगृहीतं भवति तस्मिन् काले कुर्यादित्यर्थः ।

ब्राह्मणभोजनात्पुरस्तात्परस्ताद्वेति पक्षद्वये व्यवस्थामाह लोकाक्षिः—

अप्रशस्तेषु यागेषु पूर्वं पिण्डावनेजनम् ।
भोजनस्य प्रशस्तं तु पश्चादेवोपकल्पयेत् ॥

अप्रशस्तेषु यागेषु सपिण्डीकरणाख्यश्राद्धात् पूर्वं विहितश्राद्धेषु । अवनेजनं अवाचीनपाणिना निर्वपणम् । भोजनस्य निमन्त्रितब्राह्मणभोजनस्य । प्रशस्तं सपिण्डीकरणादिश्राद्धेषु क्रियमाणं भोजनात्पश्चादेव यथाकालमुपकल्पयेत् । एवञ्च पार्वणश्राद्धे भोजनात्पश्चादेव स्वशाखानुमते काले पिण्डं दद्यात् । तत्राश्वलायनशाखिनां ब्राह्मणभोजनादूर्ध्वं तेष्वाचान्तेषु पिण्डदानकालः । तथाऽऽश्वलायनः—'भुक्तवत्स्वाचान्तेषु पिण्डं निदध्यादनाचान्तेष्वेके' इति । तत्र अनाचान्तष्वेके इति पक्षस्य सौकर्यात्स्वगृह्यानुक्तकालविशेषैरप्ययमेव पक्षो ग्राह्यः । याज्ञवल्क्यस्तु पिण्डदानप्रकारमाह—

सर्वमन्नमुपादाय सतिलं दक्षिणामुखः ।
उच्छिष्टसन्निधौ पिण्डान् दद्यात्तु पितृयज्ञवत् ॥

श्राद्धार्थपाकसिद्धं सर्वप्रकारमन्नं स्तोकंस्तोकमुद्धृत्य क्वचित्पात्रे समवदाय तदन्नमयान् पिण्डान् स्वशाखाविहितपिण्डपितृयज्ञविधानेन स्मृतिकारोपदिष्टेन सतिलत्वदक्षिणामुखत्वादिविशेषसहितेनोच्छिष्टसंनिधौ दद्यादित्यर्थः । ननूच्छिष्टसन्निधिरशुचिर्देशो भवतीति तत्र कथं पिण्डदानं विधीयत इत्याशङ्क्याहात्रिः—

पितॄणामासनस्थानादग्रतस्त्रिष्वरत्निषु ॥
उच्छिष्टसन्निधानं तन्नोच्छिष्टासनसन्निधौ ॥

उच्छिष्टसम्पर्करहितासन्नदेशोपलक्षणार्थं त्रिष्वरत्निष्वित्युक्तम् । तेन नात्र त्र्यरत्निनियमः । अत एव जातूकर्ण्यः—

व्याममात्रं समुत्सृज्य पिण्डांस्तत्र प्रदापयेत् ।

इति । पारस्करोपि—

पात्राणां बाहुमात्रेण पिण्डदानं विधीयते। इति ॥

पात्राणामुच्छिष्टाशनवदमत्राणां आधारस्थानात् । बाहुमात्रेण बाहुमात्रमुत्सृजेदित्यर्थः । व्यासोपि—

अरत्निमात्रमुत्सृज्य पिण्डांस्तत्र प्रदापयेत् ।
यत्रोपस्पृशतां वाऽपि प्राप्नुवन्ति न बिन्दवः ॥

इति । कार्ष्णाजिनिरपि पिण्डपितृयज्ञविधानेन क्रियमाणे पिण्डदाने विशेषमाह—

अन्नं पात्रे समुद्धृत्य सर्वस्य प्रकृतस्य तु ।
शेषान्नप्रश्नपूर्वं तु दद्यात्पिण्डान् क्रमेण तु ।

इति। शेषमन्नं पिण्डार्थमुद्धृताच्छेषं सर्वं प्रकृतमन्नम्। तस्य एवंविधशेषान्नस्य प्रश्नः तत्पूर्वकं पिण्डान दद्यात् । शेषमप्यस्ति किं क्रियतामित्येवंविधं प्रश्नं कृत्वा तदनुगुणं विप्राणाज्ञां च श्रुत्वा पश्चात्पिण्डदानविधिं कुर्यादिति यावत्। किंपुनस्तद्गुणमुत्तरं विप्रैर्वक्तव्यमित्यपेक्षिते तत्सूचनार्थमुशनसोक्तं— 'तैरनुज्ञातः शेषमिष्टेभ्यो दद्यात्स्वयं वा भुञ्जीत' इति । इष्टेभ्यो

दद्यात् इष्टान् भोजयेत् स्वयं वा भुञ्जीतेत्यर्थः । वाशब्दोत्र चशब्दार्थे द्रष्टव्यः, 'भुञ्जीत पितृसेवितम् । इति याज्ञवल्क्येन नित्यवद्भोजनविधानात् । यत एव पितृसेविताविशिष्टभोजनं नित्यं अत एवैकादश्यामुपवाससिद्धये पितृसेवितशेषभोजनस्थाने प्रत्याम्नायः स्मर्यते—

उपवासो यदा नित्यः श्राद्धं नैमित्तिकं भवेत् ।
उपवासं तदा कुर्यादाघ्राय पितृसेवितम् ॥

इति। यत्पुनरौशनसवचनगतवाशब्दस्य प्रसिद्धार्थत्वमभिसन्धायाभिहितं देवस्वामिना 'भुञ्जीत पितृसेवितमित्येतन्न नैयमिकम्' इति । एवञ्च स्वयं वा भुञ्जीतेत्यौशनसवचस्थवाशब्देन पितृसेवितशेषभोजनस्य पाक्षिकत्वावगतेर्भुञ्जीत पितृसेवितमित्येतद्याज्ञवल्कीयं विधानं न नैयमिकं न नित्यं इति तदीयग्रन्थस्यार्थः। तदेतच्चिन्तयम्—याज्ञवल्कीयं च वचनं नित्यं, प्रत्याम्नायवचनस्य दर्शितत्वात् ।

श्राद्धं कृत्वा तु यो विप्रो न भुङ्क्ते तु कदाचन ।
देवा हविर्न गृह्णन्ति कव्यानि पितरस्तथा ॥

इति देवलेन पितृसेवितशेषभोजनाकरणे दोषस्मरणाच्च । एवञ्चेष्टैस्सह भुज्यतामित्यभ्यनुज्ञारूपमुत्तरं विप्रैर्देयमित्युशनसा सूचितमिति मन्तव्यम् । देवलोपि पितृयज्ञविधानेन पिण्डदाने विशेषमाह—

ततस्सर्वाशनं पात्रे गृहीत्वा विधिवत्स्वयम् ।

तेषामुच्छेषणस्थाने तेन पात्रेण निक्षिपेत् ॥

तेषां भुक्तवतां ब्राह्मणानां उच्छेषणस्थाने उच्छिष्टसन्निधावित्यर्थः । पात्रेण निक्षेपो नैयमिको न भवति । यदाह मरीचिः—

पात्राणां खड्गपात्रेण पिण्डदानं विधीयते ।
राजतौदुम्बराभ्यां वा हस्तेनैवाथवा पुनः ॥

हस्तेनेति पक्षः श्रेयानित्यर्थं एवकारः कृतः, न पुनरवधारणार्थः । तथात्वे पूर्वापरविरोधो देवलवचनविरोधश्च स्यात् । पिण्डनिर्वापणस्थाने प्रथमं यत्कर्तव्यं तद्ब्रह्माण्डपुराणे दर्शितं—

सव्योत्तराभ्यां पाणिभ्यां कुर्यादुल्लेखनं द्विजः ।
प्रघर्षणं ततः कुर्याच्छ्राद्धकर्मण्यतन्द्रितः ॥
खण्डनं पेषणं चैव तथैवोल्लेखनाक्रिया ।
सकृदेवपितॄणां स्याद्देवानां तु त्रिरुच्यते ॥

खण्डनं बर्हिरादेश्छेदनम् । पेषणं भूमिघर्षणादिकम् । उल्लेखनक्रिया पिण्डनिर्वापणलेखाकरणम् । केनोल्लेखनं कार्यमित्यपेक्षायामुक्तं तत्रैव—

वज्रेण वा कुशैर्वाऽपि उल्लिखेत्तु महीं द्विजः ।

इति । वज्रेण स्फ्येनेत्यर्थः । 'वज्रो वै स्फ्यः' इति श्रुतेः । पारस्करेण तु स्फ्यशब्देनैवोक्तं—

कराभ्यामुल्लिखेत् स्फ्येन कुशैर्वाऽपि महीं द्विजः ।

इति। कराभ्यां गृहीतेन स्फ्येन गृहीतैः कुशैर्वा महीं लिखेदित्यर्थः। अत्र मन्त्रमाह कात्यायनः—'उल्लिख्यापहताः' इति। 'अपहता असुरा रक्षांसि पिशाचा वेदिषदः' इति मन्त्रेणोल्लिख्येत्यन्वयः। अनेन मन्त्रेण स्फ्येनोल्लेखनं पितृयज्ञवदित्यनेन प्राप्तम्। उल्लेखनानन्तरं उल्लिखितदेशमवोक्षेत् 'स्फ्येन तेषामुल्लिखेदपहता असुरा रक्षांसि पिशाचा वेदिषद इति तामवोक्ष्य' इत्याश्वलायनेन पिण्डपितृयज्ञधर्मकथनेऽभिधानात्। रेखां दक्षिणाप्राचीमुल्लिखेत्, 'सर्वकर्मणि तां दिशम्' इति परिभाषायां तेनैवोक्तत्वात्। अवोक्षितदेशे कुशानास्तृणुयात्, 'क्षिपेत् कुशांस्तत्र च दक्षिणाग्रान्' इति पुराणेऽभिधानात्। इदमपि पिण्डपितृयज्ञवदित्यनेनैव प्राप्तं, सकृदाच्छिन्नैरवस्तीर्येति पिण्डपितृयज्ञे विहितत्वात्। एवञ्च दक्षिणाग्रत्वमात्रमेव पौराणिको विशेषः। कुशालाभे विष्णुधर्मोत्तरेऽभिहितं—

पिण्डनिर्वपणं कार्यं कुशालाभे विचक्षणैः।
काशेषु राजदूर्वासु पवित्रे परमे स्मृते॥

राजदूर्वासु अतिदीर्घदूर्वासु। कुशास्तरणे विशेषो वायुपुराणे दर्शितः।

सकृदेवास्तरेद्दर्भान् पिण्डार्थं दक्षिणामुखः।
प्राग्दक्षिणाग्रान्नियतः॥

इति । एवञ्च दक्षिणाग्रतया सह दक्षिणाप्रागग्रताया विकल्पो वेदितव्यः । दर्भास्तरणानन्तरं सुमन्तुः—

असाववनेनिङ्क्ष्वेति पुरुषं पुरुषं प्रति।
त्रिस्त्रिरेकेन हस्तेन विदधीतावनेजनम् ॥

असावित्यत्र पित्रादीनां गोत्रसहितनामग्रहणं सम्बोधनरूपेण कृत्वा अवनेनिङ्क्ष्वेति वक्तव्यं,

पिण्डोदकप्रदानं तु नित्यनैमित्तिकेष्वपि ।
आलभ्य नाम गोत्रेण कर्तव्यं सर्वदैव हि ॥

इति व्यासस्मरणात् । आलभ्य पित्रादीन् सम्बोध्येत्यर्थः । एकेन हस्तेनेत्यञ्जलिनिवृत्त्यर्थमुक्तम् । तथाच सुमन्तुः—

श्राद्धे सेचनकाले तु पाणिनैकेन दीयते ।
तर्पणे तूभयं कुर्यादेष एव विधिस्सदा ॥

इति । एकेन पाणिना सव्येतरेण ।

अपसव्येन हस्तेन निर्वपेदुदकं भुवि ।

इति मनुस्मरणात् । अपसव्यहस्ते प्रदेशविशेषो मदालसयोक्तः—

पितृतीर्थेन तोयं च दद्यात्तेभ्यस्समाहितः ।

इति । तेभ्यः पितृभ्यः । चशब्दात्सतिलं तोयं प्रसेतव्यम् । तथाचोशनसोक्तं— 'तिलमिश्रितोदकेनासिच्य दर्भास्तीर्णायां भूमौ पिण्डान् दद्यात्' इति । कात्यायनस्त्ववनेजनमुदपात्रेण कर्तव्यमित्याह— 'उदपात्रेणावनेजयत्यसाववनेनिङ्क्ष्वेति यजमा-

नस्य पितृप्रभृतींस्त्रीन्' इति। आश्वलायनस्त्ववनेजने मन्त्रान्तरमाह—'प्राचीनावीती रेखां त्रिरुदकेनोपनयेच्छुन्धन्तां पितरः शुन्धन्तां पितामहाः शुन्धन्तां प्रपितामहाः' इति। कात्यायनस्त्ववनेजनानन्तरं बर्हिरास्तरणं कार्यमित्याह—'उपमूलं च सकृदाच्छिन्नं रेखायां कृत्वा यथाऽवनिक्तं पिण्डान् ददाति' इति। अवनेजनबर्हिरास्तरणयोः पौर्वापर्यविकल्पे यथास्वशाखं व्यवस्था। एवमेवावनेनिक्ष्व शुन्धन्तां पितर इत्यादिमन्त्राणामपि यथास्वशाखं व्यवस्था। एवमेवावनेजनकरणभूतहस्तोदपात्रयोरपि। यथाऽवनिक्तं पिण्डदाने मन्त्रानाह कात्यायनः 'असावेतत्ते इति, ये च त्वमन्वित्ति चैके' इति। असावित्यत्र पित्रादीनां सम्बोधनरूपेण गोत्रसहितनामग्रहणं कृत्वा एतत्ते इति वक्तव्यम्।

पिण्डोदकप्रदानं तु नित्यनैमित्तिकेष्वपि।
आलभ्य नाम गोत्रेण कर्तव्यं सर्वदैव हि॥

इति व्यासस्मरणात्। एवं च अमुकगोत्रामुकशर्मन्नेतत्ते इति पिण्डदानमन्त्र उन्नेयः। 'ये च त्वामनु इति चैके' इति पक्षे मन्त्रत्रयेऽप्येतत्ते इत्यस्मादनन्तर 'ये च त्वामनु' इति मन्त्रशेषो द्रष्टव्यः। आश्वलायनस्त्वन्यथा पिण्डदानमन्त्रानाह—'एतत्तेऽसौ, ये च त्वामनु' इति। अत्रापि असावित्यत्र संबोधनरूपेण पित्रादीनां गोत्रसहितनामग्रहणं कर्तव्यम्। नन्वेतत्ते इत्यत्रैतदिति कथं नपुंसकलिङ्गनिर्देशः, पिण्डस्यैतच्छब्दा-

भिधेयत्वात्तस्य च पुल्लिङ्गत्वात् । अत एव गोभिलेन—'असावेष ते पिण्डो ये च त्वामनु' इत्युक्तम् । अत्र केचित् एतत्ते पिण्डरूपमन्नमित्यध्याहारः कार्य इत्याहुः, तदयुक्तम् । अगत्याऽध्याहार आश्रयणीयः । अस्ति चात्र गतिः 'कुद्धस्य पिण्डं पतति' इति वृद्धप्रयोगदर्शनात् । नपुंसकलिङ्गोपि भूरिप्रयोगसिद्धः पिण्डशब्दोस्ति । तेन पिण्डदानमन्त्रेऽपि एतत्पिण्डं तवेत्यध्याहारं विनैवार्थोऽवगन्तव्यः । अवनेजनादिकं च सर्वं पितृयज्ञवदिस्यनेनैव प्राप्तम् । सतिलत्वमात्रं तु विशेषः। पिण्डेऽपि सतिलत्वरूपो विशेषो मदालसयोक्तः—

सतिलेन ततोऽन्नेन पिण्डांस्त्रीनेव पुत्रकः ।
पितॄनुद्दिश्य दर्भेषु दद्यादुच्छिष्टसंनिधौ ॥

पितॄन् यजमानस्य जनकादीनित्यर्थः । तथाच कार्ष्णाजिनिः—

तेषां लोकान्तरस्थानां बान्धवैर्नामगोत्रतः ।
अपसव्येन दर्भेषु पिण्डा देयास्त्रयस्तु वै ॥

तेषां पितृपितामहप्रपितामहानाम् । अपसव्येन दक्षिणहस्तेन । लोकान्तरस्थानामित्यत्र मृतानामिति ज्ञापयितुमाह स एव—

नाना तु जातय इह तिर्यग्योनिषु जातिषु ।
पिण्डभाजो भवन्त्येते तासुतासु च योनिषु ॥

इह इहलोक इत्यर्थः । अनेन पिण्डदानरूपश्राद्धेऽपि यजमानस्य पूर्वपुरुषा एव देवताः न वस्वादय इति गम्यते । एवञ्च यदुक्तं स्मृत्यन्तरे—

प्रथमो वरुणो देवः प्रजापतिस्तथाऽपरः ।
तृतीयोऽग्निस्स्मृतः पिण्ड एष पिण्डविधिस्स्मृतः ॥

इति, तत् न वरुणादीनां देवतात्वप्रतिपादनपरं, किंतु यथा वसुरुद्रादित्यस्वरूपाः पितरः श्राद्धदेवता इति याज्ञवल्क्येनान्नत्यागादौ वस्वादिरूपेण पित्रादयो ध्यातव्याः इत्येवंपरतयोक्तं, तथा पिण्डदाने वरुणादिरूपेण पित्रादयो ध्यातव्याः इत्येवंपरतयोक्तमिति मन्तव्यम् । तेन यथाऽन्नत्यागे वस्वादिरूपान् सपत्नीकान् पित्रादीन् चतुर्थ्यन्तेन पित्रादिपदेन गोत्रनामसहितेनोद्दिश्यान्नत्यागः क्रियते तथैतत्ते इति मन्त्रोच्चारणानन्तरं वरुणादिरूपान् सपत्नीकान् पित्रादीनुद्दिश्य पिण्डत्यागः कर्तव्यः । अथवा आवाहनादौ अन्नत्यागपर्यन्ते पिण्डनिर्वापणादौ च सर्वत्रात्मानमनिरुद्धत्वेन प्रद्युम्नसंकर्षणवासुदेवरूपेण पितृपितामहप्रपितामहांश्च यथाक्रमेण ध्यात्वा आवाहनादिकं कुर्यात् । तथाच भविष्यत्पुराणे—

अनिरुद्धस्स्वयं देवः प्रद्युम्नस्तु पिता स्मृतः ।
सङ्कर्षणस्तज्जनको वासुदेवस्तु तत्पिता ॥

स्वयं श्राद्धकर्ता अनिरुद्धो देवः । श्राद्धकर्तुः पिता प्रद्युम्नस्स्मृतः । तज्जनकः श्राद्धकर्तृपितृजनकः सङ्कर्षणस्स्मृतः । तत्पिता श्राद्धकर्तृपितृजनकपिता वासुदेवस्स्मृत इत्यर्थः । पिण्डदाता पिण्डदानसमये सव्यं जान्वाच्य पिण्डदानं कुर्यादिति वायुपुराणेऽभिहितं—

मधुसर्पिस्तिलयुतान् त्रीन् पिण्डान्निर्वपेद्बुधः ।
जानु कृत्वा तथा सव्यं भूमौ पितृपरायणः ॥

सव्यं जानु भूमौ कृत्वा सव्यं जान्वाच्येत्यर्थः । एतत् पितृयज्ञवदित्यनेनैव सिद्धम् । त्रीन् पिण्डानिति वदन् मात्रादीनां पृथक्पिण्डनिर्वापणाभावं दर्शयति । तेन सपत्नीकस्य पित्रादेरेकैकः पिण्डो निर्वपणीयः । पिण्डप्रमाणमाह व्यासः—

द्विहायनस्य वत्सस्य विशसास्ये यथासुखम् ।
तथा कुर्यात्प्रमाणं तु पिण्डानां व्यासभाषितम् ॥

द्विहायनो द्विवर्षो वत्सः । प्रमाणान्तराण्याहाङ्गिराः —

कपित्थबिल्वमात्रान् वा पिण्डान् दद्याद्विधानतः ।
कुक्कुटाण्डप्रमाणान्वा यदि वाऽऽमलकैस्समान् ॥
बदरेण समान्वाऽपि दद्याच्छ्रद्धासमन्वितः ।

इति । आमलके तु विशेषमाह मरीचिः—

आर्द्रामलकमात्रांस्तु पिण्डान् कुर्वीत पार्वणे ।

अमावास्याख्ये पार्वणे । पिण्डपितृयज्ञानन्तरं—

पितृयज्ञं तु निर्वर्त्य विप्रश्चन्द्रक्षयेऽग्निमान् ।
पिण्डान्वाहार्यकं श्राद्धं कुर्यान्मासानुमासिकम् ॥

इति वचनेन यद्विहितं तदिदममावास्यारूपपर्वसंबन्धलक्षणप्रवृत्तिनिमित्तेन योगेन रूढ्या वा पार्वणशब्देनोच्यते । तथाच शातातपः—

दर्शश्राद्धं च यत्प्रोक्तं पार्वणं तत्प्रकीर्तितम् ।

इति । तत्र ब्राह्मणनिमन्त्रणादिसर्वधर्माणामाम्नानात् श्राद्धान्तराणां सर्वेषां प्रकृतिभूतं तदित्यवगन्तव्यं, तद्विकृतिभूतमितरदेकोद्दिष्टादिश्राद्धम् । एवञ्च पार्वणग्रहणमन्तरेण आर्द्रामलकप्रमाणस्य प्रकरणादेव पार्वणार्थत्वे लब्धे पार्वणग्रहणं विस्पष्टार्थम् । एतेषु प्रमाणेषु शक्त्यनुसारेण व्यवस्था कल्प्या। प्रमाणान्तरमपि ब्रह्माण्डपुराणे वचोभङ्ग्या दर्शितं—

त्रीन् पिण्डानानुपूर्व्येण साङ्गुष्ठमुष्टिबन्धनात् ।

इति । साङ्गुष्ठमुष्टिग्राह्यप्रमाणकात् किञ्चिदभ्यधिकानीत्यर्थः । आनुपूर्व्येण दक्षिणापवर्गत्वदक्षिणाप्रागपवर्गत्वादिविरुद्धानुपूर्व्येण । पितृयज्ञवदित्यतिदेशेन पिण्डानां दक्षिणापवर्गत्वस्य दक्षिणाप्रागपवर्गत्वस्य वा प्राप्तत्वात् । पिण्डनिर्वापणानन्तरं मनुः—

न्युप्य पिण्डान् पितृभ्यस्तु प्रयतो विधिपूर्वकम् ।
तेषु दर्भेषु तं हस्तं निमृज्याल्लेपभागिनाम् ॥

प्रपितामहस्य पितृपितामहप्रपितामहाः लेपभागिनः । 'लेपभाजश्चतुर्थाद्याः' इति मत्स्येनाभिधानात् । लेपनिर्मार्जनमन्त्रमाह विष्णुः—'अत्र पितरो मादयध्वं इति दर्भमूलेषु करावघर्षणम्' इति । करावघर्षणं हस्तलेपनिर्मार्जनम् । करावघर्षणानन्तरं कात्यायनः—'अत्र पितर इत्युक्त्वा उदङ्ङास्ते आतमनादात्मानमावृत्यामीमदन्त इति जपति' इति । दक्षिणमात्मानमावृत्य आतमनान् प्राणायामेन वायुपीडावधि उदङ्मुख

आसीत । ततः यथाशक्यमनुच्छ्वसन्नेवाभिपर्यावृत्य 'अमी मदन्त' इति जपित्वा प्राणान्मोचयेत् इति। कर्मप्रदीपे विशेष उक्तः—

वामेनावर्तनं केचिदुदगन्तं प्रचक्षते ।

आवृत्य प्राणानायम्य पितॄन् ध्यायन् यथार्हतः ॥

जपंस्तेनैव चावृत्य ततः प्राणान् प्रमोचयेत् ।

वामेनावर्तनं सव्येनावर्तनम् । उदगन्तं यावदावर्तनेनोदङ्मुखो भवति तावदावर्तनं कार्यं नाधिकावर्तनमिति गौतमादिव्यतिरिक्ता मुनयः प्रचक्षते ।

सर्वं गौतमशाण्डिल्यौ शाण्डिल्यायन एव च ॥

इति तत्रैवाभिधानात् । जपन् अमी मदन्तेति तेनैवावृत्य वामेनैव दक्षिणामुखान्तमावृत्य प्राणान्मोचयेदुच्छ्वसेदित्यर्थः । विष्णुस्तु न्युप्तपिण्डानुमन्त्रणादिवासोदशादानान्तमाश्वलायनोक्तपिंडपितृयज्ञानुसारेणाह—'दत्वा च पिण्डान्निवृतताननुमन्त्रयीतात्र पितरो मादयध्वं यथाभागमावृषायध्वम्' इति । ततस्सव्यावृदुदङ्मुखः पराचृत्य यथाशक्ति प्राणानां निरोधान्तं कृत्वा पर्यावृत्यामी मदन्तेत्यनुमन्त्र्य शेषावघ्राणं कृत्वा शुन्धन्तां पितर इति पूर्ववदुदकं निनीय पिण्डोपरि ततोसावभ्यङ्क्ष्वेत्यभ्यञ्जनं दद्यादङ्क्ष्वेत्यञ्जनमथ वस्त्रमभावे दशामूर्णां वा 'एतद्वः पितरो वासो मानोतोन्यत्पितरो युङ्ध्वम्' इति । पिण्डानुप्त्वा शेषावघ्राणं पात्रस्थशेषाभिघ्राणं पूर्ववदुदकनिनयनं तिलमिश्रोदकावनेजनं ततोऽवनेजनानन्तरं असावभ्यङ्क्ष्व इति मन्त्रेणाभ्यञ्जनं

पिण्डोपरि प्रतिपिण्डं दद्यात् असावित्यत्र संबोधनरूपेण पित्रादीनां नामग्रहणं, असाववङ्क्ष्वेति मन्त्रेण पिण्डोपरि प्रतिपिण्ड-मञ्जनं दद्यादेतद्व इति मन्त्रेण प्रतिपिण्डं यथालाभं दशादिकं दद्यात्। यत्तु शङ्खेनोक्तं—

> क्षुमासूत्रं प्रदातव्यं कार्पासमथवा नवम्।
> दशां विवर्जयेत्प्राज्ञो यद्यप्यहतवस्त्रजाम्॥

इति। क्षुमा अतसी। अत्र यद्यपि नित्यवद्दशाप्रतिषेधः प्रतिभाति, तथाऽपि पूर्वोक्तस्मृतौ दशाया विधानात् षोडशिग्रहणाग्रहणवद्विकल्पोऽनुसन्धेयः। वस्त्राभावे पुराणेऽप्युक्तं—

> सूत्राण्यूर्णा दशा वाऽपि पतिर्लोम प्रदापयेत्॥

इति। पतिः यजमानः। लोमप्रदानपक्षः पूर्ववयसि न भवति यदाह कात्यायनः—'एतद्वः पितरः, इति सूत्राणि प्रतिपिण्डं वयस्युत्तरे यजमानस्य लोमानि वा' इति। उत्तरे वयसि पञ्चाशद्वर्षादूर्ध्वमित्यर्थः। वाशब्दादुत्तरे वयसि लोमपक्षः पक्षान्तराण्यपि। एतत्सर्वं 'पितृयज्ञवत्' इत्यनेन प्राप्तम्। अवनेजने तु पितृयज्ञाद्विशेषमाह व्याघ्रः—

> अद्भिः प्रक्षाळ्य तत्पात्रं प्रतिपिण्डं तु पूर्ववत्।
> कृत्वाऽवनेजनं कुर्यात्पिण्डपात्रमधोबिलम्॥

इति। पूर्ववत् पिण्डप्रदानात्पूर्वं विहितावनेजनवत्। एवञ्च द्वितीयावनेजनमपि पिण्डपात्रप्रक्षाळनोदकेन कार्यं, न तु पितृयज्ञवदुदकान्तरेण। अत एव—

पात्रानिर्णजनेनैव पुनः प्रत्यवनेजयेत् ।

इति पुराणे एवकारः कृतः । एतद्व इति मन्त्रेण दशादानानन्तरं पितृयज्ञाद्विशेषमाह व्याघ्रः—

गन्धपुष्पाणि धूपं च दीपं चैव निवेदयेत् ।

एतद्वः पितरो वासोदशां दत्वा पृथक् पृथक् ॥

एतद्व इति मन्त्रेण प्रतिपिण्डं वाससो दशां दत्वा गन्धादिकमपि प्रतिपिण्डं दद्यादित्यर्थः। यत्तु विष्णुनोक्तं–'पिण्डनिर्वापणं कृत्वाऽर्घ्यपुष्पधूपानुलेपनान्नाद्यभक्ष्यभोज्यानि निवेदयेत् । उदपात्रं मधुघृततिलैस्संयुक्तं चेति' इति तत् पिण्डनिर्वापणानन्तरमर्घ्यादिविषेषप्राप्त्यर्थम् । अन्यथा—

न्युप्य पिण्डान पितृभ्यस्तु प्रयतो विधिपूर्वकम् ।

तेषु दर्भेषु तं हस्तं निमृज्याल्लेपभागिनाम् ॥

इति मनूपादेष्टयुक्ततरक्रमविरोधापत्तेः । तेनार्घ्यादिप्रदर्शनमात्रार्थं विष्णुवचनं, नतु पिण्डनिर्वापणानन्तर्यप्रतिपादनार्थमपीति न व्याघ्रोक्तानन्तर्यपारिपन्थीति मन्तव्यम् । यत्तु मत्स्यपुराणेऽभिहितं—

गन्धधूपादिकं दद्यात्कृत्वा प्रत्यवनेजनम् ।

इति, तत् प्रत्यवनेजनात्पूर्वं न गन्धादिदानमित्येवंपरम् । न तु प्रत्यवनेजनानन्तरमेव गन्धादिदानं कर्तव्यमित्येवंपरम्। 'प्रकृतेः पूर्वोक्तत्वादपूर्वमन्ते स्यात्' इति न्यायेनावनेजनीनन्तरमभ्यञ्जनादिदानं तदनन्तरं गन्धादिदानमिति न्यायमूलकक्रमाभि-

धायकप्रागुक्तव्याघ्रवचनविरोधापत्तेः। अतः एतदपि न व्याघ्रोक्तानन्तर्यपरिपन्थि । यतएव प्रत्यवनेजनगन्धादिदानयोः परस्परक्रमपरं न मत्स्यपुराणवचनम् । अत एव विष्णुना प्रकृतिभूतपिण्डपितृयज्ञक्रम एवात्रोक्तः—'शुन्धन्तां पितर इति पूर्ववदुदकानिनयनं पिण्डोपरि ततोसावभ्यङ्क्ष्वेत्यभ्यञ्जनं दद्यात्' इति । तस्माद्व्याघ्रवचनावगतक्रमेण दर्शां दत्वाऽनन्तरं गन्धादिना पिण्डार्चनं कार्यमिति सिद्धम् । पिण्डार्चनं प्रकृत्य पुराणे—

यत्किञ्चित्पच्यते गेहे भक्ष्यं भोज्यमगर्हितम् ।
अनिवेद्य न भोक्तव्यं पिण्डमूले कथञ्चन ॥

तेन सर्वस्मादादाय पिण्डार्चने उपहारो देय इत्यभिप्रायः। पिण्डार्चनानन्तरं कर्तव्यमाह बृहस्पतिः—

धूपदीपैर्माल्यगन्धैः तदा वस्त्राञ्जनादिना ।
समभ्यर्च्योदपात्रं तु तेषामुपरि निक्षिपेत् ॥

धूपदीप इत्यादिपाठक्रमो नात्र विवक्षितः श्लोकसिद्धिपरत्वात्। ततश्चायमर्थः—अभ्यञ्जनाञ्जनवस्त्रगन्धमाल्यधूपदीपसार्ववर्णिकाद्योपहारैः पिण्डान् समभ्यर्च्य तेषां पिण्डानामुपरि पात्रपूर्णमुदकं तेनैव पात्रेण निनयेदिति। उदपात्रनिनयनानन्तरं विष्णुः—"अथैनानुपतिष्ठते 'नमो वः पितरः' इत्यादिना 'मनोन्वाहुवामहे' इत्यृगन्तेन। अथैतान् पिण्डांश्चालयेत् 'परेत नः पितरस्सोम्या गम्भीरेभिः पथिभिः पूर्व्येभिः दत्वाऽथास्मभ्यं द्रविणेह भद्र रयिं

च नस्सर्ववीरान् नियच्छत'' इति। नमो वः पितर इत्यादिना मन्त्रेण आश्वलायनपठितेनेति शेषः। आश्वलायनोक्तपितृयज्ञकल्पानुसारित्वाद्विष्णुस्मृतेः। मनोऽन्वाहुवामह इति त्यृचः अन्ते यस्य नमो वः पितर इत्यादिमन्त्रस्य असौ मनोऽन्वाहुवामह इति त्यृचान्तः। तेनात्र नमस्काराञ्जलिं बध्वा उपस्थानं कर्तव्यं, मन्त्रलिङ्गानुगुण्यात्। अत एव नमस्काराञ्जलिमाश्रित्य नियममात्रमुक्तं ब्रह्माण्डपुराणे--

सव्योत्तराभ्यां पाणिभ्यां वदेन्मन्त्रमिमं सदा।
नमो वः पितर इष इति सम्यगतन्द्रितः॥

'नमो वः पितरः' इति सम्यग्वदतः सव्योत्तराभ्यां पाणिभ्यां दक्षिणपाणिमुत्तानं कृत्वा तदुपरि सव्यपाणिना अधोमुखेन नमस्काराञ्जलिं बध्वा 'नमो वः पितर इषे' इतीदमाश्वलायनोक्तं मन्त्रं वदेदित्यर्थः। पिण्डचालनानन्तरं 'अग्ने तमद्य' इत्येतया ऋचा अग्नौकरणाग्निं प्रतिगच्छेत्।

'यदन्तरिक्षम्' इत्येतयर्चा गार्हपत्यं प्रतिगच्छेत्।

तथाच पिण्डपितृयज्ञकल्पे आश्वलायनेनोक्तं--'अग्निं प्रत्येयादग्ने तमद्याश्वं न स्तोमैः' इति। गार्हपत्यं 'यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा जिहिंसिम अग्निर्मा तस्मादेनसो गार्हपत्यः प्र मुञ्चतु दुरिता यानि चकृम करोतु मामनेनसम्' इति। एवमुक्तमुल्लेखनाद्यग्निसमीपगमनान्तं पिण्डदानविधानं मातामहाद्यर्थपिण्डदानेऽप्यवगन्तव्यम्—

मातामहानामप्येवं दद्यादाचमनं ततः ।

इति याज्ञवल्क्येनोक्तत्वात् । यथा पित्रादीनां विप्रनिमन्त्रणादिनद्विसर्जनान्तश्राद्धकल्पः एवं मातामहादीनामपि विप्रनिमन्त्रणादि कृत्स्नश्राद्धकल्पो ज्ञेय इत्यर्थः । मातामहादीनामप्येवं पित्रादीनामिव पिण्डदानं कुर्यादिति । तथाच मदालसावाक्यं—

तद्वन्मातामहानां च दद्यात्पिण्डान् यथाविधि ।

इति । तद्वत् पितृवदित्यर्थः । यद्यप्यस्मिन् वाक्ये पितृवर्गस्य पिण्डदानविधानमुक्त्वा तद्वदित्यनेन मातामहवर्गस्य पिण्डदानाभिधानात् पितृवर्गार्थपिण्डदानविधिं समाप्य मातामहवर्गार्थपिण्डदानं भिन्नतन्त्रतया कार्यमिति प्रतिभाति। तथाऽपि कृत्स्नश्राद्धानुष्ठानं समानतन्त्रतया वर्गद्वयस्येति 'तन्त्रं वा वैश्वदैविकम्' इत्यत्रैवोक्तत्वात् पिण्डदानमपि समानतन्त्रतयैव वर्गद्वयस्य कार्यम् । अत एव पुराणे समानतन्त्रेणानुष्ठानमुक्तं—

उपमूलात् समास्तीर्य दर्भानुच्छिष्टसन्निधौ ।

कृत्वाऽवनेजनं दद्यात्त्रीन् त्रीन् पिण्डान्यथाक्रमम् ॥

उपमूलात मूलसमीपात् त्रीन् इति वीप्सया वर्गद्वयस्य समानतन्त्रेण पिण्डनिर्वपणमित्युक्तम् ॥

इति स्मृतिचन्द्रिकायां पिण्डदानविधिः.

---

अथोपदेशातिदेशसंकलनतया सम्पन्नः पिण्डदानप्रयोग उच्यते—श्राद्धार्थपाकसिद्धात्सर्वविधादन्नात् षट्पिण्डपर्याप्तं किञ्चिदभ्यधिकमन्नं पात्रान्तरे समुद्धृत्य शेषमप्यस्ति किं क्रियतामिति पृष्ट्वा इष्टैस्सहोपभुज्यतां इत्येवंविधमनुज्ञारूपमुत्तरं विप्रदत्तं श्रुत्वा अनन्तरं स्फ्येन दर्भैर्वा 'अपहता असुरा रक्षाꣳसि पिशाचा वेदिषदः' इति मन्त्रेण सव्योत्तराभ्यां पाणिभ्यां पिण्डस्थाने दक्षिणाप्राचीमेकां रेखां कृत्वा ततो दक्षिणतो द्वितीयां रेखां प्रथमरेखावत्कुर्यात् । ततो रेखाद्वयसमीपभूमावुद्धननं कृत्वा तूष्णीं द्विरभ्युक्ष्य सकृदाच्छिन्नमुपमूललूनं बर्हिर्दक्षिणाप्रागग्रं दक्षिणाग्रं वा पृथक्पृथग्रेखाद्वये संस्तीर्य दक्षिणेन हस्तेन पितृतीर्थेन प्रथमरेखागतबर्हिषि पिण्डस्थाने 'शुन्धन्तां पितरः शुन्धन्तां पितामहाः शुन्धन्तां प्रपितामहाः' इति त्रिभिर्मन्त्रैस्तिलमिश्रमुदकं निनीय द्वितीयरेखागतबर्हिषि पिण्डस्थानेषु 'शुन्धन्तां मातामहाः शुन्धन्तां मातुःपितामहाः शुन्धन्तां मातुःप्रपितामहाः' इति मन्त्रैस्तिलमिश्रमुदकं निनयेत् । अथवा प्रथमरेखायां 'पितरमुकगोत्रामुकशर्मन् अवनेनिङ्क्ष्व, पितामहामुकगोत्रामुकशर्मन्नवनेनिङ्क्ष्व, प्रपितामहामुकगोत्रामुकशर्मन्नवनेनिङ्क्ष्व' इति मन्त्रैर्निनयेत् । द्वितीयरेखायां 'मातामहामुकगोत्रामुकशर्मन्नवनेनिङ्क्ष्व, मातुःपितामहामुकगोत्रामुकशर्मन्नवनेनिङ्क्ष्व, मातुःप्रपितामहामुकगोत्रामुकशर्मन्नवनेनिङ्क्ष्व' इति मन्त्रैर्निनयेत् ।

ततो दक्षिणामुखः सव्यं जान्वाच्य घृतमधुतिलमिश्रमन्नं पूर्वप्रकरणोक्तार्द्रामलकाद्यन्यतमप्रमाणकं पिण्डं कृत्वा 'एतत्ते पितरमुकगोत्रामुकशर्मन् ये च त्वामनु' इत्युक्त्वा पित्रेऽमुकगोत्रायामुकशर्मणे वसुरूपाय सपत्नीकायेदमन्नं न ममेत्युक्त्वा प्रथमपिण्डस्थाने अवाचीनपाणिना प्रक्षिपेत्। एतत्ते पितामहामुकगोत्रामुकशर्मन् ये च त्वमन्वित्युक्त्वा पितामहायामुकगोत्रायामुकशर्मणे प्रजापतिरूपाय सपत्नीकायेदमन्नं न ममेत्युक्त्वा द्वितीयस्थाने द्वितीयपिण्डं प्रक्षिपेत्। एवमेतत्ते प्रपितामह अमुकगोत्रामुकशर्मन् ये च त्वामन्वित्युक्त्वा प्रपितामहायामुकगोत्रायामुकशर्मणेऽग्निरूपाय सपत्नीकायेदमन्नमित्युक्त्वा तृतीयस्थाने तृतीयं पिण्डं प्रक्षिपेत्। एते च पिण्डाः दक्षिणापवर्गा दक्षिणाप्रागपवर्गा वा बर्हिस्स्तरणानुसारेण कार्याः। ततो द्वितीयरेखायामेवमेव पिण्डस्थानेषु पिण्डान् प्रक्षिपेत्। एतत्ते मातामह अमुकगोत्रामुकशर्मन् ये च त्वामनु इत्युक्त्वा मातामहायामुकगोत्रायामुकशर्मणे वरुणरूपाय सपत्नीकायेदं न ममेति प्रथमपिण्डे विशेषः। मातुःपितामहमातुःप्रपितामहयोः प्रजापत्यग्निरूपाभ्यामिदं न ममेति पिण्डान् प्रक्षिपेत्। एते च पिण्डाः दक्षिणापवर्गाः दक्षिणाप्रागपवर्गा वा बर्हिस्स्तरणानुसारेण कार्याः। एवं आश्वलायनमतानुसारेण पिण्डदानमन्त्रा दर्शिताः। कात्यायनादिमतानुसारेण पिण्डदानमन्त्राः पूर्वप्रकरण एव दर्शिताः। तन्मतानुसारिभिरिहाप्यनुसन्धेयाः। एवं

पिण्डान् दत्वा रेखायामास्तीर्णे बर्हिषि 'अत्र पितरो मादयध्वम्' इत्येतावन्मात्रेण हस्तलेपनिमार्जनं कृत्वा 'अत्र पितरो मादयध्वं यथाभागमावृषायध्वम्' इत्युक्त्वा अप्रदक्षिणावर्तनेनोदङ्मुखो भूत्वा यथाशक्त्यनुच्छ्वसन्नासित्वाऽभिपर्यावृत्य 'अमीमदन्त पितरो यथाभागमावृषायीषत' इति षट्पिण्डान् सकृदेव अनुमन्त्र्य उच्छ्वसेत् । ततस्तूष्णीं पिण्डपात्रस्थशेषमवघ्राय प्रक्षाळनोदकेन 'शुन्धन्तां पितरः' इत्यादिभिष्षड्भिर्मन्त्रैः पितः अमुकगोत्र अमुकशर्मन् अवनेनिक्ष्व इत्यादिभिष्षड्भिर्मन्त्रैष्षट्सु पिण्डेषु पूर्ववदवनेजनं कृत्वा पिण्डपात्रमधोमुखं कुर्यात् । ततोऽमुकगोत्र अमुकशर्मन् अभ्यङ्क्ष्वेति यथानामधेयं षट्सु पिण्डेषु तैलं दत्वा अमुकशर्मन् अङ्क्ष्वेति यथानामधेयं षट्सु पिण्डेषु अञ्जनं दद्यात् । 'एतद्वः पितरो वासो मानोतोन्यत्पितरो युङ्ध्वम्' इतिमन्त्रेण वासोदशादिकं षट्पिण्डेषु दद्यात् । ततस्तूष्णीमर्घ्यगन्धमाल्यधूपदीपसार्ववर्णिकान्नोपहारैर्मधुघृततिलसहितोदपात्रेण प्रतिपिण्डमर्चनं कुर्यात् । ततः पात्रपूर्णमुदकं तेनैव पात्रेण सर्वेषां पिण्डानामुपरि निनयेत् । दक्षिणं पाणिमुत्तानं कृत्वा तदुपरि सव्यपाणिनाऽधोमुखेन नमस्काराञ्जलिं बध्वा 'नमो वः पितर इषे नमो वः पितर ऊर्जे नमो वः पितरश्शुष्माय नमो वः पितरो घोराय नमो वः पितरो जीवाय नमो वः पितरो रसाय स्वधा वः पितरो नमो वः पितरो नम एता युष्माकं

पितर इमा अस्माकं वो जीवन्त इह सन्तस्स्याम मनोऽन्वाहुवामहे नाराशंसेन सोमेन पितृणां च मन्वभिः' इति तिसृभि ऋग्भिश्च सर्वान् पिण्डान् सकृदेवोपतिष्ठेत् । ततः 'परेत पितरस्सोम्यासो गम्भीरेभिः पथिभिः पूर्वेभिः । दत्त्वायास्मभ्यं द्रविणेह भद्रं रयिं च न स्सर्ववीरं नियच्छत' इति मन्त्रेण पिण्डांश्चालयेत् । ततः 'अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रं हृदि स्पृशम् । ऋध्यामातओहैः' इत्येतयर्चाऽग्नौकरणाग्निं प्रतिगच्छेत्। 'यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा जिहिंसिम। अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु दुरिता यानि चकृम करोतु मामनेनसम्' इति मन्त्रेण गार्हपत्यं प्रतिगच्छेत्। एवमभ्यञ्जनादिकमाश्वलायनमतानुसारेणोक्तम् । येषां स्वगृह्ये प्रकारान्तरमनुक्तं तेषामाश्वलायनोक्तमभ्यञ्जनादिकमनुष्ठेयं, विष्णुस्मृतिपरिग्रहेण स्मार्ततया सर्वसाधारणत्वात् ॥

इति स्मृतिचन्द्रिकायां पितृयज्ञधर्मकपिण्डदानप्रयोगः.



## अथान्यान्यपि पिण्डदानविषयाणि कानिचिद्वचनानि लिख्यन्ते

तत्रबृहस्पतिः—

सर्वस्मात्प्रकृतादन्नात् पिण्डान्मधुतिलान्वितान् ।
पितृमातामहादीनां दद्याद्गृह्यविधानतः ॥

एतदुक्तं भवति—आपस्तम्बादिगृह्येषु यत्र पितृयज्ञविधानाद्दिध्यन्त-

रेण पिण्डदानमुक्तं तद्गृह्यानुसारिणां तदुक्तविध्यन्तरेणैव पित्रादिभ्यो मातामहादिभ्यश्च पिण्डदानं कार्यमिति । यस्य च स्वस्य गृह्ये विधानान्तरं नोपादिश्यते पिण्डपितृयज्ञविधानं वा निर्दिश्यते तेनैव पिण्डपितृयज्ञकल्पेन पिण्डदानं कार्यं नान्येनेति मन्तव्यम्। गृह्योक्तविधानान्तरेषूदाहरणार्थमापस्तम्बगृह्योक्तं विध्यन्तरं वा दर्श्यते तत्र ह्येवमभिहितं—'भुक्तवतोऽनुव्रज्य प्रदक्षिणीकृत्य द्वैधं दक्षिणाग्रान् दर्भान् संस्तीर्य तेषूत्तरैरपो दत्त्वोत्तरैः दक्षिणापवर्गान् पिण्डान् दत्त्वा पूर्ववदुत्तरैरपो दत्त्वोत्तरैरुपस्थायोदपात्रेण त्रिः प्रसव्यं परिषिच्य न्युब्ज्य पात्राण्युत्तरं यजुरनवानं त्र्यवराध्र्यमावर्तयित्वा प्रोक्ष्य पात्राणि द्वंद्वमभ्युदाहृत्य' इति । अस्यार्थो विविच्यते—भुक्तवतोऽनुव्रज्य प्रदक्षिणीकृत्येत्यनेन ब्राह्मणभोजनात्मकं प्रधानमनुव्रजनप्रदक्षिणीकरणान्तपाश्चात्याङ्गजातसहितं परिसमाप्यानन्तरं पिण्डप्रदानात्मकं प्रधानं साङ्गमनुष्ठातव्यम् । न पुनर्ब्राह्मणभोजनात्मकं प्रधानमपरिसमाप्य अनन्तरमित्युक्तम् । ततश्च स्वकीयस्थानं प्रति गतेषु विप्रेषु पिण्डनिर्वापणमनुष्ठेयम्, न तु भुक्तवत्स्वाचान्तेषु अनाचान्तेषु तिष्ठत्सु विप्रेष्ववगन्तव्यम्। द्वैधं दक्षिणाग्रान् दर्भान् संस्तीर्य द्विधाभूतं यथाभवति दक्षिणाग्रान् दर्भान् अनुपहतदेशस्य पूर्वभागे पश्चाद्भागे च पृथक्पृथक् संस्तीर्य तेषूत्तरैरपो दत्त्वा तेषु द्विधा संस्तीर्णेषु दर्भेषु उत्तरैः 'मार्जयन्तां मम पितरः' इत्यादिभिर्मन्त्रैः एकस्मिन् पिण्डस्थाने एकैकेन मन्त्रेणापो निन-

येत्। पूर्वभागस्थदर्भेषु प्रथमपिण्डस्थाने 'मार्जयन्तां पितरः' इति मन्त्रेणापो निनयेत्। द्वितीयतृतीयपिण्डस्थानयोः 'मार्जयन्तां पितामहाः प्रपितामहाः' इति मन्त्राभ्यामपो निनयेत्। पश्चाद्भागस्थदर्भेषु प्रथमपिण्डस्थाने 'मार्जयन्तां मातरः' इति मन्त्रेण, द्वितीयतृतीयपिण्डस्थानयोः 'मार्जयन्तां पितामह्यः प्रपितामह्यः' इति अपो निनयेत। उत्तरैरेव दक्षिणापवर्गान् पिण्डान् दत्वा 'एतत्ते ततासौ ये च त्वामनु' इत्यादिभिर्मन्त्रैः एकस्मिन् पिण्डस्थाने एकैकेन मन्त्रेण एकैकपिण्डं पित्रादीनुद्दिश्य त्यागपूर्वं निर्वपेदित्यर्थः। तत्र पूर्वभागस्थदर्भेषूदकनिनयनक्रमेण 'एतत्ते ततासौ ये च त्वामनु' इति मन्त्रेण प्रथमपिण्डस्य निर्वपनम्। एवं पितामहप्रपितामहपिण्डयोर्निर्वपनम्। पश्चाद्भागस्थदर्भेषु 'एतत्ते मातरसौ याश्च त्वामनु' इति मन्त्रेण प्रथमपिण्डस्य। एवं पितामहीप्रपितामह्योः पिण्डयोर्निर्वपनम्। 'स्त्रीभ्यश्च पिण्डा इह पश्चिमास्स्युः' इति गृह्यभाष्यार्थसंग्रहकारेणाभिधानात् पश्चाद्भागस्थदर्भेषु स्त्रीणां पिण्डानिर्वपनमित्यवगन्तव्यम्। षट्स्वपि पिण्डमन्त्रेषु असावित्यत्र सम्बोधनरूपेण पितृपितामहप्रपितामहानां मातृपितामहीप्रपितामहीनां च नामग्रहणं कर्तव्यम्।

> अर्घ्यदाने च सङ्कल्पे पिण्डदाने तथाऽक्षये।
> गोत्रसम्बन्धनामानि यथावत्प्रतिपादयेत्॥

इति पारस्करस्मरणात्। पिण्डाश्च विप्रभोजनात्रशिष्टस्त्रप्रका

रान्नमया मधुतिलान्विता न देयाः। 'सर्वस्मात्प्रकृतादन्नात्' इत्यादेरापस्तम्बेनानिबद्धत्वादोदनमात्रेणैव पिण्डदानं कार्यमित्याहुः। पूर्ववदुत्तरैरपो दत्वा पिण्डानिर्वपणात्पूर्वोदकानिनयनवद्दर्भेष्वेव पिण्डसमीपे उत्तरैः 'एतत्ते ततासौ' इत्यादिभ्यः षड्भ्यो मन्त्रेभ्यः परस्तात्पठितैः 'मार्जयन्तां पितरः' इत्यादिभिरेव मन्त्रैरपो निनयेदित्यर्थः। पूर्वोक्तोदकनिनयने पश्चादुक्तोदकनिनयने च तिलमिश्रमुदकं ग्राह्यमिति केचिद्वदन्ति। उत्तरैरुपस्थाय 'ये च वोऽत्र' इत्यादिभिर्मन्त्रैरुपस्थायेत्यर्थः। 'ये च वोऽत्र ये चास्मास्वाशंसन्ते ते च वहन्तां तृप्यन्तु भवन्तः तृप्यत तृप्यत तृप्यत' इत्येतैर्मन्त्रैः पितृवर्गार्थपिंडोपस्थानम्। 'याश्च वोऽत्र याश्चास्मास्वाशंसन्ते ताश्च वहन्तां तृप्यन्तु भवत्यः तृप्यत तृप्यत तृप्यत' इत्येतैर्मन्त्रैः मातृवर्गार्थपिण्डोपस्थानं कार्यमिति मन्त्रलिङ्गादवगन्तव्यम्। उत्तरयोदपात्रेण त्रिः प्रसव्यं परिषिच्य। उत्तरया 'पुत्रान् पौत्रान्' इत्यृचा उभयेषां पिण्डान् परिषिच्येत्यर्थः। न्युब्ज्य पात्राणि अन्नतिलमधुधारणार्थमुत्तानानि पात्राण्युदपात्राणि चैकैकशो न्युब्ज्य अधोमुखतया स्थापयित्वेत्यर्थ। उत्तरं यजुरनवानं त्र्यवरार्धमावर्तयित्वा 'तृप्यत तृप्यत तृप्यत' इत्येकं यजुस्त्रिवारं जप्त्वाऽन्यपक्षावलम्बनेनानुच्छ्वसन् आवर्त्येत्यर्थः। प्रोक्ष्य पात्राणि द्वंद्वमभ्युदाहृत्य न्युब्जीकृतानि पात्राणि प्रोक्ष्य द्वे पात्रे युगपदुद्धृत्यान्यत्र स्थापयेदित्यर्थः। एवमुक्तापस्तम्बगृह्यविधानतो

गृह्यान्तरोक्तविधानतो वा यथास्वगृह्यं पिण्डान् दद्यात् । गृह्योक्तविधानेऽपि मातामहादीनां पिण्डनिवपनं कार्यं—

पितृमातामहादीनां दद्याद्गृह्यविधानतः ।

इत्येतस्मिन्नेव प्रकरणे बृहस्पतिवचनेन दर्शितत्वात् । तत्रापस्तम्बगृह्यविधानतो मातामहादीनां पृथक्पिण्डानिवपनं कार्यं विकृतेः प्रकृतिवत्कर्तव्यत्वात् । विकृतित्वं च मातामहादिश्राद्धस्य भाष्यार्थसंग्रहकारेणोक्तं—

मातामहादेरप्येवं श्राद्धं कुर्यात्प्रयत्नतः ।

इति । ततश्च तद्गृह्यानुसारिणां एवं मातामहाद्यर्थापिण्डदानप्रयोगः । मातृवर्गार्थदर्भसंस्तरणं विधाय ततः पश्चाद्भागे मातामहवर्गार्थदर्भसंस्तरणं कृत्वा ततः पश्चाद्भागे मातामहीवर्गार्थदर्भसंस्तरणं कुर्यात्। मातृवर्गार्थमपो दत्वा मातामहवर्गार्थमपो दद्यात्। 'मार्जयन्तां मातामहाः' इत्यादिमन्त्रा ऊह्याः। मातामहवर्गार्थमपो दत्वा मातामहीवर्गार्थमपो दद्यात् 'मार्जयन्तां मातामह्यः' इति मन्त्रा ऊह्याः। मातृवर्गार्थपिण्डान् दत्वा मातामहवर्गार्थापिण्डान् दद्यात्' 'एतत्ते मातामह अमुकगोत्र अमुकशर्मन् ये च त्वामनु' इति पिण्डदानमन्त्रा ऊह्याः। मातामहवर्गार्थपिण्डान् दत्वा मातामहीवर्गार्थपिण्डान् दद्यात् । एतत्ते मातामहि अमुकगोत्रे अमुकनाम्नि याश्च त्वामनु' इति पिण्डदानमन्त्रा ऊह्याः। मातृवर्गार्थपिण्डसमीपे पुनरपो दत्वा मातामहवर्गार्थपिण्डसमीमे पुनरपो दद्यात् । तदनन्तरं मातामहीवर्गपिण्डसमीपे पुनरपो निनयेत्।

निनयनमन्त्राणामूहः पूर्ववदेव कार्यः। मातृवर्गार्थपिण्डान् उपस्थाय पितृवर्गार्थपिण्डोपस्थानमन्त्रैरेव मातामहवर्गार्थापिण्डोपस्थानं कार्यम्। ततो मातृवर्गार्थपिण्डोपस्थानमन्त्रैरेव मातामहीवर्गार्थपिण्डोपस्थानं कार्यम्। 'पुत्रान्पौत्रान्' इत्येतयर्चा द्वादशापिण्डानां युगपत्त्रिःप्रसव्यं परिषेचनं कार्यम्, शेषं यजुरावर्तनादि साधारणतया सकृदेव कार्यम्, 'मार्जयन्तां मातामहाः' इत्यूहो भाष्यार्थसङ्ग्रहकारेण सूचितः—

> योज्यः पित्रादिशब्दानां स्थाने मातामहादिकः।
> अन्नहोमे तथा स्पर्शे जलपिण्डादिदानके ॥
> यन्मे मातामहीत्यादि तत्रोदाहरणं भवेत् ॥

इति। अन्नहोमे 'यन्मे माता प्रलुलोभ चरत्यननुव्रता' इत्यादिभिः मन्त्रैः अग्नौकरणान्नहोमे। स्पर्शे 'एष ते तत मधुमाँ ऊर्मिस्सरस्वान्' इत्यादिभिर्मन्त्रैः ब्राह्मणभोजनार्थान्नस्पर्शे। जलपिण्डादिदानके 'मर्जयन्तां पितरः' इत्यादिजलदानमन्त्रे, 'एतत्ते ततासौ ये च त्वामनु' इत्यादिपिण्डदानमन्त्रे च पित्रादिशब्दानां स्थाने मातामहादिशब्दो योज्यः प्रयोज्य इत्यर्थः। यन्मे मातामहीत्यादि तत्रोदाहरणं भवेदित्यस्यायमर्थः—तत्र पित्रादिशब्दस्थाने मातामहादिशब्दयोजनम्। 'यन्मे माता प्रलुलोभ चरत्यननुव्रता तन्मे रेतः पिता वृङ्क्ताम्' इति मन्त्रेण मातामहार्थमन्नहोमे कर्तव्ये मन्त्रगतमातृपदस्थाने मातामहीपदप्रक्षेपेण यन्मे मातामहीत्येवं सम्पन्न ऊहः, तथा एतन्मन्त्रगतपितृपदस्थाने

मातामहपदप्रक्षेपेण तन्मे रेतो मातामहो वृङ्क्तामित्येवं सम्पन्न ऊहश्चोदाहरणं भवेदिति। नामाज्ञाने पिण्डदानं प्रकृत्य गृह्यान्तरं 'यदि नामानि न विद्यात् स्वधा पितृभ्यः पृथिवीषद्भ्यः इति प्रथमपिण्डं दद्यात् स्वधा पितृभ्योन्तरिक्षसद्भ्य इति द्वितीयं, स्वधा पितृभ्यो दिविषद्भ्य इति तृतीयम्' इति। एते मन्त्राः मातामहाद्यर्थपिण्डदानमन्त्रेऽपि नामाज्ञानविषये प्रयोज्याः। गोत्राज्ञानेऽप्याह व्याघ्रपात्—'गोत्रनाशे तु कश्यपः' इति। गोत्राज्ञाने कश्यपगोत्रग्रहणं कर्तव्यम्, कश्यपगोत्रस्य सर्वसाधारणत्वात्। तथाच श्रुतिः 'तस्मादाहुस्सर्वाः प्रजाः कश्यपः' इति। एवं च मातामहादिगोत्राज्ञानेऽपि काश्यपगोत्रग्रहणं कर्तव्यम्॥

इति स्मृतिचन्द्रिकायां पिण्डदानविषयाणि

---

## अथ ब्राह्मणभोजनात्मकप्रधानपाश्चात्याङ्गविषयाणि.

तत्र मत्स्यः—

अथाचान्तेषु चाचम्य वारि दद्यात्सकृत्सकृत्।

इति। ब्राह्मणेष्वाचान्तेषु स्वयमप्याचान्तो भुक्तवद्ब्राह्मणदक्षिणहस्तेषु सकृत्सकृदपो दद्यादित्यर्थः। एतत् अनाचान्तेषु विप्रेषु पिण्डदानपक्षे द्रष्टव्यम्। आचान्तेषु पिण्डदानपक्षे आचम्य पिण्डं दद्यात्ततो विप्रहस्तेषु सकृत्सकृदपो दद्यात्। तेषां पवित्रपाणित्वाय दर्भाश्च देयाः, भोजनसमयपवित्राणां उच्छिष्टत्वेन त्यक्तत्वात्।

पद्मपुराणेऽपि—

आचान्तेषूदकं दद्यात्पुष्पाणि सयवानि च ।

इति । वैश्वदैविकब्राह्मणहस्तेष्विति शेषः, सयवानि चेत्यभिधानात् । पैतृकब्राह्मणहस्तेषु तु यवस्थाने तिला देयाः, अर्घ्यादौ तथा दर्शनात् । सयवानि चेति चशब्दात्पुनरप्युदकं देयमिति सूच्यते । हस्तेषु दत्तानां यवादीनां दर्भाणामिव धारणप्रयोजनकार्याभावात्कृतकार्यत्वेन क्वचित् शुचौ देशे प्रक्षेपणं विप्राः कुर्युः । प्रक्षेपणानन्तरं पुनः मत्स्यः—

आचान्तेषु पुनर्दद्याज्जलपुष्पाक्षतोदकम् ।
दत्वाऽऽशीः प्रतिगृह्णीयात् द्विजेभ्यः प्राङ्मुखो बुधः ॥

पुनश्शब्देन पद्मपुराणोक्तं सयवपुष्पं जलं प्रथमं देयमिति सूचितम् । जलपुष्पाक्षतोदकं दद्यात् प्रथमं जलं दद्यात् साक्षतपुष्पं प्रदाय पुनरपि जलं दद्यादित्यर्थः । आशीः प्रतिगृह्णीयादाशिषः प्रतिगृह्णीयादित्यर्थः । काः पुनराशिषः कथं च तासां प्रतिग्रहः, प्रतिगृह्य किं कर्तव्यमित्यपेक्षिते तेनैवानन्तरमुक्तं—

अघोराः पितरस्सन्तु सन्त्वित्युक्ते पुनर्द्विजैः ।
गोत्रं तथा वर्धतां नस्तथेत्युक्तश्च तैः पुनः ॥

दातारो नोऽभिवर्धन्तां वेदास्सन्ततिरेव च ।
श्रद्धा च नो मा व्यपगात् बहुदेयं च नोऽस्त्विति ॥

एतास्सत्याशिषस्सन्तु सन्त्वित्युक्तश्च तैः पुनः ।
स्वस्तिवाचनकं कुर्यात् ................................ ॥

इति । अघोराः पितरस्सन्त्विति श्राद्धकर्त्रा वक्तव्यम् । शिवाः पितरस्सन्त्विति तस्यार्थः । सन्त्वित्युक्ते पुनर्द्विजैः सन्त्वघोराः पितर इत्युक्ते गोत्रं वर्धतां न इति कर्त्रा वक्तव्यम् । तथेत्युक्तश्च तैः पुनः तैर्द्विजैः वर्धतां गोत्रमित्युक्तः कर्ता दातारो नोऽभिवर्धन्तां इत्यादिश्लोकं पठित्वा एतास्सत्या आशिषस्सन्त्विति ब्रूयात् । सन्त्वित्युक्तश्च तैः पुनः स्वस्तिवाचनं कुर्यात् । तैर्द्विजैस्सन्त्वेतास्सत्या आशिष इत्युक्तः कर्ता द्विजैदत्तमक्षतपुष्पं शिरसा प्रतिगृह्य स्वस्तिवाचनं कुर्यात् । कात्यायनगृह्ये तु दातार इत्यादिकं नोक्तम् । अघोराः पितरस्सन्त्वित्युक्ते गोत्रं नो वर्धतामित्येतावन्मात्रमुक्तम् । यद्यप्याशीःप्रतिग्रहानन्तरमेव स्वस्तिवाचनं कार्यमिति मत्स्यवचनमात्रात्प्रतिभाति । तथाऽप्याशिषं परिगृह्यानन्तरं भोजनपात्राणि चालयित्वा स्वस्तिवाचनं कुर्यात् । अन्यथा दोषश्रवणात् ; तथाच नारायणः—

अचालयित्वा तत्पात्रं स्वस्ति कुर्वन्ति ये द्विजाः ।
निराशाः पितरस्तेषां शप्त्वा यान्ति यथागतम् ॥

बृहस्पतिरपि—

भाजनेषु च तिष्ठत्सु स्वस्ति कुर्वन्ति ये द्विजाः ।
तद्दत्तमसुरैर्भुक्तं निराशाः पितरो गताः ॥

तस्मात् स्वस्तिवाचनात्प्राक् पात्रचालनमवश्यं कार्यमित्यभिप्रायः पात्रचालनकर्तृविषये विधिप्रतिषेधौ जातूकर्ण्येन दर्शितौ—

पात्राण्युच्चालयेच्छ्राद्धे स्वयं शिष्योऽथवा सुतः।
न स्त्रीभिर्न च बालेन नासजात्या कथञ्चन॥

स्वस्तिवाचनप्रकारस्तु पारस्करेण दर्शितः—'स्वस्तीति भगवन् ब्रूहीति वाचनम्' इति। अक्षोदकं दत्वा स्वस्तिवाचनमिति कात्यायनेनोक्तो विशेषः। अत्रैवं प्रयोगः—यज्ञोपवीती वैश्वदैविकहस्ते उदकं दत्वा पुरूरवार्द्रवसंज्ञिकेभ्यो विश्वेभ्यो देवेभ्यस्स्वस्तीति भगवन् ब्रूहीति कर्ता ब्रूयात्। विप्रेण च तेभ्यः स्वस्तीति वक्तव्यम्। प्राचीनावीती पित्र्यब्राह्मणहस्तेषूदकं दत्वा पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यः अमुकगोत्रेभ्यः अमुकशर्मभ्यः स्वस्तीति भगवन् ब्रूहीति कर्ता ब्रूयात्। विप्रेण च तेभ्यः स्वस्तीति वक्तव्यम्। एवं मातामहादिब्राह्मणहस्तेषूदकं दत्वा मातामहमातुःपितामहमातुःप्रपितामहेभ्योऽमुकगोत्रेभ्योऽमुकशर्मभ्यः स्वस्तीति भगवन् ब्रूहीते कर्ता ब्रूयात्। विप्रेण च तेभ्यस्स्वस्तीति वक्तव्यम्। स्वस्तिवाचनानन्तरं याज्ञवल्क्यः—'ततः कुर्यादक्षय्योदकमेव च' इति। ततस्स्वस्तिवाचनानन्तरं अक्षय्योदकं कुर्यात्। अक्षय्यमस्त्वित्युक्त्वा विप्रहस्ते जलं निनयेदित्यर्थः। पित्र्यविप्रहस्ते तु सतिलं जलं निनयेत्। अक्षय्यमस्त्विति च तिलोदकं दत्वेति कात्यायनेनोक्तत्वात्। अस्त्वक्षय्यमिति विप्रैर्वाच्यम्। तथाच मार्कण्डेयपुराणम्—

पितॄणां नामगोत्रेण जलं देयमनन्तरम् ।
ब्राह्मणानां द्विजैर्वाच्यमक्षय्यमिदमस्त्विति ॥

ब्राह्मणानां हस्तेष्विति शेषः । अत्रैवं प्रयोगः—पुरूरवार्द्रव-संज्ञकानां विश्वेषां देवानामक्षय्यमस्त्विति वैश्वदैविकब्राह्मण-हस्तेषु केवलं जलं यज्ञोपवीती निनयेत् । पितृपितामहप्रपिता-महानां अमुकगोत्राणाममुकशर्मणां सपत्नीकानां अक्षय्यमस्त्विति पित्र्यब्राह्मणहस्तेषु सतिलं जलं प्राचीनावीती निनयेत्। एवं मातामहादीनाममुकगोत्राणाममुकशर्मणां सपत्नीकानां अ-क्षय्यमस्त्विति मातामहादिब्राह्मणहस्तेषु सतिलं जलं निनयेत्। वैश्वदेवादिद्विजैः तत्प्रदानानन्तरं अक्षय्यमिदमस्त्विति वक्तव्यम्। अक्षय्योदकदानानन्तरं दक्षिणां दद्यात् । तथा च मत्स्यः— 'अक्षय्योदकमेव च । सतिलं नामगोत्रेण दद्याच्छक्त्या च दक्षिणाम्' इति । सतिलमक्षय्योदकं पित्रादिनामगोत्रेण दद्यात् । तदनन्तरं शक्त्यनुसारेण दक्षिणां दद्यादित्यर्थः। अत्र देयवस्तूनि निर्दिश्य व्यास आह—

गोभूहिरण्यवासांसि नव्यानि शयनानि च ।
दद्याद्यदिष्टं विप्राणामात्मनः पितुरेव च ॥
वित्तशाठ्येन रहितः पितृभ्यः प्रीतिमाचरन् ।

इति । वित्तशाठ्येन रहितो गवादिकं पितृभ्यो दद्यात्। तेषां प्रीतिमाचरन्नित्यन्वयः । पारस्करोपि—'हिरण्यं विश्वेभ्यो देवेभ्यो रजतं पितृभ्योऽन्यच्च गोकृष्णाजिनादिकं यावच्छ-क्नुयात्' इति । वायुपुराणे—

लोके श्रेष्ठतमं यत्तु आत्मनश्चापि यत्प्रियम् ।
सर्वं पितॄणां दातव्यं तेषामेवाक्षयार्थिना ॥

पितॄणां पितृभ्य इत्यर्थः । पितृभ्यो दक्षिणादाने प्रकारमाह जमदग्निः—

सतिलं नामगोत्रेण दद्याच्छक्त्या च दक्षिणाम् ।
हिरण्यरत्नवासांसि हर्म्याणि शयनानि च ॥

इति । हिरण्यादि द्रव्यं तिलोपेतं पितृभ्यो गोत्रनामसहितेभ्यः प्रतिपादयामीति सङ्कल्प्य पैतृकब्राह्मणानां भुक्तवतां समर्पयेदित्यर्थः । 'ब्राह्मणान् भोजयित्वा तु दद्याच्छक्त्या च दक्षिणाम्' इत्युक्तत्वात् । यत्तु वायुपुराणेऽभिहितं—

यद्यदिष्टतमं लोके यच्चान्यद्विद्यते गृहे ।
तत्तद्गुणवते देयं तदेवाक्षयमिच्छता ॥

इति, तत् देवेभ्यः पितृभ्यश्च सङ्कल्पितं दक्षिणाद्रव्यं, न भक्ष्यभोज्यादिकम् । भक्ष्यभोज्यं तु भोक्तृविप्रेभ्यः समं देयम् । दक्षिणादिद्रव्यमपि भोक्तृविप्रगुणानुसारेण विषमं देयमित्येवंपरं, न तु गुणवन्तं ब्राह्मणमुद्दिश्य देयपरमित्यवगन्तव्यम् । पारस्करः—

एकपङ्क्त्युपविष्टानां विप्राणां श्राद्धकर्मणि ।
भक्ष्यभोज्यं समं देयं दक्षिणा त्वनुसारतः ॥

इति । समं देयं गुणतारतम्यनिबन्धनवैषम्यं हित्वा देयमित्यर्थः । दक्षिणादौ तारतम्यनिबन्धनवैषम्ये कृतेऽपि न दोषः । अनु-

सारतः निमन्त्रितविप्रगुणानुसारेणेत्यर्थः । एवंचेत्थं दक्षिणादानप्रयोगः—यज्ञोपवीती पुरूरवार्द्रवसंज्ञिकेभ्यो विश्वेभ्यो देवेभ्यो हिरण्यादिदक्षिणां प्रतिपादयमीति संकल्प्य वैश्वदैविकब्राह्मणहस्ते समर्पयेत् । ततः प्राचीनावीती पितृपितामहप्रपितामहेभ्योऽमुकगोत्रेभ्योऽमुकशर्मभ्यस्सपत्नीकेभ्यः रजतादिदक्षिणां प्रतिपादयामीति संकल्प्य पितृवर्गार्थविप्रहस्ते समर्पयेत् । एवं मातामहादिभ्यस्समर्पयेत् । ननु यदि पित्राद्युद्देशेन द्रव्यत्यागः न पुनर्ब्राह्मणोद्देशेन, कथं तर्हि ब्राह्मणानां दक्षिणाद्रव्ये स्वाम्यम्? उच्यते—यथा दर्शपूर्णमासयोर्दक्षिणादाने 'ब्राह्मणा अयं व ओदनः' इत्युक्त्वा यजमानेन ओदने समर्पिते ब्राह्मणोद्देशेन ओदनत्यागाभावेऽपि ऋत्विजां कर्मकरत्वेनैव ओदनस्वाम्यमुत्पद्यते, तथेहापि हिरण्यरजतादिसमर्पणे तत्र स्वाम्यं ब्राह्मणानां कर्मकरत्वेनैव सिध्यति। यथावा–प्रतिष्ठादौ प्रातिष्ठाप्यदेवतायै संकल्पितवस्त्राभरणादिषु आचार्यस्य स्वाम्यं 'प्रतिष्ठान्ते तु सर्वमुपकरणमाचार्यो गृह्णाति' इति वचनानुगृहीतकर्मकरत्वेनैव भवति तथेहापि 'ब्राह्मणान् भोजयित्वा तु दद्याच्छक्त्या च दक्षिणाम्' । इत्यनुगृहीतेन कर्मकरत्वेन ब्राह्मणानां पित्राद्युद्देशेन संकल्पितरजतादौ स्वाम्यं संपद्यत इति न कश्चिद्विरोधः । अथवा ब्राह्मणोद्देशेन त्यागादेवात्रापि ब्राह्मणानां स्वाम्यं भविष्यति—

आचान्तेभ्यो द्विजेभ्यस्तु प्रयच्छेदथ दक्षिणाम् ।

इति । देवलेन द्विजानुद्दिश्य दक्षिणा देयेत्यभिहितम्—

दक्षिणां पितृविप्रेभ्यो दद्यात्पूर्वं ततो द्वयोः ।

इति । द्वयोर्वैश्वदैविकविप्रयोरिति यावत् । द्वयोरिति षष्ठी पितृविप्रेभ्य इति चतुर्थीसमभिव्याहारात् चतुर्थ्यर्थे द्रष्टव्या । एवंचायमर्थः—पूर्वं पितृविप्रेभ्यो दक्षिणां दत्वा पश्चाद्वैश्वदैविकब्राह्मणाभ्यां दद्यादिति । अस्मिन् पक्षे दक्षिणादानस्यापैतृकत्वात् पितृविप्रेभ्योपि यज्ञोपवीत्येव दद्यात् । अत एव जमदग्निः—

सर्वं कर्मापसव्येन दक्षिणादानवर्जितम् ।

इति । यत्पुनस्तेनोक्तम्—

अपसव्यं तु तत्रापि मत्स्यो भगवान् हि मेने ।

इति, तत् पितॄनुद्दिश्य दक्षिणादानपक्षे द्रष्टव्यम् । बृहस्पतिस्तु अनिमन्त्रितविप्रेभ्योपि दक्षिणादानमाह—

ज्ञातयो बान्धवा निस्स्वास्तथा वाऽतिथयोऽपरे ।

प्रदद्याद्दक्षिणां तेषां सर्वेषामनुरूपतः ॥ इति ।

ज्ञातयः पितृसंबन्धाः । बान्धवा मातृसंबन्धाः । दक्षिणादानानन्तरं याज्ञवल्क्यः—

दत्वा तु दक्षिणां शक्त्या स्वधाकारमुदाहरेत् ।

इति । दक्षिणादानानन्तरं स्वधां वाचयिष्ये इति विप्राननुज्ञापयेदित्यर्थः । अत्रिरपि—

वाचयिष्ये स्वधां प्रश्नमित्थं कुर्याद्द्विजातिषु ।

इति । स्वधां वाचयिष्ये इतीत्थं स्वधाप्रश्नं द्विजातिष्वासीनेष्वेव कुर्यादित्यर्थः । ततो द्विजातयः वाच्यतामित्यनुज्ञां दद्युः ।

वाच्यतामित्यनुज्ञां तु प्रीता दद्युस्समाहिताः ।

इति तेनैवानन्तरमभिधानात् । एवमनुज्ञातः किं कुर्यादित्यपेक्षिते याज्ञवल्क्यः—

वाच्यतामित्यनुज्ञातः प्रकृतेभ्यः स्वधोच्यताम् ।

इति । अनेनेदमुक्तं—पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो मातामहेभ्यो मातुःपितामहेभ्यो मातुःप्रपितामहेभ्यस्सपत्नीकेभ्यः स्वधोच्यतामिति कर्ता ब्रूयादिति । अस्तु स्वधेति विप्रा ब्रूयुः । ततः कर्ता कमण्डलुना पिण्डसमीपभूमौ जलं सिञ्चेत् । कात्यायनस्तु दर्भानास्तीर्य तस्यां भूमौ समन्त्रकं सेचनं कार्यमित्याह—'सपवित्रान् कुशानास्तीर्य स्वधां वाचयिष्ये इति पृच्छति वाच्यतामित्युक्ते पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यः स्वधोच्यतामस्तु स्वधेत्युच्यमाने ऊर्जं वहन्तीरित्यपो निषिञ्चेत् सपवित्रेषु कुशेषु' इति । सपवित्रेषु अर्घ्यसंस्कारार्थपवित्रसहितेषु । सपवित्रेष्विति वदन् न्युब्जीकृतार्घ्यपात्रमुत्तानं कृत्वा तत्र पवित्राणि ग्राह्याण्यस्मिन्काल इति सूचयति । अत एव सङ्ग्रहकारः—

याज्ञवल्क्यो विसर्गात्प्राक् पात्रमुत्तानमिच्छति ।
यमो विसर्जनं कृत्वा गृह्यकर्ताऽपि शौनकः ॥
प्रीतिप्रश्नात्तु देवानां पूर्वं कात्यायनादयः ॥

इति। विसर्जनात्प्राग्विप्रविसर्जनात्पूर्वं देवानां प्रीतिप्रश्नात्पूर्वं विश्वेदेवाः प्रीयन्तामित्यभिधानात् पूर्वं स्वधावाचनकाले इत्यर्थः। अत्र यथास्वगृह्यं व्यवस्था।

सर्वेषामपि पक्षाणां स्वस्वगृह्यात्तु गृह्यते।

इति स्मरणात्। स्वस्वगृह्योक्तपक्षस्याभावे तु स्वेच्छैव पक्षविशेषग्रहणे नियामिका।

स्वगृह्योक्तस्य चाभावे ग्रहणं स्वेच्छया भवेत्।

इत्यपि स्मरणात्। सपवित्रकुशवत्यां भूमौ उदकधारानिषेचनानन्तरं स्वधा सम्पद्यतामिति कर्ता ब्रूयात्। विप्रैश्च संपद्यतां स्वधा इति स्वधाकारात्मिका पितॄणामाशीर्वक्तव्या। तथा चात्रिः—

अस्तु स्वधेति तैः प्रोक्ते निषिच्योदीर्य नित्यशः।
स्वधाकारः परा प्रोक्ता पितृष्वाशीस्स्वयंभुवा॥
आयुःपुत्रधनारोग्यशान्त्यर्थं वाचयेद्द्विजान्।

इति। तैर्विप्रैरस्तु स्वधेत्युक्ते कर्ता 'ऋचे त्वा रुचे त्वा समिध्स्रवन्ति सरितः' इत्यादिकं 'स्वधां दुहाना अमृतस्य धाराम्' इत्यन्तं मन्त्रं सामर्थ्यरूपलिङ्गादेवात्र प्राप्तमुदीर्योदकधारां निषिच्य स्वयम्भुवा ब्रह्मणा प्रोक्ता पितृस्वधाकारात्मिका परा उत्कृष्टा या आशीस्तामायुरादिफलसिद्ध्यर्थं द्विजान्वाचयेदित्यर्थः। स्वधावाचनानन्तरं याज्ञवल्क्यः—

विश्वेदेवाश्च प्रीयन्तां विप्रैश्चोक्ते इदं जपेत्।

इति । विश्वेदेवाः प्रीयन्तामिति पूर्वं श्राद्धकर्ता, पश्चात्प्रीयन्तां विश्वेदेवा इति वैश्वदैविकविप्रैश्चोक्ते, चशब्दात्पितरः प्रीयन्तामिति पूर्वं कर्ता, पश्चात्प्रीयन्तां पितर इति पित्र्यविप्रैश्चोक्ते इदं वक्ष्यमाणं जपेत् 'दातारो नोऽभिवर्धन्ताम्' इत्यादिकमाशीःप्रार्थनावाक्यवृन्दं कर्ता पठेदित्यर्थः । अत्र सङ्ग्रहकारः—दातार इति याज्ञोक्त्या पादार्थः प्रार्थना स्मृता ।

तां सुरप्रीतिसंप्रश्नात् प्राक्प्रचेतास्तु मन्यते ॥
याज्ञवल्क्यस्तथा वक्ति प्रश्ने निर्वर्तिते सति ।
पारस्करस्स्वस्ति वाच्यं कृत्वाऽऽशीर्ग्रहणं जगौ ॥
विसर्जितेषु विप्रेषु बहिष्ठेषु मनुर्जगौ ।
यान्यत्र कालभेदेन कर्माणि मुनयो जगुः ॥
स्वस्वगृह्यानुसारेण विकल्पस्तेषु युज्यते ।
न गृह्यादिस्मृतिर्येषां श्राद्धादावुपलभ्यते ॥
कर्तुमर्हन्ति ते कृत्स्नं यस्यकस्य मुनेरिति ।

वैकल्पिकेषु स्वगृह्याद्युक्तपक्षाभावे यस्य कस्यचिदेकस्य मुनेः पक्षं स्वेच्छानुगुणं कुर्यादित्यर्थः । विश्वेदेवाः प्रीयान्तामित्युक्त्वा वैश्वदैविकब्राह्मणपाणौ अपो दत्वा पितरः प्रीयन्तामित्युक्त्वा पैतृकब्राह्मणपाणौ अपो दत्वा अनन्तरं सर्वब्राह्मणपाणिषु सपुष्पाः साक्षताश्चापो दद्यात् । तथा चात्रिः—

विप्रपाणौ तु दत्वाऽपः सपुष्पास्साक्षतास्ततः ।

इति। अपो दद्यादिति शेषः। अत्र बृहस्पतिः—

वाजे वाज इति प्रोच्य ब्राह्मणांस्तान्विसर्जयेत्।
विप्रान् प्रदक्षिणीकृत्य पितृभ्यः प्रार्थयेद्वरान्॥

तान् पाणिधृतपुष्पाक्षतान् विसर्जयेत्। स्वस्थानं प्रति गमनार्थं आसनेभ्य उत्थापयेत्।

वाजेवाज इत्युत्थाप्य कृत्वा चैतान् प्रदक्षिणम्।

इति मार्कण्डेयस्मरणात्। उत्थापने च साक्षाद्विप्रहस्तग्रहणं न कुर्यात्, किंतु हस्तसंस्पृष्टदर्भद्वारा।

वाजेवाजे इति जपन् कुशाग्रेण विसर्जयेत्।

इति मत्स्येनाभिधानात्। कुशाग्रेण कुशेन हस्तस्पर्शनं कृत्वेत्यर्थः। अग्रेण तु हस्तस्पर्शने क्रियमाणे एकदा एकस्यैव हस्तसंस्पर्शो न बहूनाम्। ततश्च 'तृप्ता यात' इति बहुवचनं 'अदितिः पाशान्' इतिवदविवक्षितं स्यात्। एवञ्च कुशेन यावतां हस्तसंस्पर्शनं युगपत्कर्तुं शक्यं तावतां सकृन्मन्त्रोच्चारणं, यातेति बहुवचनतो बहुविप्रविसर्जनलक्षणकार्यस्य सकृदुच्चारणादेव सिद्धेः। असंभवे मन्त्रावृत्तिः। विनोत्थानं विप्राणां यानं न संभवतीत्यर्थादुत्तिष्ठतेत्यपि यातेत्यनेनैवोक्तं भवति। विप्राणां उत्थापनेनैव तत्रावाहितदेवपितॄणामप्युत्थापनं सिद्धमिति स्मृतिषु तत् पृथङ्नोक्तम्। तथाऽपि तस्य स्पष्टानुसन्धानार्थं दर्भेण संस्पर्शनात्पूर्वं उत्तिष्ठत पितरो विश्वैर्देवैस्सहेत्युक्त्वा विप्रविसर्जनं कार्यम्। एवञ्च द्विजविसर्जनसंपा-

तायातं पित्रादिविसर्जनं नाहत्यानुष्ठेयमिति न विसर्जने प्राचीनावितिना भवितव्यम् । अत एव 'उपवीती विसर्जनम्' इति शौनकेनोक्तम् । विप्रविसर्जने क्रमः पुराणे दर्शितः—

पश्चाद्विसर्जयेद्देवान् पूर्वं पैतामहान् द्विजान् ।
मातामहानामप्येवं सह देवैः क्रमस्स्मृतः ॥

देवान् वैश्वदेविकद्विजान् । पैतामहान् पित्रादिस्थानेषूपविष्टान्। विप्रोत्थापनानन्तरं कात्यायनः—'आमा वाजस्य, इत्यनुव्रज्य प्रदक्षिणीकृत्य' इति । प्रदक्षिणीकरणानन्तरं दातार इत्यादिश्लोकद्वयेन पितृसकाशाद्वरयाचनं कार्यम् । तथाच मत्स्यः—

विसृज्य ब्राह्मणांस्तांस्तु तेषां कृत्वा प्रदक्षिणम् ।
दक्षिणां दिशमाकांक्षन् पितॄन्याचेत मानवः ॥
दातारो नोऽभिवर्धन्तां वेदास्सन्ततिरेव च ।
श्रद्धा च नो मा व्यगमद्बहु देयं च नोऽस्तु ॥
अन्नं च नो बहु भवेदतिथींश्च लभेमहि ।
याचितारश्च नस्सन्तु मा च याचिष्म कञ्चन ॥

इति । दक्षिणां दिशमाकांक्षन् दक्षिणाभिमुखः श्लोकद्वयेन प्रतीयमानान् वरान् श्लोकद्वयपादेनैव पितॄन् याचेत न विप्रानित्यर्थः । बृहस्पतिरपि—

विप्रान् प्रदक्षिणीकृत्य पितृभ्यः प्रार्थयेद्वरान् ।

इति । वरयाचनानन्तरं वृद्धशातातपः—

एवमस्त्विति तैर्वाच्यं मूर्ध्ना ग्राह्यं च तेन तत् ।

इति। तैः भूतपूर्वगत्या पित्रधिष्ठानभूतैर्विप्रैरेवमस्त्विति वाच्यं, साक्षात्पितृभिरेवमस्त्विति वचनासंभवात्। एवमस्त्वित्युक्त्वा तैस्स्वहस्तगतं पुष्पाक्षतं प्रदेयम्। तेन श्राद्धकर्त्रा च तत्पुष्पाक्षतं मूर्ध्ना ग्राह्यम्। एवमाशीर्ग्रहणानन्तरं स एवाह—

ततः प्रदक्षिणं कृत्वा पुनस्तेषां कृताञ्जलिः।
उक्त्वा चैव प्रियां वाचं प्रणिपत्य प्रसादयेत्॥

इति। प्रियां वाचं—'धन्या वयं युष्मदनुग्रहेण पितॄणामनृणा जाताः' इत्येवमादिकाम्। प्रसादनार्थं यद्वक्तव्यं तदाह बृहस्पतिः—

अद्य मे सफलं जन्म भवत्पादाभिवन्दनात्।
अद्य मे वंशजास्सर्वे याता वोऽनुग्रहाद्दिवम्॥
पत्रशाकादिदानेन क्लेशिता यूयमीदृशाः।
तत्क्लेशजातं चित्ते तु विस्मृत्य क्षन्तुमर्हथ॥

इति। एवं प्रसाद्यानन्तरं सर्वं सम्पूर्णमस्त्विति विप्राः प्रार्थयितव्याः। तथाच विष्णुः—

मन्त्रहीनं क्रियाहीनं भक्तिहीनं द्विजोत्तमाः।
श्राद्धं संपूर्णतां यातु प्रसादाद्भवतां मम॥

इति। विप्रैरपि सर्वं सम्पूर्णमस्त्वित्युक्त्वा हविर्गुणस्तुतिः कर्तव्या—

श्राद्धावसाने कर्तव्या द्विजैरन्नगुणस्तुतिः।

इति वृद्धवसिष्ठस्मरणात् । ततो विप्रान् स्वस्थानगमनार्थं विस-र्जयेत् । तथाच पुराणं—

विसर्जयेत्प्रीतिमतस्संमान्याभ्यर्च्य तांस्ततः ।

इति । मार्कण्डेयोपि—

जानुभ्यामवनीं गत्वा प्रणिपत्य विसर्जयेत् ।

इति । मदालसावाक्यमपि—

विसर्जयेत्प्रियाण्युक्त्वा प्रणिपत्य च भक्तितः ।
आद्वारमनुगच्छेत आगच्छेतानुमोदितः ॥

इति । अनुमोदितो ब्राह्मणैरिति शेषः ।

**इति स्मृतिचन्द्रिकायां ब्राह्मणभोजनात्मकप्रधानपाश्चात्याङ्गिकविषयाणि.**

---

## अथ पिण्डप्रतिपत्त्यादिविषयाणि.

तत्र देवलः—

ततः कर्मणि निर्वृत्ते तान् पिण्डांस्तदनन्तरम् ।
ब्राह्मणोऽग्निरजो गौर्वा भक्षयेदप्सु वा क्षिपेत् ॥

कर्मणि निर्वृत्ते पिण्डप्रतिपत्तिरूपव्यतिरिक्ताङ्गसाहितश्राद्धकर्मणि निर्वृत्ते । पुत्रार्थित्वाभावविषयमेतत् । पुत्रार्थित्वे सति मध्यमपिण्डं पत्नी भक्षयेत् । तथाच मनुः—

पतिव्रता धर्मपत्नी पितृपूजनतत्परा ॥
मध्यमं तु ततः पिण्डमद्यात्सम्यक्सुतार्थिनी ॥

आयुष्मन्तं सुतं विन्देद्यशोमेधासमन्वितम् ।
धनवन्तं प्रजावन्तं धार्मिकं सात्विकं तथा ॥

इति । यमोपि—

यत्तदा मध्यमं पिण्डं पत्नी प्राश्नाति वाग्यता ।
पुत्रकामा सपुत्रां तां कुर्वन्ति प्रपितामहाः ॥

वायुपुराणेऽपि—

पत्नी प्रजार्थिन्यद्यात्तु मध्यमं मन्त्रपूर्वकम् ।

इति । पुराणे मन्त्रोपि प्रतीकेन दर्शितः—

पत्नीं तु मध्यमं पिण्डमाशयेद्विनयान्विताम् ।
आदत्त पितरो गर्भं मन्त्रस्सन्तानवर्धनः ॥

'आदत्त पितरो गर्भम्' इत्यादिको मन्त्रस्सन्तानवर्धन इत्यर्थः । एतदुक्तं भवति—

'आदत्त पितरो गर्भं कुमारं पुष्करस्रजम् । यदाऽयमरपा असत्' इत्यनेन मन्त्रेण मध्यमपिण्डं पत्नी प्राश्नीयादिति । शङ्खलिखिताभ्यां तु पत्न्या विशेषो दर्शितः—

पत्नी वा मध्यमं पिण्डमश्नीयादार्तवस्नाता ।

इति । अगृहीतगर्भा स्त्री आर्तवस्नातेत्युच्यते । ततश्च गृहीतगर्भा पत्नी नाश्नीयात् । अत एवंविधविषये मध्यमपिण्डस्य प्रतिपत्त्यन्तरमाह बृहस्पतिः—

अन्यदेशगता पत्नी रोगिणी गर्भिणी तथा ।
तदा तं जीर्णवृषभः छागो वा भोक्तुमर्हति ॥

तं मध्यमं पिण्डम् । जीर्णो गतरेताः । अत एव वायुपुराणं—

गतवीर्यस्तु यश्छागोऽनड्वांश्चैव तथाविधः ।
तयोः पिण्डः प्रदातव्यो ययोर्वीर्यं न रोहति ॥

आपस्तम्बोपि—

यदि पत्नी विदेशस्था उच्छिष्टा यदि वा मृता ।
दुरात्माऽननुकूला च तस्य पिण्डस्य का गतिः ॥
आकाशं गमयेत्पिण्डं जलस्थो दक्षिणामुखः ।
पितॄणां स्थानमाकाशं दक्षिणा दिक्तथैव च ॥

इति । जीर्णर्षभादावुक्ता वैकल्पिकी प्रतिपत्तिर्यथालाभं द्रष्टव्या। तीर्थश्राद्धे तु सर्वपिण्डानामप्स्वेव प्रतिपत्तिः । तथाच विष्णुधर्मोत्तरे—

तीर्थश्राद्धे सदा पिण्डान् क्षिपेत्तीर्थे समाहितः ।
दक्षिणाभिमुखो भूत्वा पित्र्या दिक् सा प्रकीर्तिता ॥

तीर्थश्राद्धमुदकसमीपे क्रियमाणं श्राद्धम् । तीर्थे क्षिपेत् श्राद्धसमीपोदके क्षिपेत् । पिण्डप्रतिपत्त्यनन्तरं द्विजोच्छिष्टमार्जनं कार्यमिति वचोभङ्ग्या दर्शयितुमाह याज्ञवल्क्यः—

पिण्डांस्तु गोऽजविप्रेभ्यो दद्यादग्नौ जलेऽपि वा ।
प्रक्षिपेत्सत्सु विप्रेषु द्विजोच्छिष्टं न मार्जयेत् ॥

पिण्डानिति बहुवचनादेतदपि पुत्रार्थित्वाभावविषयं सत्सु विप्रेषु विसर्जनात्प्रागुच्छिष्टं न शोधयेत् । किंतु विसर्जितेषु विप्रेषु पिण्डप्रतिपत्तौ च कृतायां शोधयेदित्यर्थः । यत्तु वसिष्ठेनोक्तं—

श्राद्धे नोद्वासनीयानि उच्छिष्टान्या दिनक्षयात् ।
श्च्योतन्ते वै स्वधाकाराः ताः पिबन्त्यकृतोदकाः ॥

इति । येषां मृतानामुदकदानं प्रतिषिद्धं ते अकृतोदकास्तेषामुच्छिष्टनिश्च्योतो यतो भागः अतः आऽस्तमयादुच्छिष्टानिनोद्वासयेदित्यर्थः । यदपि व्यासेन—

उच्छिष्टं न प्रमृज्यात्तु यावन्नास्तमितो रविः ।

इति, तदेतत् अनेकगृहसम्भवविषयं, तत्र गृहान्तरेष्वपि बान्धवादिभिस्सह पितृसेवितशेषभोजनादिसम्भवात् । अत्रैव प्रचेताः—

भृत्यवर्गवृतो भुङ्क्ते कव्यशेषं सगोत्रजैः ।
आसायं श्राद्धशालायां द्विजोच्छिष्टं न मार्जयेत् ॥

सगोत्रजाः ज्ञातयः तैस्सह कव्यशेषं पितृभ्यो दत्तस्यान्नस्य शेषं भुङ्क्ते मध्याह्नकृत्यशेषं कृत्वेति शेषः । तथाच मार्कण्डेयः—

ततो नित्यक्रियां कुर्याद्भोजयेच्च तथाऽतिथीन् ।
ततस्तदन्नं भुञ्जीत सह भृत्यादिभिर्नरः ॥

नित्यक्रिया श्राद्धारम्भात्प्राक् अकृतदेवतार्चनवैश्वदेवादिका । तां कुर्यात् । यत्तूक्तं भविष्यपुराणे—

कृत्वा श्राद्धं महाबाहो ब्राह्मणांश्च विसृज्य च ।
वैश्वदेवादिकं कर्म ततः कुर्यान्नराधिप ॥

इति । वैश्वदेवादिकं वैश्वदेवबलिकर्मादिकम् । तदेतत् प्रात-

होमानन्तरकाले येन देवार्चनं न कृतं तद्विषयम्। यत्तु-नरादित्यपुराणेऽभिहितं—

पितॄन् संतर्प्य विधिवत् बलिं दद्याद्विधानतः।
वैश्वदेवं ततः कुर्यात्पश्चाद्ब्राह्मणवाचनम्॥

इति। तस्यायमर्थः—ब्राह्मणभोजनेन पितॄन् संतर्प्य सर्वान्नेन विकिररूपं बलिं प्रदायानन्तरं वैश्वदेवं कृत्वा पश्चात्स्वस्तिवाचनादि ब्राह्मणविसर्जना(न्तं)नन्तरं कुर्यादिति। अमुमेवार्थं प्रकटयितुं तत्रैवानन्तरमुक्तं—

ये अग्निदग्धामन्त्रेण भूमौ यं निक्षिपेद्बुधः।
जानीहि तं बलिं वीर श्राद्धकर्मणि नित्यदा॥

इति। नित्यदा सर्वदेत्यर्थः। एवञ्च श्राद्धसमाप्त्यनन्तरं श्राद्धमध्ये वा विकिरबलिदानानन्तरं वैश्वदेवानुष्ठानं कार्यमित्यवगन्तव्यम्। श्राद्धस्यान्ते मध्ये वा यत्र वैश्वदेवानुष्ठानं तत्र तदनन्तरं बलिहरणं कर्तव्यम्।

वैश्वदेवं प्रकुर्वीत नैत्यकं बलिमेव च।

इति मत्स्यपुराणे द्वयोर्नैरन्तर्येणाभिधानात्। अत एव स्मृत्यन्तरे भूतयज्ञादेरेव श्राद्धान्ते कर्तव्यत्वं स्मृतं—

वैश्वदेवाहुतीरग्नावर्वाग्ब्राह्मणभोजनात्।
जुहुयाद्भूतयज्ञादि श्राद्धं कृत्वा ततः स्मृतम्॥

इति। अवार्ग्ब्राह्मणभोजनादित्यनेनाग्नौकरणानन्तरं वैश्वदेवाहुतीर्जुहुयादित्युक्तम्। श्राद्धं कृत्वा भूतयज्ञादि स्मृतमित्यनेना-

र्थात् वैश्वदेवाहुत्यनन्तरमेव बलिहरणं कार्यमिति दर्शितम् । यत्तु **पुराणे**ऽभिहितं—

> यदा श्राद्धं पितृभ्यस्तु दातुमिच्छति मानवः ।
> वैश्वदेवं तदा कुर्यान्निर्वृत्ते श्राद्धकर्मणि ॥

**इति,** तत् श्राद्धात्प्राग्वैश्वदेवनिषेधपरं न तु मध्येऽपि, तथात्वे पूर्वोक्तवचनविरोधापत्तेः । अत एव श्राद्धस्यादावेव वैश्वदेवकरणे दोषस्तत्रैवानन्तरमुक्तः—

> प्रतिवासरिको होमः श्राद्धादौ क्रियते यदि ।
> देवा हव्यं न गृह्णन्ति कव्यं च पितरस्तथा ॥

**इति** । क्रियते पित्रर्थान्नात्समुद्धृत्येति शेषः । अत एव **पैठीनसिः**—

> पितृपाकात्समुद्धृत्य वैश्वदेवं करोति यः ।
> आसुरं तद्भवेच्छ्राद्धं पितृणां नोपतिष्ठते ॥

**इति** । एवञ्च श्राद्धादौ पृथक्पाकाद्वैश्वदेवकरणे न दोषः । श्राद्धमध्ये पितृपाकात्समुद्धृत्य वैश्वदेवकरणे पूर्वोक्तदोषप्रसङ्गात्पृथक्पाकादेवाग्नौकरणानन्तरं वैश्वदेवादिकं कार्यम् । श्राद्धान्ते तु पितृपाकात्समुद्धृत्य वैश्वदेवादिकं कुर्यात् । तथाचानन्तरमुक्तं तेनैव—

> श्राद्धं निर्वर्त्य विधिवद्वैश्वदेवादिकं ततः ।
> कुर्याद्भिक्षां ततो दद्याद्धन्तकारादिकं तथा ॥

इति । ततः पितृपाकसमुद्धृतान्नाद्यादित्यर्थः । आदिशब्देन

सर्वमन्त्रसाध्यं नैत्यकं कर्म गृह्यते । तेन नित्यश्राद्धमपि पितृपाकात्समुद्धृतादन्नात्कार्यम् । अथवा नित्यश्राद्धं पृथक्पाकेन कार्यं, तस्यापि श्राद्धात्मकत्वेन श्राद्धधर्मभूतपाकप्राप्तेः । अत एव नित्यश्राद्धमधिकृत्य मार्कण्डेयेनोक्तं—'पृथक्पाकेन नेत्यन्ये' इति । पृथक्पाकेन नित्यश्राद्धं कार्यम् । नेत्यन्ये न पृथक्पाकेन कार्यं किंतु श्राद्धशेषेणैव कार्यमित्यन्ये मन्यन्त इत्यर्थः । एतच्च नित्यश्राद्धं श्राद्धान्तरे कृते सत्यनियतम् । यदाह स एव—

नित्यक्रियां पितॄणां च केचिदिच्छन्ति मानवाः ।
पितॄणां च तथैवान्ये शेषं पूर्ववदाचरेत् ॥

पितॄणां नित्यक्रियां नित्यश्राद्धम् । शेषं वैश्वदेवादिकं पूर्ववदाचरेत् नियमेनैव कुर्यादित्यर्थः । यत्तु लोकाक्षिणोक्तं—

पित्रर्थं निर्वपेत्पाकं वैश्वदेवार्थमेव च ।
वैश्वदेवं न पित्रर्थं न दार्शं वैश्वदैविकम् ॥

दार्शं दर्शश्राद्धं अमावास्याश्राद्धमिति यावत् । तदर्थं निरुप्तमन्नं कृतेऽपि श्राद्धे न वैश्वदेवार्थं भवतीत्यर्थः । तत् आग्निमद्दर्शश्राद्धविषयम् । तस्य दर्शश्राद्धात्प्रागेव वैश्वदेवविधानेन श्राद्धान्ते श्राद्धशिष्टेन वैश्वदेवायोगात् । दर्शश्राद्धात्प्रागेव वैश्वदेवविधिश्च तेनैवाग्निमतो दर्शितः ।

पक्षान्तं कर्म निर्वर्त्य वैश्वदेवं च साग्निकः ।
पिण्डयज्ञं ततः कुर्यात्ततोऽन्वाहार्यकं बुधः ॥

इति । पक्षान्तं कर्म अग्न्यन्वाधानम् । अन्वाहार्यक अमावास्याश्राद्धम् । एवञ्च साग्निकामावास्याश्राद्धात्प्रागेव वैश्वदेवार्थे पृथगेव पाकः अन्यत्र तु न पृथक् पाकनियम इति मन्तव्यम् । येषां तु स्वगृह्ये वैश्वदेवं कृत्वा श्राद्धं कर्तव्यमिति वचनमस्ति तेषामपि वैश्वदेवार्थं पृथगेव पाकः । वैश्वदेवार्थं पृथक्पाके कृतेऽपि पित्रर्थपाकादेव भोजनम् ।

प्रदक्षिणमनुव्रज्य भुञ्जीत पितृसेवितम् ।

इति याज्ञवल्क्यस्मरणात् । अनेन पितृसेवितमेव भुञ्जीत नान्यदिति नियम्यते तथा पितृसेवितं भुञ्जीतैव नोपवसेदिति च नियम्यते । अत एवाभोजने दोषमाह देवलः—

श्राद्धं कृत्वा तु यो विप्रो न भुङ्क्ते च कथंचन ।
देवा हव्यं न गृह्णन्ति कव्यानि पितरस्तथा ॥

एतच्च पितृसेवितभोजनं सर्वविधात् पितृसेवितात्किञ्चित्किञ्चिदुपादाय कर्तव्यम् । तथाच मत्स्यपुराणे—

ततश्च वैश्वदेवान्ते सभृत्यसुतबान्धवः ।
भुञ्जीतातिथिसंयुक्तस्सर्वं पितृनिषेवितम् ॥

यद्यपि क्षुन्न तथाऽपि शेषभोजनस्यावश्यकत्वात् सर्वमेव पितृसेवितं लेशतो भोक्तव्यम् । अत एवापस्तम्बः—

'सर्वतस्समवदायोत्तरेण यजुषा शेषस्य ग्रासावरार्धं प्राश्नीयात्' इति । 'प्राणे निविष्टोऽमृतं जुहोमि ब्रह्मणि म आत्माऽमृतत्वाय' इत्युत्तरं यजुः । अनेन यजुषा यथासामर्थ्यं सर्व-

प्रकारान्तः समवदायातृप्तेरश्नीयात् । असामर्थ्ये ग्रासमात्रं प्राश्नीयादित्यर्थः । एवमुक्तं शेषभोजनावश्यकत्वं निमन्त्रितब्राह्मणैः श्राद्धशिष्टमन्नमिष्टैस्सहोपभुज्यतामित्युक्ते सति द्रष्टव्यम् । विप्रैरेव तु श्राद्धशिष्टान्ने गृहीते अन्नान्तरं संपाद्य भोक्तव्यम् 'कृते श्राद्धे पुत्री नोपवसेद्गृहे' इति स्मरणात्। यत एव श्राद्धशिष्टान्नं इष्टैस्सह भुज्यतामित्युक्त एवायं शेषभोजननियमः अत एव अनुज्ञापक्ष एव शेषभोजननियममाह शातातपः—

शेषमन्नमनुज्ञातं भुञ्जीत तदनन्तरम् ।
इष्टैस्सार्धं तु विधिवद्बुद्धिमान् सुसमाहितः ॥

बुद्धिमानिति वदन् मांसभक्षणप्रतिषेधकशास्त्रबलाबलविचारणेन भोज्याभोज्ये निर्धार्य प्रवृत्तिनिवृत्ती कर्तव्ये इति दर्शयति। तेन माषमांसादिकं पितृसेवितमपि अन्वाधानदिने कृतान्वाधानेन न भक्षयितव्यं, 'अमाषमांसं व्रतं चरेत्' इति श्रुत्या प्रतिषेधात् । अकृतान्वाधानेनानग्निना च पञ्चदश्यामपि पितृसेवितं मांसं 'भुञ्जीत पितृसेवितम्' इत्येवंविधवचनैर्विहितत्वाद्भक्षयितव्यम् । 'आसप्तमं कुलं हन्ति' इत्यनुवृत्तौ 'मांसादने पञ्चदशी' इति पञ्चदश्यां मांसभक्षणनिषेधकवचनस्य रागप्राप्तमांसभक्षणविषयतया वैधमांसभक्षणाप्रतिषेधकत्वात् । यत्तु मधुमांसपायसादिकं द्रव्यं आषाढादिमासचतुष्टयादौ न भक्षयामीति सङ्कल्प्य तत्पालननिष्ठो व्रती पुरुषः

तेनापि पितृसेवितं मधुमांसपायसादिकं भक्षयितव्यम्। कृतेऽपि भक्षणे वैधत्वेन व्रतभङ्गाभावात्। तथाच बृहस्पतिः—

दैवे नियुक्तः श्राद्धे वा नियमं न विसर्जयेत्।
निषिद्धं कुर्वतां दोषस्तद्वद्वैधमकुर्वताम् ॥
मांसाशनस्य वैधत्वान्न व्रतच्युतिरश्नताम्।

इति।

नियमं 'परिविष्टं भुञ्जीरंस्तेऽपि वाग्यताः' इति स्मृत्युक्तम्। नियुक्तग्रहणं श्राद्धकर्तुरपि प्रदर्शनार्थं, वैधमकुर्वतां दोषहेतोरुभयत्र समानत्वात्। यत्तु स्मृत्यन्तरं—

मधुमांसनिवृत्तानां श्राद्धकर्माणि कुर्वताम्।
पात्रस्थगन्धमाघ्राय पितॄणामनृणो भवेत् ॥

इति, तत् महाजनपरिग्रहाभावेन मूलप्रमाणाननुमापकत्वादुपेक्षणीयम्। केषांचित्परिग्रहेणापि समूलत्वे वानप्रस्थयतिब्रह्मचारिविषयत्वान्न बार्हस्पत्यवचनविरोधः। यतश्चोभयथा विरोधपरिहारसमर्थनं देवस्वामिना कृतम्। एवमेव पशुयागादावपि न मांसभक्षणे व्रतभङ्गः। यदाह बृहस्पतिः—

क्रतौ श्राद्धे तदङ्गत्वाद्विप्राज्ञाभङ्गतो वृतः।
भक्ष्यत्वादनुयोगेऽपि खादन् मांसान्यपि व्रती ॥
रोगेण युक्तो विधिवद्धुतं विप्रवृतस्तथा।
मांसमद्याच्चतुर्ष्वेषा परिसङ्ख्या प्रकीर्तिता ॥

इति। वृतः मधुपर्कादौ विप्रवृतः। रोगेण युक्तः दीर्घरोगेण

पीडितः । निगमोऽप्यनुज्ञापक्ष एव पितृसेवितभोजननियम इत्याह—'अनुज्ञातो गृह्यान् बालवृद्धांश्च परितोष्य भुञ्जीत' इति । गृह्यान् गृहे स्वानुज्ञया वर्तमानान् । चशब्दो भगिन्यादेः परिग्रहार्थः । अत एवादिपुराणम्—

भगिन्यो बान्धवाः पूज्याः श्राद्धेषु च सदैव हि ।
दारिद्र्योपहता दीनाः भिन्नाङ्गाश्चाधिकाङ्गुलिः ॥
वृद्धाजातविरक्ताश्च व्याधिभारप्रपीडिताः ।
एते भोजनमर्हन्ति भोक्तुस्सर्वत्र सर्वदा ॥
वन्दिमागधसूताश्च तौर्यत्रिकविदस्तथा ।
अलब्धलाभाः श्राद्धेषु नाशयन्ति महद्यशः ॥
तस्मात्तेऽपि विभक्तव्याः स्वकळत्रं विभज्यता ।

इति । भोक्तुः सम्पन्नस्य गृहे इति शेषः । कळत्रग्रहणं पुत्रादेरपि प्रदर्शनार्थम् । अत एव बृहस्पतिः—

एवं देवान् पितृंश्चैव तर्पयित्वा द्विजोत्तमः ।
पुत्रमित्रादिसहितो गृहस्थो भोक्तुमर्हति ॥

इति । दातृभोक्त्रोर्द्वयोरपि नियमान्तरमाह स एव—

तां निशां ब्रह्मचारी स्याच्छ्राद्धभुक्छ्राद्धकृत्सह ।
अन्यथा वर्तमानौ तु स्यातां निरयगामिनौ ॥

मत्स्यपुराणेऽपि—

पुनर्भोजनमध्वानं यानमायासमैथुनम् ।
श्राद्धकृच्छ्राद्धभुक्चैव सर्वमेतद्विवर्जयेत् ॥

स्वाध्यायं कलहं चैव दिवास्वापं तथेच्छया ।

इति । श्राद्धभोक्तारं प्रत्याह यमः—

पुनर्भोजनमध्वानं भाराध्ययनमैथुनम् ।

सन्ध्यां प्रतिग्रहं होमं श्राद्धभुक्त्वष्ट वर्जयेत् ॥

होमं स्वयं न कुर्यात्तु अन्यमेव तु कारयेत् ।

यथाऽऽह कात्यायनः—

सूतके च प्रवासे च अशक्तौ श्राद्धभोजने ।

एवमादिनिमित्तेषु याजयेन्न तु हापयेत् ॥

इति । हावयेदिति यद्गोभिलादिभिरप्युक्तं तदेवमादिनिमित्तेषु याजयेदित्यर्थः । होतुरन्यस्यालाभे भविष्यपुराणेऽभिहितं—

दशकृत्वः पिबेदापो गायत्र्या श्राद्धभुग्द्विजः ।

ततस्सन्ध्यामुपासीत जपेच्च जुहुयादपि ॥

अन्येऽपि भोक्तृनियमाः निमन्त्रणप्रकरणोक्ताः इहाप्यनुसन्धेयाः । एवं श्राद्धं कुर्वतः फलमाह हारीतः—

कृत्वाऽनेन विधानेन चतुरो लभते वरान् ।

धनमन्नं सुतानायुर्ददते पितरो भुवि ॥

याज्ञवल्क्योपि—

आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च ।

प्रयच्छन्ति तथा राज्यं प्रीता नृणां पितामहाः ॥ इति ॥

इति स्मृतिचन्द्रिकायां पिण्डप्रतिपत्त्यादिविषयाणि
समाप्तं च पार्वणश्राद्धविधानं

---

अथ यथाशक्ति पार्वणानुष्ठानविधिः.

तत्र शातातपः—

यथाकथञ्चिन्नित्यानि कुर्यादिन्दुक्षयादिषु ।
पात्रद्रव्यादिसम्पत्सु सर्वकामफलं लभेत् ॥

अमावास्यादिकालेषु चोदितानि नित्याधिकाराणि पार्वणश्राद्धादीनि पात्रद्रव्यादिसम्पत्त्यलाभेऽपि यथाकथञ्चित् कुर्यात् यथाशक्ति कुर्यादिति पूर्वार्धस्यार्थः । तत्र पात्रासम्पत्तौ देवलेनोक्तं—

एकेनापि च विप्रेण षट्पिण्डं श्राद्धमाचरेत् ।
षडर्घ्यान् दापयेत्तस्मै षड्भ्यो दद्यात्तथाऽऽसनम् ॥
पिता भुङ्क्ते द्विजकरे मुखे भुङ्क्ते पितामहः ।
प्रपितामहस्तु तालौ च कण्ठे मातामहस्स्मृतः ॥
प्रमातामहस्तु हृदये वृद्धो नाभौ तु संस्थितः ।

इति । वृद्धः प्रमातामहस्य पिता । अत्र वसिष्ठः—

यद्येकं भोजयेच्छ्राद्धे दैवं तत्र कथं भवेत् ।
अन्नं पात्रे समुद्धृत्य सर्वस्य प्रकृतस्य च ॥
देवतायतने कृत्वा ततश्श्राद्धं प्रवर्तयेत् ।
प्रास्येदग्नौ तदन्नं तु दद्याद्वा ब्रह्मचारिणे ॥

इति । देवतायतनं वैश्वदेविकब्राह्मणोपवेशनस्थानम् । तत्र ब्राह्मणार्चनात्पूर्वं स्थण्डिले विश्वान् देवानावाह्यासनकल्पनादिधूपदीपाच्छादनान्तमाराधनं कृत्वा पश्चात् पित्रर्थमुपविष्टं ब्राह्मणमभ्यर्च्य अन्नपरिवेषणकाले प्रकृतस्य श्राद्धार्थं सम्पा-

दितस्य सर्वस्य सम्बन्धि किञ्चिदन्नं पात्रे समुद्धृत्याभिघार्याराधितस्थाने पुरतो निधायान्नत्यागकाले पूर्वमेतदन्नं विश्वान् देवानुद्दिश्य त्यक्त्वाऽनन्तरं श्राद्धं प्रवर्तयेत्। पितॄनुद्दिश्य ब्राह्मणस्य पुरतः परिविष्टमन्नं त्यजेदित्यर्थः। एकस्यापि ब्राह्मणस्यालाभे देवलेनोक्तं—

पात्राभावे परं कृत्वा पितृयज्ञविधिं नरः।
निर्दिश्याप्यन्नमुद्धृत्य यत्र पात्रं ततो गतिः॥
निधाय वा दर्भवटूनासनेषु समाहितः।
प्रैषानुप्रैषसंयुक्तं विधानं प्रतिपादयेत॥
पात्राभावे क्षिपेदग्नौ गवे दद्यादथाप्सु वा।
न तु प्राप्तस्य लोपोस्ति पैतृकस्य विशेषतः॥

अस्यार्थः—पात्राभावेऽनुकल्पतयोक्तविप्रस्याभावे पितृयज्ञविधिं पिण्डपितृयज्ञधर्मकमग्नौकरणं परं केलवं कृत्वा अवावास्यायामन्नं भाजनादावुद्धृत्य निर्दिश्य चतुर्थ्यन्तशब्देन देवान् पितॄनुद्दिश्य उद्धृतमन्नं त्यक्त्वा यत्रात्यन्तानतिदूरे पात्रलक्षणान्वितो विप्रोस्ति, तत्र नीत्वा तस्मै तदन्नं समर्पयेत्। यद्वा—पितृयज्ञधर्मकमग्नौकरणं कृत्वा दर्भवटून् कुशमयान् विप्रप्रतिनिधीन् वटूनत्यन्ताल्पपरिमाणानासनेषु संस्थाप्य दैवे क्षणः क्रियतां श्राद्धे क्षणः क्रियतामित्यादिप्रैषसंयुक्तमों तथेत्याद्यनुप्रैषसंयुक्तं कृत्स्नं श्राद्धविधानं कृत्वा देवपित्रर्थं त्यक्तमन्नं पूर्ववत्पात्रलणयुक्तविप्रेभ्यः प्रतिपादयेत्समर्पयेत्। अतिदूरस्थे

तु पात्रे पक्षद्वयेऽपि त्यक्तमन्नमग्नौ क्षिपेत्। अथवा गवे भक्षणार्थं प्रयच्छेत्। नद्याद्युदके वा क्षिपेत्। न तु पात्राभावमात्रेण कर्मणो लोपः कार्य इति। पक्वद्रव्यसम्पादनासम्भवे तु सुमन्तुः—

पाकाभावेऽधिकारस्स्याद्विप्रादीनां नराधिप।
अपत्नीनां महाबाहो विदेशगमनादिभिः॥
सदा चैव तु शूद्राणामामश्राद्धं विदुर्बुधाः।
आत्मनो देशकालाभ्यां विषमे समुपागते॥
आपद्यनग्नौ तीर्थे च प्रवासे पत्नचसम्भवे।
चन्द्रसूर्यग्रहे चैव दद्यादामं विशेषतः॥

इति। विप्रादीनां त्रैवर्णिकादीनां पत्नीरहितानां विदेशगमनादिभिश्च कारणैः पाकसम्पादनासम्भवे आमश्राद्धे अधिकारः स्यात्। चन्द्रसूर्यग्रहेऽपि यस्य पाकासम्भवः स आमं दद्यात्। यस्य वा भोक्तुर्ब्राह्मणस्यालाभः सोप्यामं दद्यात्। शूद्रस्तु सर्वश्राद्धेषु पार्वणविधानेनाममेव दद्यात्। तथाच मार्कण्डेयः—

सर्वं श्राद्धं तथा कार्यं शूद्रेणाप्येवमेव तु।
मन्त्रवर्जं तु शूद्रस्य सर्वमेवं विधीयते।

एवमेव पार्वणविधिनैव। तथाच प्रचेताः—

स्त्री शूद्रस्स्वपचश्चैव जातकर्मणि चाप्यथ।
आमश्राद्धं तदा कुर्याद्विधिना पार्वणेन तु॥

स्वयं पचतीति स्वपचः। वायुपुराणे—

न पक्वं भोजयेद्विप्रान् सच्छूद्रोपि कदाचन ।

भोजयेत्त्वश्नतां पापं तस्यापि प्रभवेत्सताम् ॥

सतां शूद्रान्नभोजने भोक्तॄणां शूद्रस्य च पापं भवेत् । कः पुनस्सच्छूद्र इत्यपेक्षिते व्याघ्रः—

संस्कृतायां तु शूद्रायां ब्रह्मवीर्यसमुद्भवः ।

स्वकर्मनिरतश्चैव सच्छूद्रः संप्रकीर्तितः ॥

उशनसा तु लब्धक्रीतादिपक्वान्नसद्भावेऽप्यामश्राद्धमेव द्विजैः कार्यमित्युक्तं—

अपत्नीकः प्रवासी च यस्य भार्या रजस्वला ।

सिद्धान्नेन न कुर्वीत आमं तस्य विधीयते ॥

सिद्धान्नेन कार्यान्तरार्थं यथाकथञ्चित्सिद्धान्नेन । अपत्नीकादिग्रहणं पाकसामग्र्यादिरहितपुरुषोपलक्षणार्थम् । अत एव जमदग्निः—

न भवेद्यस्य सामग्री दारा वा गृहमेव वा ।

आमश्राद्धं प्रकुर्वीत वृद्धो बालश्च यो भवेत् ॥

पाकसामग्रीसद्भावे कस्यचिदामश्राद्धं कर्तव्यमित्याह स एव—

यावत्स्यान्नाग्निसंयुक्तः उत्सन्नाग्निरथापि वा ।

आमश्राद्धं तदा कुर्याद्धस्तेऽग्नौकरणं भवेत् ॥

पक्वेन श्राद्धं क्वचिदावश्यकमित्याह हारीतः—

श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्तितम् ।

अमावास्याद्यनियतं माससंवत्सरादृते ॥

अनेन मासिकमाब्दिकं च श्राद्धमवश्यं पक्वान्नेन कार्यमिति वचोभङ्ग्योक्तमिति मन्तव्यम् । यत्पुनर्जमदग्निनोक्तं—

श्राद्धज्ञः श्रद्धया श्राद्धं श्राद्धकाले यथाविधि ।
पक्वेन वाऽश्रितेनापि नूनं कुर्यात्पितुस्सुतः ॥

इति, तत् मासिके सांवत्सरिकेऽपि सर्वथा पक्वान्नासिद्धौ आमद्रव्यविधानार्थमिति न पूर्वोक्तजमदग्निवचनेन गतार्थम् । आमश्राद्धे विशेषमाह व्यासः—

आमं तदनु कौन्तेय दद्यादन्नं चतुर्गुणम् ।
सिद्धान्ने तु विधिर्यस्स्यादामश्राद्धेऽप्यसौ विधिः ॥
आवाहनादि सर्वं स्यात्पिण्डदानं च भारत ।
दद्याद्यच्च द्विजातिभ्यः शृतं वाऽशृतमेव वा ॥
तेनाग्नौकरणं कुर्यात्पिण्डांस्तेनैव निर्वपेत् ।

अन्नमामरूपं पुरुषापेक्षया चतुर्गुणं दद्यादित्यर्थः । अग्नौकरणमत्र पाणावेव,

आमश्राद्धं यदा कुर्याद्विधिज्ञः श्राद्धदस्तदा ।
हस्तेऽग्नौकरणं कुर्याद्ब्राह्मणस्स्वविधानतः ॥

इति तेनैवोक्तत्वात् । षट्त्रिंशन्मतेऽपि—

आमश्राद्धं यदा कुर्यात्पिण्डदानं कथं भवेत् ।
गृहपाकात्समुद्धृत्य सक्तुभिः पायसेन वा ॥

इति । पिण्डदानं भवेदिति शेषः । आमद्रव्यगृहपाकसक्तुपायसेषु यथालाभं व्यवस्था । एतच्चामश्राद्धं पूर्वाह्णे कार्यं,

'आमश्राद्धं तु पूर्वाह्णे' इति शातातपस्मरणात् । यत्तु तेनैवोक्तं—

मध्याह्नात्परतो यत्तु कुतपस्समुदाहृतः ।
आममात्रेण तत्रैव पितॄणां दत्तमक्षयम् ॥

इति, तत् श्राद्धकर्तुः आमश्राद्धविषयमित्यपरार्केण साधितम् । आमद्रव्यासंभवे तु व्यासेनोक्तं—

द्रव्याभावे द्विजाभावे प्रवासे पुत्रजन्मनि ।
हेमश्राद्धं प्रकुर्वीत यस्य भार्या रजस्वला ॥

अत्राप्यामश्राद्धविशेषो यथासम्भवमनुसन्धेयः । आमश्राद्धे हेमश्राद्धे च भोजनप्रयुक्तापोशनकर्मादीनां 'यथासुखं जुषध्वं तृप्तास्स्थ' इत्यादीनां च द्वारकार्यलोपान्निवृत्तिरवगन्तव्या । केषु चिन्मन्त्रेषूहोप्येवमवगन्तव्यः । तथाच मरीचिः—

आवाहने स्वधाकारे मन्त्रा ऊह्या विसर्जने ।
अन्नकर्मण्यनूह्यास्स्युरामश्राद्धविधिः स्मृतः ॥

आवाहने आवाहनमन्त्रे । 'पितॄन् हविषे अत्तवे' इत्यत्र अत्तव इति पदस्थाने स्वीकर्तव्य इत्यूहः कार्यः । स्वधाकारे 'नमो वः पितर इषे' इत्यादिमन्त्रे इष इति पदस्थाने आम द्रव्यायेत्यूहः कर्तव्यः । विसर्जने विप्रविसर्जनमन्त्रे 'वाजेवाजे' इत्यादिके तृप्ता इति पदस्थाने उद्धृत्य आमेन तर्पयन्त इत्यूहः कार्यः । अन्नकर्माणि ब्राह्मणाङ्गुष्ठनिवेशनादौ 'विष्णो हव्यं रक्षस्व' इत्यादयो मन्त्रा अनूह्यास्स्युः ।

आमश्राद्धविधिस्स्मृतः इत्यामश्राद्धग्रहणं हेमश्राद्धोपलक्षणार्थम्। हेमद्रव्यालाभेऽपि स्मृत्यन्तरोक्तं—

तृणानि वा गवे दद्यात्पिण्डान्वाऽथापि निर्वपेत्।
तिलोदकैः पितृन्वाऽथ तर्पयेत्स्नानपूर्वकम्॥
अग्निना वाऽदहेत्कक्षं श्राद्धकाले समागते।
तस्मिंश्चोपवसेदह्नि जपेद्वा श्राद्धसंहिताम्॥

इति। अत्रापि यथासम्भवं व्यवस्था। अङ्गसम्पादनासम्भवेऽपि स्मृत्यन्तरोक्तं—

अङ्गानि पितृयज्ञस्य यदा कर्तुं न शक्नुयात्।
स तदा वाचयेद्विप्रान् सकला सिद्धिरस्त्विति॥

पितृयज्ञस्य श्राद्धस्य सकला सिद्धिः सकलाङ्गसिद्धिरस्त्विति भवन्तो ब्रुवन्तु इति प्रार्थनेति। निमन्त्रितान् विप्रान् सकलाङ्गसिद्धिरस्य श्राद्धस्यास्त्विति वाचयेदित्यर्थः—विस्मृत* पार्वणानुष्ठानासम्भवे तु व्यासेनोक्तं—

त्यक्ताग्नेः पार्वणं नैव नैकोद्दिष्टं सपिण्डनम्।
अत्यक्ताग्नेस्तु पिण्डोक्तिस्तस्मात्सङ्कल्प्य भोजयेत्॥

अयमर्थः—त्यक्ताग्नेरविधिनोत्सृष्टाग्नेः पार्वणैकोद्दिष्टसपिण्डीकरणात्मकश्राद्धकर्मणि नैवाधिकारः। पिण्डोक्तिः श्राद्धं कर्तव्यमित्युक्तिः अत्यक्ताग्नेः त्यक्ताग्निव्यतिरिक्तस्यैव अ...

* विस्तृत.

क्ताग्नेरेव श्राद्धाधिकार इति यावत्। तस्मात्त्यक्ताग्निरेव सङ्कल्पं भोजयेत्। सङ्कल्पविधानेन श्राद्धं कुर्यादिति ॥

सङ्कल्पविधानस्य पार्वणविधानात्को भेद इत्यपेक्षिते स एवाह—

> सङ्कल्पं तु यदा कुर्यान्न कुर्यात्पात्रपूरणम्।
> नावाहनाग्नौकरणं पिण्डांश्चैव न दापयेत् ॥

पात्रपूरणमर्घ्यदानम्। आवाहनस्य समन्त्रकस्य निषेधः, नत्वावाहनमात्रस्य * तदभावे देवपितृसान्निध्याभावात्। ततश्चावाहनमन्त्रमनुक्त्वैव पुरूरवार्द्रवसंज्ञकान् विश्वान् देवान् आवाहयामीत्येतावन्मात्रमुक्त्वा देवावाहनं कार्यम्। पित्राद्यावाहनेऽप्येवमेव। पिण्डांश्चैवेत्यत्र चैवशब्देन उच्छिष्टपिण्डस्यापि निषेधः। अत एव स्मृत्यन्तरे—

> सङ्कल्पं तु यदा श्राद्धं न कुर्यात्पात्रपूरणम्।
> विकिरं च न दातव्यम्

इति स्पष्टमुक्तम्।

एवमनुकल्पानुष्ठानेऽपि शाठ्याभावे सति मुख्यकल्पानुष्ठानफलं भवति। तथा च स्मृत्यन्तरं—

> श्राद्धानुकल्पं यः कुर्याज्जात्यवस्थाद्यपेक्षया।
> श्राद्धांशे सर्वमाप्नोति मुख्यकल्पफलं नरः ॥

इति। श्राद्धांशे श्राद्धप्रधानांशे ब्राह्मणभोजनमात्रे पिण्डप्रदा

---

* स्वरूपस्य.

नमात्रेऽपि वा कृते, अङ्गांशे यथाशक्ति कतिपयानुष्ठानेऽपि कृत इत्यर्थः ॥

इति स्मृतिचन्द्रिकायां यथाशक्तिपार्वणानुष्ठानविधिः.

---

एवं प्रतिमासं कर्तव्यं पार्वणश्राद्धमुक्तम्.

अथ प्रतिसंवत्सरं कर्तव्यं सांवत्सरिकश्राद्धमुच्यते । अत्र लोकाक्षिः—

श्राद्धं कुर्यादवश्यं तु प्रमीतपितृकस्स्वयम् ।
इन्दुक्षये मासिमासि वृद्धौ प्रत्यब्दमेव च ॥

स्वयंग्रहणमादरार्थं न पुनः पुत्रशिष्यर्त्विगादिनिवृत्त्यर्थम् । यजमानस्य पितः असावेतत्ते तत इत्यन्यकर्तृकपिण्डनिर्वपणदर्शनात् । असावेतत्ते तत इति मन्त्रेण यजमानस्य पित्रे ऋत्विगादिः पिण्डान् दद्यादिति । तत्रामुकगोत्रामुकशर्मन्नेतत्ते तत इति मन्त्रमुक्त्वाऽमुकगोत्रायामुकशर्मणे यजमानस्य पित्रे असावेतत्ते, इत्ययं पिण्डो न यजमानयजमानस्य । स्मृत्यन्तरे यजमानस्येत्युक्त्वा बर्हिषि पिण्डस्थापनमिति विशेषोऽवगन्तव्यः । एतच्चान्यकर्तृकत्वं यजमानस्यासामर्थ्ये गुरुतरकार्यान्तरव्यग्रत्वेन कालातिपत्तिविषये वा द्रष्टव्यम् । प्रत्यब्दं श्राद्धं कथं कर्तव्यमित्यपेक्षिते जातूकर्णः—

पितुः पितृगणस्थस्य कुर्यात्पार्वणवत्सुतः ।
प्रत्यब्दं प्रतिमासं च विधिर्ज्ञेयस्सनातनः ॥

पितृगणस्थः सपिण्डितः तस्य प्रत्यब्दं प्रतिमासं च पार्वणवदाब्दिकं मासिकं च श्राद्धं सुतो मृताहे कुर्यादित्यर्थः। एतदुक्तं भवति—यथा अमावास्याश्राद्धे अर्घ्यदानादौ पितृपितामहप्रपितामहानां त्रयाणामुद्देशः तथा पितुराब्दिकश्राद्धेऽपि त्रयाणामुद्देशः कार्यः। इति।

दर्शवत्स्यात् त्रयोद्देशः सपिण्डीकरणे कृते। इति। प्रतिमासं चेति तावत्—

'तान्येवतु पुनः कुर्यात्' इति वचनात् सपिण्डीकरणादूर्ध्वमपि प्रथमसंवत्सरे क्रियमाणानुमासिकेषु पार्वणवत्त्रिदेवताकं कुर्यादिति विधानार्थमुक्तमिति मन्तव्यम्। न च वाच्यं—

पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवम्।

इति वचनात्पितृमृताहि मातामहादीनामपि श्राद्धं कार्यमिति। यदाह पारस्करः—

पितुर्गतस्य देवत्वमौरसस्य त्रिपूरुषम्।

इति। देवत्वं गतस्य सपिण्डीकरणेन पितृत्वं प्राप्तस्य। त्रिपूरुषग्रहणं षट्पुरुषनिवृत्त्यर्थं। तेन मृताहे मातामहश्राद्धं न कार्यम्। कात्यायनोपि—

कर्षूसमन्वितं मुक्त्वा तदाद्यं श्राद्धषोडशम्।

प्रत्याब्दिकमशेषेषु* पिण्डास्स्युषडिति स्थितिः॥

इति। कर्षूसमन्वितं सपिण्डीकरणम्। अनेनार्थात्कर्षूसमन्वि-

* प्रत्याब्दिकं च शेषेषु.

तादिषु मातामहश्राद्धं न विद्यत इत्युक्तम्। सङ्ग्रहकारस्तु—पितृमृताहे मातामहादिश्राद्धं न कार्यमिति न्यायेनैवोपपादयति—

याज्ञवल्क्येन कालस्तु अमावास्यादिनोदितः।
अविशेषेण पित्र्यस्य तथा मातामहस्य च ॥
युगपच्च स विज्ञेयो वचनाद्वक्ष्यमाणकात्।
कालभेदेन तन्त्रं स्याद्देशभेदेन चैव हि ॥
तस्मात्तन्त्रविधानात्तु यौगपद्यं प्रतीयते।
अमावास्यादिकालेषु तद्ज्ञेयं न मृतेऽहनि ॥
अमावास्यादिकालेषु कालैकत्वात्सहक्रिया।
मृताहनि तु तद्भेदान्न युज्येत सहक्रिया ॥ इति ॥

प्रथमश्लोकस्यायमर्थः—अमावास्यादिना

'अमावास्याऽष्टका वृद्धिः कृष्णपक्षोऽयनद्वयम्'

इत्यादिवचनेन श्राद्धकालः अविशेषेण सामान्येन पित्र्यस्य पितृश्राद्धस्य मातामहसम्बन्धिश्राद्धस्य च याज्ञवल्क्येनोदित इति।

युगपच्च स विज्ञेय इति पादस्यायमर्थः—स याज्ञवल्क्येनोदितः कालः पिण्डपितृयज्ञदर्शश्राद्धयोरिव न भागक्रमेण। किन्तु पितृश्राद्धमातामहश्राद्धयोर्युगपदेकदा भागक्रममन्तरेणैव ज्ञेय इति। ननु—कालविधायके पूर्वोक्तवचने युगपदादिपदाभावात्कथमेवमवगतिरित्याशङ्क्योक्तम्—वचनाद्वक्ष्यमाणका

दिति। तस्यायमर्थः—यद्यपि न कालविधायकात्पूर्वोक्तवचना- देवमवगतिः तथाऽपि—

मातामहानामप्येवं तन्त्रं वा वैश्वदैविकम्।

इत्यस्मिन्नेव श्राद्धप्रकरणे वक्ष्यमाणाद्वचनादेवमवगतिर्भविष्यतीति। नन्वस्मादपि वचनात्कथं यौगपद्यावगतिरित्याशङ्क्य कालभेदेनेत्यादिना समर्थयते स्पष्टार्थोऽयं श्लोक इति। एवञ्च—यत्र पैतृकस्य मातामहश्राद्धस्य चामावास्यादिकाले यौगपद्यं प्रतीतं तत्रैवानयोः समानतन्त्रत्वं न पुनर्मृताह इत्याह—

अमावास्यादिकालेषु तत् ज्ञेयं न मृतेऽहनि।

इति। मृतेऽहनि यौगपद्यस्याप्रतीतेरित्यभिप्रायः। कथं पुन यौगपद्यस्याप्रतीतिर्मृताह इत्याशङ्क्याह—अमावास्यादिकालेष्वित्यादि। तस्यायमर्थः—अमावास्यादिकालेषु पैतृकमातामहश्राद्धयोरविशेषेण प्राप्तयोः कालैकत्वादेकस्मिन्नेव कालभागे कर्तव्यत्वावगमात्समानतन्त्रता युज्यते। मृताहे तु प्रतिपुरुषमायुःप्रमाणभेदात्पितृमातामहयोर्भिन्नकालत्वान्मातामहश्राद्धस्य पितृमृताहो न काल इति, तद्भागरूपकालैक्यस्य दूरोत्सारितत्वात्तन्निबन्धेनानयोस्समानतन्त्रताऽत्यन्तं न युज्यत इति। अनेनैव न्यायेन मात्रादिश्राद्धस्यापि पितृमृताहो न काल इति, तत्र तस्य प्राप्त्यभावात्। पितृमृताहे केवलपितृपितामहप्रपितामहानामेव देवतात्वं, न पुनस्सपत्नीकानामिति मन्तव्यम्। यद्यप्यनेनैव न्यायेन पितृमृताहः पितामहश्राद्धस्यापि न कालः, मातृमृताहश्च

पितामह्यादिश्राद्धस्य न कालः, तथाऽपि पार्वणवदिति वचनात् पितामहप्रपितामहयोरपि पितृमृताहे, पितामहीप्रपितामह्योरपि मातृमृताहे दैवतात्वं न तु न्यायत इति सर्वमनवद्यम् । यदा पितुस्सांवत्सरिकश्राद्धकालः, मातुस्सांवत्सरिकश्राद्धकालश्च दैवादेको जातः तदाऽपि न सपत्नीकं पितृसांवत्सरिकश्राद्धम् । किन्तु, मातापित्रोर्मरणपौर्वापर्यानुसारिक्रमेण तयोः सांवत्सरिकश्राद्धद्वयं विप्रनिमन्त्रणादितद्विसर्जनान्तं पृथगेव कार्यम् । यदा तु मातापित्रोर्युगपन्मरणे पौर्वापर्यमज्ञातं, तदा पूर्वं पितुस्सांवत्सरिकं कृत्वा पश्चान्मातुस्सांवत्सरिकश्राद्धं कार्यं पितुर्मुख्यत्वात् । एवम्भूतविषये भ्रात्रादिसांवत्सरिकश्राद्धदिनैक्ये श्राद्धमनेकं ज्येष्ठादिक्रमेण पृथगेव कार्यम् । यत्तु प्रचेतसोक्तं—

नैकः श्राद्धद्वयं कुर्यात्समानेऽहनि कुत्रचित् ।

इति, तदेकस्मिन्नेव श्राद्धे पुनःपुनः श्राद्धं न कुर्यादित्येवंपरम् । तेन नानानिमित्तकानेकश्राद्धमेकस्मिन्नहनि कुर्वतो न प्रचेतसो वचनविरोधः । यत्तु लोकाक्षिणोक्तं—

मृतेऽहनि समासेन पिण्डनिर्वपणं पृथक् ।
नवश्राद्धं च दम्पत्योरन्वारोहण एव तु ॥

इति, अनेनापि न मृताहे सपत्नीकं श्राद्धमुक्तं* येन पूर्वोक्तविरोधस्स्यात् । किं तर्ह्यनेनोक्तं? उच्यते-दम्पत्योर्मृताहैक्ये समासेन संक्षेपेण पिण्डनिर्वपणं यथा द्वैपितृकश्राद्धे एकस्मिन्पिण्डे द्वयोः पि-

* पिण्डमुक्तं.

त्रोरमुकनाम्ने अमुकनाम्ने च इत्युद्दिश्यैक एव पिण्डो दीयते तथेहाप्येकस्मिन् पिण्डे द्वयोर्मातापित्रोरमुकायामुकायै चेत्युद्देशं कृत्वा एक एव पिण्डो देयः। ब्राह्मणाश्चायुग्माः पिण्डदानवदेव द्वावेवोद्दिश्य भोजयितव्याः । पिण्डनिर्वपणग्रहणस्य श्राद्धोपलक्षणपरत्वात् । एवं चैतच्छ्राद्धमनेकोद्देश्यसाहित्यरूप* चोदनालिङ्गात्पार्वणधर्मकं तन्त्रेण कार्यम् । नवश्राद्धं तु दम्पत्योः पृथक्कार्यम् । ततश्चैकोद्दिष्टरूपं श्राद्धद्वयं प्राग्द्वादशाहान्नवश्राद्धदिनेषु पितुर्मातुश्च कार्यम्। एवमुक्तविधं सांवत्सरिकश्राद्धं नवश्राद्धं चैकचितामन्वारोहणे मात्रा कृते कर्तव्यम् । नान्यत्रेत्यवधारयितुमन्वारोहण एवेत्युक्तम् । यत्तु स्मृत्यन्तरं—

एकचितां समारूढौ दम्पती निधनं गतौ ।
पृथक्छ्राद्धं तयोः कुर्यादोदनं च पृथक्पृथक् ॥

इति, ओदनं ओदनपिण्डः तदेतन्नवश्राद्धमात्रविषये योजयेत्। प्रत्यब्दं तद्येषामेकोद्दिष्टविधानेनैव मासिकमाब्दिकं च श्राद्धं मातापित्रोर्मृताहे भेदेनोदितं तद्विषयमिति न पूर्वोक्तसांवत्सरिकश्राद्धविशेषेण सहास्यापि विरोधः । यत्पुनर्भृगुणैव—

प्रत्यब्दं च इत्युक्त्वाऽनन्तरमुक्तं नवश्राद्धं युगपत्तु समापयेत् । इति, तस्यायमर्थः—

मातापित्रोर्मृताहैक्ये मात्रा चैकचितन्वाहरोहणे कृते सति पितुर्नवश्राद्धं चैककालमेकपाकेन (पाकाभावस्यैव ?) तन्त्रेण

* श्राद्धपर इत्यधिकं.

प्रधानात्पूर्वाङ्गकलापं कृत्वा प्रथमं पित्रे पश्चान्मात्रे च श्राद्धं कृत्वा पाश्चात्याङ्गकलापं च कृत्वा तन्त्रेण कुर्यादिति। अनेकमातृभिरेकचित्यामन्वारोहणे कृतेऽप्येवमेव। पितुरनन्तरं साक्षान्मातुस्तदनन्तरमुपमातृषु ज्येष्ठादिक्रमेण नवश्राद्धं कुर्यात् तथाच स एव—

एककाले गतासूनां बहूनामथवा द्वयोः।
तन्त्रेण श्रपणं कृत्वा कुर्याच्छ्राद्धं पृथक्पृथक्॥
पूर्वकस्य मृतस्यादौ द्वितीयस्य ततः पुनः।
तृतीयस्य ततः कुर्यात्सन्निपातेष्वयं क्रमः॥

इति। श्रपणं भद्रयान्नपाकः पूर्वकस्य मुख्यस्य द्वितीयस्य मुख्यापेक्षा जघन्यस्य तृतीयस्य जघन्यतरस्येत्यर्थः। भिन्नचित्यामन्वारोहणे तु सर्वं पृथगेव कार्यम्। एवमुक्तविधिष्वन्यतमविधिना यथोक्तव्यवस्थानुसारिणा मृताहश्राद्धमवश्यं कर्तव्यम्। तथाच कार्ष्णाजिनिः—

ऊषरेषु यथा क्षिप्तं बीजं न प्रतिरोहति।
तथाच तद्भवेत्तेषां यन्न दत्तं मृतेऽहनि॥

एतेन मृताहे अन्नमवश्यं दातव्यमित्यभिप्रायः। 'तच्च पार्वणवत् स्मृतम्' इति जातूकर्णादीनां बहुतराणां पक्षः। 'एकोद्दिष्टविधानेन' इति याज्ञवल्क्यादीनां बहूनाम्। अतएव सुमन्तुः—

कर्तव्यं पार्वणं राजन् नैकोद्दिष्टं कथञ्चन।
सुबहून्यत्र वाक्यानि मुनिगीतानि चक्षते॥

अल्पेतराणि राजेन्द्र एकोद्दिष्टं प्रचक्षते ।

इति । अत्र पार्वणपक्षे चक्षते प्रचक्षते धर्मशास्त्रज्ञाः । अल्पेतराणि बहूनि कतिपयानि वाक्यान्येकोद्दिष्टपक्षं प्रचक्षत इत्यर्थः । तेन एकोद्दिष्टपक्षं परित्यज्य पार्वणपक्ष एव परिग्राह्य इत्याह स एव—

तस्माद्वचनसामर्थ्यात्पार्वणं स्यान्मृतेऽहनि ॥

इति । वचनसामर्थ्याद्बहुतराणां वचनानां सामर्थ्यादित्यर्थः । अयमेवार्थो जैमिनिनाऽप्युक्तः—

'विप्रतिषिद्धधर्मसमवाये भूयसां स्यात्सधर्मत्वम्' इति । प्रत्यक्षश्रुतिमूलत्वात् जातूकर्ण्यादिवचनान्येव बलवन्ति । प्रत्यक्ष श्रुतिश्चेयं—'मासिमासि ऋतावृतौ हेमन्तग्रीष्मवर्षासु प्रतिसंवत्सरे च देवाश्च पितरश्च सहासताम्' इति । प्रतिसंवत्सरे मृताहे देवाश्च पितरश्च सहासतां विश्वेदेवाः पितृपितामहप्रपितामहाश्च श्राद्धं भोक्तुं सह तिष्ठन्त्वित्यर्थः । अनया श्रुत्या सदैवं श्राद्धं कार्यं मृताह इत्युक्तम् । तस्मात्सर्वैरेव पार्वणपक्षो ग्राह्यः । पार्वणविधायकवचनैः एकोद्दिष्टविधायकवचनानां बाधितत्वात् । अथवा कतिपयैरेव पार्वणपक्षः परिग्राह्यः । तथाच स्मृत्यन्तरम्—

पितुः पितृगणस्थस्य कुर्यातां दर्शवत्सुतौ ।
प्रत्यब्दं प्रतिमासं च विधिज्ञौ क्षेत्रजौरसौ ॥

एकोद्दिष्टवदितरे सुताः कुर्युरिति शेषः । अत एव सुमन्तुः—

प्रत्यब्दं पार्वणेनैव विधिना क्षेत्रजौरसौ ।
कुर्यातामितरे कुर्युरेकोद्दिष्टं सुता दश ॥

उक्ता चैवं परस्परविरुद्धानां स्मृतीनां विषयभेदेन व्यवस्था—

श्रुतिद्वैधं तु यत्र स्यात्तत्र धर्मावुभौ स्मृतौ ।
स्मृतिद्वैधे तु विषयः कल्पनीयः पृथक्पृथक् ॥

इति जाबालस्मरणात् । एवमेव विषयव्यवस्था मातृमृताहेऽपीत्याह कात्यायनः—

प्रत्यब्दं यो यथा कुर्यात्पुत्रः पित्रे सदा द्विजः ।
तथैव मातुः कर्तव्यं पार्वणं वाऽन्यदेव वा ॥

यत्तु तेनैवोक्तम्—

पितृव्यभ्रातृमातॄणां एकोद्दिष्टं सदैव तु ।

इति, तत्र मातृशब्दो गौणमुख्यमातृसपत्नीपर इति पितृव्यादिसमभिव्याहारादवगम्यते। अतो न पूर्वोक्तवचनेन सह विरोधः। एतच्च मातृग्रहणं मुख्यमातृव्यतिरिक्तस्त्रीणामुपलक्षणार्थम्। अत एव विष्णुधर्मोत्तरम्—

प्रतिसंवत्सरं कार्यमेकोद्दिष्टं नरैस्स्त्रियाः ।
मृतेऽहनि यथान्यायं नृणां यद्वदिहोदितम् ॥

यद्वत्पुरुषाणां समन्त्रकं श्राद्धं तद्वत् द्विजातिस्त्रीणां कृतविवाहानां समन्त्रकमेव श्राद्धं कार्यम्। इत्यन्त्यपादस्यार्थः। अपरिणीतानां तु स्त्रीणां संस्कारहीनत्वादमन्त्रकमेव । स्त्रिया इत्येतदपुत्रायाः स्त्रिया इत्यभिप्रायकम् । अत एव गर्गः—

अपुत्रा या मृताः काश्चित् स्त्रियो वा पुरुषाश्च ये।
तेषामपि च देयं स्यादेकोद्दिष्टं न पार्वणम् ॥

इति। स्त्रियः मातुस्सपत्न्यादयः। पुरुषाः पितृव्यादयः। यद्वा—

येनास्य पितरो याताः येन याताः पितामहाः।
तेन यायात्सतां मार्गं तत्र गच्छन्न रिष्यति ॥

इति स्मृत्यन्तरोक्तपूर्वपुरुषाचारेणैकोद्दिष्टपार्वणपक्षयोरुदितानुदितहोमवत् अन्योन्यनिन्दार्थवादेन सह विहितयोः मातापितृमृताहश्राद्धविषये व्यवस्था बोद्धव्या। अत्र पैठीनसिः—

विभक्तैस्तु पृथक्कार्यं प्रतिसांवत्सरादिकम्।
एकेनैवाविभक्तेषु कृते सर्वैस्तु तत्कृतम् ॥

इति स्मृतिचन्द्रिकायां मृताहश्राद्धविधिः.

---

अथ श्राद्धभेदप्रकरणोक्तपार्वणविकृतिभूतनित्यश्राद्धादिविषयाणि कानिचिद्वचनानि लिख्यन्ते। तत्र पारस्करः—

अहन्यहनि यच्छ्राद्धं तन्नित्यमिति कीर्तितम्।
वैश्वदेवविहीनं तु अशक्तावुदकेन च ॥

वैश्वदेवविहीनं तु पार्वणधर्मातिदेशतः प्राप्तस्य वैश्वदेविकस्य कर्मणोऽनुष्ठानेन रहितम्। अनेन नित्यश्राद्धं पार्वणवन्न कार्यमिति सूचितम्। अहन्यहनीत्येतदत्यन्तश्रद्धालुविषयं सुसमृद्धविषयं वा। यथाऽऽह देवलः—

एतेन विधिना श्राद्धं कुर्यात्संवत्सरं सकृत् ।
त्रिश्चतुर्वा यथाश्रद्धं मासेमासे दिनेदिने ॥

इति । एतेन विधिना पार्वणविधानेन प्रतिसंवत्सरमेकवारं विशिष्टेऽह्नि, प्रतिसंवत्सरं त्रिवारं वा त्रिषु मासेषु विशिष्टेऽह्नि, प्रतिसंवत्सरं चतुर्वारं चतुर्षु मासेषु विशिष्टेऽह्नि, मासे मासे वा विशिष्टेऽह्नि, दिनेदिने वा यथाश्रद्धं श्रद्धानुसारेण श्राद्धं नित्यश्राद्धं कुर्यादित्यर्थः । यथाश्रद्धमित्येतत् यथासामर्थ्यमित्यस्यापि प्रदर्शनार्थम् । शक्त्यपेक्षयाऽपि व्यवस्थाया उचितत्वात् । अस्य च नित्यश्राद्धस्य कल्पः अस्माभिराह्निके सम्यक्प्रपञ्चित इति नेह प्रपञ्च्यते ॥

नैमित्तिकं तु श्राद्धमेकोद्दिष्टात्मकं पार्वणविकृतिभूतं आशौचकाण्डेऽस्माभिर्वक्ष्यते ॥

काम्यश्राद्धं तु शातातपेन निरूपितं—

कामाय तु हितं काम्यमभिप्रेतार्थसिद्धये ।
पार्वणेन विधानेन तदप्युक्तं यथाक्रमम् ॥

इति । तदपि काम्यश्राद्धमपि पार्वणविधानेन प्रतिपदोक्तधर्मान्तरसहितं विप्रनिमन्त्रणाद्युक्तक्रमानतिक्रमेण कार्यमिति मुनिभिरुक्तमित्यर्थः । तेन काम्यश्राद्धं 'काम्ये तु धुरिलोचनौ' इति वचनेन प्रतिपदोक्तधुरिलोचनसंज्ञिकविश्वदेवान्वितं कार्यम् ॥

वृद्धिश्राद्धमपि प्रतिपदोक्तधर्मान्तरसहितं पार्वणवत्कार्यम्।
तथाच विष्णुधर्मोत्तरं—

वृद्धौ श्राद्धं नरः कुर्वन् नित्यं वृद्धिमवाप्नुयात् ।

इत्युक्त्वा,

वृद्धौ समर्चयेद्विद्वान् नित्यं नान्दीमुखान् पितॄन् ।

संपादितो विशेषस्तु शेषं पार्वणवद्भवेत् ॥

इत्युक्तम् । वृद्धौ पुत्रजन्मविवाहाद्यभिवृद्धिरूपनिमित्ते प्रस्तुत इत्यर्थः ।

पुत्रजन्मविवाहादौ वृद्धिश्राद्धमुदाहृतम् ।

इति वसिष्ठस्मरणात् । नरोत्र पिता* विवक्षितः । अत एव विष्णुपुराणे—

जातस्य जातकर्मादिक्रियाकाण्डमशेषतः ।

पुत्रस्य कुर्वीत पिता श्राद्धं चाभ्युदयात्मकम् ॥

कात्यायनोपि—

स्वपितृभ्यः पिता दद्यात्सुतसंस्कारकर्मसु ।

पिण्डानोद्वहनात्तेषां तस्याभावे तु तत्क्रमात् ॥

अस्यार्थः—सुतसंस्कारकर्मसु जातकर्मादिषु तेषां सुतानां ओद्वहनात् विवाहपर्यन्तेषु पिता स्वपितृभ्यः पिण्डान् दद्यात् । वृद्धिश्राद्धं कुर्यादित्यर्थः । तस्याभावे तु पितुरभावे तु तत्क्रमात् तेषु जातकर्मादिकर्मसु,

असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः ।

इत्यादिवचनात् यो गम्यमानः कर्तृक्रमः तेन क्रमेण ज्येष्ठभ्रात्रादिः स्वपितृभ्यो दद्यादिति । समावर्तनस्यापि विवाहात्प्राचीनसुत-

* पित्रादिः

संस्कारत्वाज्जीवपितृकसमावर्तने पिता स्वपितृभ्यो दद्यात् । अजीवपितृकस्तु पूर्वसंस्कृतभ्रात्रसम्भवे स्वयमेव पितृभ्यो दद्यात् उपनयनेन कर्माधिकारस्य जातत्वात्। विवाहेऽप्येवमेव द्रष्टव्यम् ।

वृद्धौ समर्चयेद्विद्वान् नित्यं नान्दीमुखान् पितॄन् ।

इत्यादिविष्णुधर्मोत्तरवचनशेषस्यायमर्थः—वृद्धौ वृद्धिश्राद्धे नान्दीमुखसंज्ञिकान् पितॄन् समर्चयेत्। सम्पादितो विशेषस्तु नान्दीमुखसंज्ञारूपो वैशेषिको धर्मः सम्पादितः प्रतिपादितः । शेषं पार्वणवद्भवेत् । प्रतिपादितनान्दीमुखसंज्ञारूपवैशेषिकधर्मादन्यद्धर्मजातं पार्वणवदिहाप्यवगन्तव्यमिति ।

नचैवं पुरूरवार्द्रवसंज्ञिकरूपो धर्मः पार्वणवत् विश्वेषां देवानामत्र स्यादिति वाच्यं विष्णुधर्मोत्तरे नान्दीमुखसंज्ञारूपवैशेषिकधर्माभिधानस्य स्मृत्यन्तरोक्तवैशेषिकधर्मप्रदर्शनार्थत्वात् । तस्मात् 'सत्यो नान्दीमुखे वसुः' इत्यादयः स्मृत्यन्तरोक्ताः विशेषाः वृद्धिश्राद्धे ग्राह्याः । तत्र तावच्छातातपेन केचन विशेषा उक्ताः—

मातृश्राद्धं तु पूर्वं स्यात्पितॄणां तदनन्तरम् ।
ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतम् ॥

इति। मातामहश्राद्धं पार्वणवत्सपत्नीकमेव । न तु मात्रादिश्राद्धवन्मातामहादिश्राद्धं पृथक्कार्यमिति वक्तुं श्राद्धत्रयं स्मृतमित्युक्तम् । न तु मातृश्राद्धमित्यनेन मातुरेव श्राद्धं पृथग्विहितं

न पितामहीप्रपितामह्योरिति वाच्यम्। मातृशब्दस्यात्र लक्षणया मात्रादिपरत्वात्। अत एवोक्तं तेनैव—

पित्रादित्रयपत्नीनां भोज्या मातृः प्रति द्विजाः।
स्त्रीणामेव तु तद्यस्मान्मातृश्राद्धमिहोच्यते॥

इति। मातृः प्रति द्विजाः भोज्याः। मातृपितामहीप्रपितामहीरुद्दिश्य भोज्याः द्विजा इत्यर्थः। पित्रादित्रयपत्नीनां स्त्रीणां इह पृथगेवैतच्छ्राद्धं यस्मात्तस्मान्मातृश्राद्धमित्युच्यत इत्यन्वयः। उक्तश्राद्धत्रयस्य कालभेदमाह गार्ग्यः—

मातृश्राद्धं तु पूर्वेद्युः कर्माहन्येव पैतृकम्।
मातामह्यं चोत्तरेद्युर्वृद्धौ श्राद्धत्रयं स्मृतम्॥

एवं दिनत्रयश्राद्धपक्षो यदा दुष्करः तदा त्वाह वृद्धशातातपः—

पृथग्दिने त्वशक्तश्चेदेकस्मिन् पूर्ववासरे।
श्राद्धत्रयं तु कुर्वीत वैश्वदेवं तु तान्त्रिकम्॥

इति। फलदेशकालद्रव्यदेवतासाधारण्यादत्र वैश्वदैविकं तन्त्रेणैव कार्यमित्यर्थः। ननु कथमत्र कालसाधारण्यं?

पूर्वाह्णे मातृकं श्राद्धं मध्याह्ने पैतृकं तथा।
ततो मातामहानां तु वृद्धौ श्राद्धत्रयं स्मृतम्॥

इति शातातपेन मातृश्राद्धादिषु पूर्वाह्णादिकालभेदविधानात्। अतः कथमत्र तन्त्रता? सत्यं शातातपवचनानुसारेणानुष्ठाने कालभेदान्न तन्त्रता। किन्तु—

पूर्वाह्णे दैविकं कार्यं अपराह्णे तु पैतृकम् ।
एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम् ॥

इति प्राचेतसवचनानुसारेणैकदिने प्रातःकाले यदा श्राद्धत्रयानुष्ठानं तदैव वैश्वदैविकं तन्त्रं स्यात् कालैक्यात् । प्रातश्शब्दोत्र न सङ्गवाख्यकालनिवृत्तिपरः—

पूर्वाह्णे वै भवेद्वृद्धिर्विना जन्मनिमित्तकम् ।
पुत्रजन्मनि कुर्वीत श्राद्धं तात्कालिकं बुधः ॥

इत्यत्रिणाऽभिधानात् । लघुपक्षत्वाद्वैश्वदैविकतन्त्रपक्षेणैव सम्प्रत्यनुष्ठानम् । वृद्धशातातपोपि विशेषानाह—

त्रिष्वप्येतेषु युग्मांस्तु ब्राह्मणान्नियतश्शुचिः ।
प्रदक्षिणं तु सव्येन भोजयेद्देवपूर्वकम् ॥

इति । अयमर्थः—द्वौ दैवे ब्राह्मणौ । द्वौ मातृश्राद्धे। द्वौ पितृश्राद्धे। द्वौ सपत्नीकमातामहश्राद्धे एवमष्टावरान् ब्राह्मणान् निमन्त्रणादि विसर्जनान्तं सर्वमुपचारजातं प्रदक्षिणं यथा भवति तथा कुर्वन् सव्येन सव्यांसगतेनैव यज्ञसूत्रेणोत्तरवाससा चान्वितः श्राद्धकर्ता भोजयेदिति । अत्र विष्णुपुराणोक्तविशेषः—

युग्मांस्तु प्राङ्मुखान्विप्रान् भोजयेन्मनुजेश्वर । इति।

प्रचेता अपि विशेषमाह—

न जपेत्पैतृकं जप्यं न मांसं तत्र दापयेत् ।
प्राङ्मुखो देवतीर्थेन क्षिप्रं देशविमार्जनम् ॥ इति।

पैतृकं पितृलिङ्गकं जप्यं भोजनसमयादौ जप्यत्वेन विहितमत्र न

प्रयोक्तव्यं जपस्यैवात्र निषेधात्। पितृलिङ्गोपि करणमन्त्रः प्रयोक्तव्य एव। अतएव स्मृत्यन्तरम्—

पितृलिङ्गेन मन्त्रेण यत्कर्म मुनिभिस्स्मृतम्।
तेनैव तद्विधातव्यं अमन्त्रमकृतं यतः॥

इति। प्राङ्मुखः कर्ता देवतीर्थेन पैतृकमपि कर्मजातं कुर्यादिति तृतीयपादस्यार्थः। क्षिप्रं देशादिमार्जनं भुक्तवत्सु द्विजेषु तानि भोजनस्थानानि संमार्जनं कर्तुं कर्तुः प्राङ्मुखत्वं भोक्तृषूदङ्मुखेषु सत्सु कथञ्चिद्विप्राभिमुख्यसम्भवाद्युज्यते। न तु प्राङ्मुखेषु भोक्तृषु। तेनोदङ्मुखान् ब्राह्मणान् भोजयेदिति पक्षोऽस्माद्वचनाद्गम्यत इत्यवगन्तव्यम्। विष्णुपुराणोक्ते तु प्राङ्मुखान् ब्राह्मणान् भोजयेदिति पक्षे कथञ्चिद्विप्राभिमुख्यं कर्तुरुदङ्मुखत्वे सति युज्यते न तु प्राङ्मुखत्व इति कर्तुरुदङ्मुखत्वपक्षस्तद्वचनाद्गम्यत इति बोद्धव्यम्। एवं च यदा प्राङ्मुखा विप्रास्तदा कर्तोदङ्मुख आवाहनादिकं कुर्यात्। यदा तु विप्रा उदङ्मुखाः तदा कर्ता प्राङ्मुख इत्यवगन्तव्यम्। अत एवाश्वलायनगृह्यपरिशिष्टम्—'आभ्युदयिके युग्माः ब्राह्मणाः। अमूला दर्भाः। प्राङ्मुखेभ्य उदङ्मुखो दद्यात्। उदङ्मुखेभ्यः प्राङ्मुखः। द्वौ दर्भौ पवित्रे' इति। भविष्यत्पुराणेऽपि विशेष उक्तः—

मधुरं भोजनं दद्यान्न चाम्लं परिवेषयेत्।
रक्तपुष्पं तिलांश्चैव ह्यपसव्यं च वर्जयेत्॥

पार्वणे जलोद्भवानि रक्तपुष्पाणि विहितानि तदितररक्तपुष्पाणि प्रतिषिद्धानि इह जलोद्भवरक्तपुष्पस्यापि प्रतिषेधार्थं रक्तपुष्पग्रहणम् । केन तर्हि तिलकार्यं कर्तव्यमित्यपेक्षिते कात्यायनः—'यवैस्तिलार्थः' इति ।

तिलार्थस्तिलकार्यं यवैः कर्तव्यमित्यर्थः । एवंच 'तिलोऽसि सोमदेवत्यः' इति मन्त्रे यवोसीत्यूहः कार्य इत्याह स एव 'तत्र यवोसीत्यूहः' इति । तत्र तथासति तिलकार्यार्थं यवोपादाने सतीत्यर्थः । अन्नत्यागादौ स्वधाशब्दो न प्रयोक्तव्य इत्याह स एव—'न स्वधां प्रयुञ्जीत' इति । एवंच 'स्वधा नमः' इत्यत्र स्वधाशब्दस्य स्थाने स्वाहा इत्येवं प्रयोगः । 'स्वधार्घ्याः' इत्यत्र 'स्वाहार्घ्याः' इत्येवं प्रयोगः कर्तव्यः ।

सदा परिचरेद्भक्त्या पितॄनप्यत्र देववत् ।

इति तेनैवाभिधानात् । देववदित्यभिधानात्सव्यजानुप्रपतनं पित्र्येषूपचारेषु न कर्तव्यम् । तथाचोक्तं तेनैव—

निपातो न हि सव्यस्य जानुनो विद्यते क्वचित् ।

इति । एवंच यत्रयत्र पार्वणश्राद्धे दैविकप्रचारादन्यथा पैतृकप्रचारः स्मृतः तत्रतत्र वृद्धिश्राद्धे दैविकप्रचार आश्रयणीयः । मत्स्यपुराणे विशेष उक्तः—'दद्यादर्घ्यं द्वयोर्द्वयोः' इति । अर्घ्यग्रहणं पाद्यादेरपि प्रदर्शनार्थम् । अत एवानन्तरमुक्तं तत्रैव—

युग्मा द्विजातयः पूज्या नान्दीशब्दानुपूर्वकम् ।

इति । एवञ्चैवं प्रयोगः—नान्दीदैवे क्षणः क्रियतामिति दैवे द्वयोर्द्वयोर्युगपदेव निमन्त्रणं कृत्वा ओं तथेति द्वाभ्यां विप्राभ्यां युगपदुक्ते प्राप्नुतां भवन्ताविति कर्ता ब्रूयात् । विप्रौ तु प्राप्नवावेति युगपदेव प्रतिवचनं ब्रूयाताम् । एवमेव पित्र्यनिमन्त्रणं नान्दीमुखश्राद्धे क्षणः क्रियतामिति तु विशेषः । आवाहनादौ तु प्रयोगप्रकारमाह कात्यायनः—"नान्दीमुखान् पितॄनावाहयिष्ये' इति पृच्छति, 'अस्तु स्वधा' इत्यस्य स्थाने तु 'नान्दीमुखाः पितरः पितामहाः प्रपितामहाः मातामहाश्च प्रीयन्ताम्' इति प्रतिवचनम् । 'स्वधां वाचयिष्ये' इत्यस्य स्थाने 'नान्दीमुखान् पितॄन् वाचयिष्ये' इति पृच्छति, नान्दीमुखाः पितर इत्यादि प्रीयन्तामित्यन्तं प्रतिवचनम्" इति । विप्रा ब्रूयुरित्यर्थः । तृप्ताः स्थेति प्रश्नस्थाने सम्पन्नमिति पृच्छेदित्याह स एव—'संपन्नमिति तृप्तिप्रश्ने' इति । पिण्डद्रव्ये तु विशेषमाह स एव—

'दधिबदराक्षतमिश्राः पिण्डाः' इति । कार्या इति शेषः ।

अत एव वृद्धवसिष्ठः—

तृप्तिप्रश्ने तु सम्पन्नं दैवे रुचितमित्यपि ।
दधिकर्कन्धुसंमिश्राः पिण्डाः कार्या यथाक्रमम् ॥

इति । कर्कन्धूः बदरीफलम् । पिण्डदाने विशेषमाह स ए०

प्राङ्मुखो देवतीर्थेन प्राक्कूलेषु कुशेषु च ।
दत्वा पिण्डान्न कुर्वीत पिण्डपात्रमधोमुखम् ॥

इति । प्राक्कूलेषु प्रागग्रेषु । पिण्डदानमत्र नोच्छिष्टसमीपे। किन्तु भोजनशालाया बहिः कार्यं.

प्रदद्यात्प्राङ्मुखः पिण्डान् वृद्धौ नाम्ना स बाह्यतः।

इति वृद्धशातातपस्मरणात्, 'बहिस्तु प्राक्कूलेषु च दध्यक्षतकर्कन्धूमिश्रान् पिण्डान्निधापयेत्' इति प्रचेतसाऽभिधानाच्च। चतुर्विंशतिमतेऽपि विशेष उक्तः—

एकं नाम्ना परं तूष्णीं दद्यात्पिडान् पृथक्पृथक् ।

इति । पृथक्पृथगेकैकस्मिन् द्वौ द्वौ पिण्डौ दद्यात् । तत्र प्रथमपिण्डं नाम्ना गोत्रमन्त्रसहितेन दद्यात् । द्वितीयं तूष्णीं दद्यादित्यर्थः। भविष्यपुराणे तु पिण्डदानमत्र वैकल्पिकमित्युक्तं—

पिण्डनिर्वपणं कुर्यान्न वा कुर्यान्नराधिप ।
वृद्धिश्राद्धे महाबाहो कुलधर्मानवेक्ष्य तु ॥

इति । कुलधर्मानवेक्ष्येत्यभिधानात् येषां कुले पिण्डदानादि विप्रविसर्जनान्तस्य कर्मकलापस्य अननुष्ठानं तेषां विप्रभोजनान्तमेव वृद्धिश्राद्धं कार्यम् । विप्रविसर्जनान्तपक्षेऽपि पितृभ्यो वरयाचनमन्त्रात् 'दातारः' इत्यादेः पूर्वं मातृभ्यो वरयाचनमन्त्रोऽत्र प्रयोज्यः। एतदपि तत्रैवोक्तम्—

माता पितामही चैव तथैव प्रपितामही ।
एता भवन्तु मे प्रीताः प्रयच्छन्तु च मङ्गलम् ॥ इति ।

**इति स्मृतिचन्द्रिकायां पार्वणश्राद्धविकृतिभूतश्राद्धेषु नित्यादिश्राद्धविषयाणि.**

---

अथ वृद्धिश्राद्धस्यैव प्रयोगसौकर्यार्थं कात्यायनाद्युक्तप्रयोगपद्धतिः लिख्यते। तत्र तावत्कात्यायन आह—

अतः परं प्रवक्ष्यामि विशेष इह यो भवेत्।
प्रातरामन्त्रितान् विप्रान् युग्मानुभयतस्तथा ॥
उपवेश्य कुशान् दद्यादृजूनेव हि पाणिना। इति।

पूर्वेद्युर्निमन्त्रितान् विप्रान् उत्तरेद्युः प्रातः पूर्वाह्णे प्रक्षालितपादानासनेषूपवेश्य प्रक्रान्तं कर्म करिष्ये इत्यादि पार्वणवत्कुर्यात्। विशेषस्तु वैश्वदैविकार्थं पित्र्यर्थमपि युग्मानेव ब्राह्मणानुपवेश्य ऋजून् द्विगुणभङ्गराहितान् युग्मान् समूलान् कुशानासनार्थं विप्राणां प्राङ्मुखानामुदङ्मुखानां वा दक्षिणोरुसमीपे पूर्वकुशासनस्योपरि प्राङ्मुख उदङ्मुखो वा दद्यात्। ततो नान्दीदैवे क्षणः क्रियतामित्यादिपूर्वप्रकरणोक्तप्रकारेण दैवे पित्र्ये च पुनरामन्त्रणं च कुर्यात्। ततः पार्वणवद्विश्वान् देवान् विप्रद्वये सकृदावाह्य मातृपितामहीप्रपितामहीरावाहयिष्ये इति मातृवर्गार्थविप्रौ पृष्ट्वा, 'उशन्तस्त्वा हवामहे' इति मन्त्रेण विप्रद्वये मातृवर्गं सकृदावाह्य नान्दीमुखान् पितॄनावाहयिष्ये इति पितृवर्गार्थविप्रौ पृष्ट्वा विप्रद्वयेऽपि पितृवर्गमावाहयेत्। नात्र सपत्नीकानामावाहनम्। ततो नान्दीमुखान् मातामहान् सपत्नीकान् आवाहयिष्ये इति मातामहवर्गार्थविप्रौ पृष्ट्वा सपत्नीकं मातामहवर्गं विप्रद्वये सकृदावाहयेत्। ततोऽर्घ्योदकसंस्कारं कुर्यात्। तत्र विशेष आ-

श्वलायनगृह्यपरिशिष्टेऽभिहितः—"द्वौ दर्भौ पवित्रे पात्राणि चत्वारि 'शं नो देवीः' इत्यनुमन्त्रितासु यवानावपति—

यवोसि सोमदैवत्यो गोसवे देवनिर्मितः ।
प्रत्नवद्भिः प्रत्नः............................... ॥

इति पुष्प्या नान्दीमुखान् पितॄनिमान् लोकान् प्रीणयाहि नस्स्वाहेति स्वधार्घ्याः" इति । समीपनयनमन्त्रोपि स्वाहार्घ्या इत्यूह्यः । अर्घ्यप्रदाने तु विशेषः कात्यायनेन दर्शितः—

गोत्रनामाभिरामन्त्र्य पितृभ्योऽर्घ्यं निवेदयेत् ।
नात्रापसव्यकरणं न पित्र्यं तीर्थमिष्यते ॥
पात्राणां पूरणादीनि दैवेनैव हि कारयेत् ।
ज्येष्ठोत्तरकरान् युग्मान् कराग्राग्रपवित्रकान् ॥
कृत्वाऽर्घ्यं संप्रदातव्यं नैकस्यात्र प्रदीयते ।

इति । ज्येष्ठोत्तरकरानित्यादेरयमर्थः—द्वयोर्द्वयोर्ब्राह्मणयोर्हस्तौ मेळयित्वाऽर्घ्यदानं कार्यं तत्र ज्येष्ठस्य ब्राह्मणस्य हस्ते उत्तरः कार्य इति । 'या दिव्या आपः' इत्याद्यर्घ्यदान मन्त्रान्ते विशेष आश्वलायनगृह्यपरिशिष्टे दर्शितः——'विश्वेदेवा इदं वो अर्घ्यं नान्दीमुखाः पितर इति यथालिङ्गमर्घ्यदानम्' इति । विश्वेदेवा इदं व इत्यत्र सत्यवसुसंज्ञका विश्वेदेवा इति पूर्वप्रकरणोक्तो विशेषो द्रष्टव्यः । एवं यत्रयत्र विश्वेषां देवानां नामनिर्देशः क्रियते तत्रतत्रायं विशेषोऽनुसंधेयः । अर्घ्यदानवत् ब्राह्मणयोर्हस्तौ मेळयित्वा न गन्धा-

द्दिदानं किन्तु पार्वणवदेकैकस्य हस्त एव, अर्घ्यवद्विशेषानभिधानात्। एकैकस्य हस्तेऽपि द्विर्द्विर्गन्धादिदानं कार्यं, 'गन्धादिदानं द्विर्द्विः' इति गृह्यपरिशिष्टेऽभिधानात्। अग्नौकरणविशेषस्तेनैवोक्तः—"पाणौ होमोऽग्नये कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहा" इति। 'नित्यं चाग्नौकरणं स्वाहाकारेण होमश्च' इति गृह्यपरिशिष्टे पाठान्तरम्। पूर्ववदिति वक्तव्ये नित्यमिति तत्रतत्र परिशिष्टकारादिभिरुच्यते। ततश्चायमर्थः—नित्यं चाग्नौकरणं पूर्ववदेवाग्नौकरणं इति पार्वणवदग्नौ पाणौ वा करणमिति। 'इदं विष्णुः' इत्यङ्गुष्ठ ग्रहणमन्त्रस्थाने मन्त्रान्तरमुक्तं तत्रैव—'अतो देवा अवन्न इत्यङ्गुष्ठग्रहणम्' इति। आपोशनदानानन्तरं जपे विशे॰ कात्यायनेन दर्शितः—

मधु मध्विति यस्तत्र त्रिर्जपेच्छ्रेय इच्छता।
गायत्र्याऽन्नं तत्र सोऽत्र मधुमन्त्रविवर्जितः॥

इति। मधुमन्त्रः 'मधुवाता' इत्यादिमन्त्रः। भुञ्जानेषु वि॰ जप्यमन्त्रविशेषस्तेनैवोक्तः—

न चाश्नत्सु जपेदत्र कदाचित्पितृसंहिताम्।
अन्य एव जपः कार्यः सोमसामादिकः शुभः॥

इति। गृह्यपरिशिष्टे—'पावमानीः शंवतीरैन्द्रीरप्रातिरथं च ॰ वयेत्' इति। पावमानीः स्वादिष्ठयेत्येवमाद्याः। शंव॰ 'शंन इन्द्राग्नी भवतामवोभिः' इत्याद्याः। ऐन्द्रीः 'इ॰

त्वा वृषभं वयम्' इत्याद्याः । अप्रतिरथं 'आशुश्शिशानः' इति सूक्तम् । 'मधु वाताः' इत्यृचस्स्थाने "उपास्मै गायता नरः' इति पञ्च मधुमतीश्च श्रावयेत् । 'अक्षन्नमी मदन्त इति षष्ठीं" इति गृह्यपरिशिष्टे पाठान्तरम् । तृप्तिप्रश्नादौ विशेषः कात्यायनेन दर्शितः—

सम्पन्नमिति तृप्ताःस्थप्रश्नस्थाने विधीयते ।
सुसम्पन्नमिति प्रोक्ते शेषमन्नं निवेदयेत् ॥
यस्तत्र विकिरोऽन्नस्य तिलवान् यवमांस्तथा ।
उच्छिष्टसंनिधौ सोऽत्र तृप्तेषु विपरीतकः ॥

इति । तत्र पार्वणे तृप्तेषु विप्रेषु उच्छिष्टसान्निधौ योऽन्नादेः विकिरः तृप्तिप्रश्नत उत्तराभ्यां प्रागनुष्ठेयतया तदीयगृह्यसूत्रे उक्तः, सोऽत्र वृद्धिश्राद्धे विपरीतकः तृप्तिप्रश्नत उत्तराभ्यां ऊर्ध्वमनुष्ठेय इत्यर्थः । पिण्डदानेऽपि विशेषस्तेनैव दर्शितः—

प्रागग्रेषु तु दर्भेषु आद्यमामन्त्र्य पूर्ववत् ।
अपः क्षिपेन्मूलदेशेऽवनेनिक्ष्वेति निस्तिलाः ॥
द्वितीयं च तृतीयं च मध्यदेशाग्रदेशयोः ।
मातामहप्रभृतींस्तु एतेषामेव वामतः ॥
सर्वस्मादन्नमुद्धृत्य व्यञ्जनैस्सूपपायसैः ।
संयोज्य यवकर्कन्धूदधिभिः प्राङ्मुखस्ततः ॥
अवनेजनवत्पिण्डान् दत्वा बिल्वप्रमाणकान् ।
तत्पात्रक्षाळनेनाथ पुनरप्यवनेजयेत् ॥

उत्तरोत्तरदानेन पिण्डानामुत्तरोत्तरः ।
भवेदधश्च करणादधरः श्राद्धकर्मसु ॥
तस्माच्छ्राद्धेषु सर्वेषु वृद्धिमत्स्वितरेषु च ।
मूलमध्याग्रदेशेषु ईषत्सक्तांश्च निर्वपेत् ॥
गन्धादि निर्वपेत्तूष्णीं ततश्चाचमयेद्द्विजान् ।

इति । मातामहप्रभृतींस्तु एतेषामेव वामत इत्यस्यायमर्थः— एतेषां मातृवर्गार्थमवनेजनस्थानानामुत्तरतः कृतपितृवर्गार्थावनेजनस्थानानामुत्तरतः मातामहप्रभृतीनवनेजयेदित्यर्थः । एतदुक्तं भवति—पिण्डस्थाने संस्तीर्णेषु प्रागग्रेषु दर्भेषु मूलमध्याग्रदेशेषु प्रथमं मातृवर्गपिण्डदानार्थमपः क्षिपेत् । तत उत्तरतः पितृवर्गपिण्डदानार्थं, तत उत्तरतो मातामहवर्गार्थमेवमपः क्षिपेदिति । पिण्डान् दत्त्वेत्यत्र मातृभ्यः पितृभ्यो मातामहेभ्यश्चेति शेषः । ईषत्सक्तान् परस्परमीषत्स्पृष्टान् मात्रादिषु पित्रादिषु च प्रत्येकं द्वौद्वौ पिण्डौ देयौ । तत्र प्रथमः पिण्डः समन्त्रकनामगोत्रेण देयः । द्वितीयस्तूष्णीमिति । शेषः प्राचीनप्रकरणोक्तोऽनुसंधेयः । पिण्डार्चनानन्तरं कर्तव्यविशेषस्तस्मिन्नेव दर्शितः—

तद्वद्भिर्भूमिमासिञ्चेत् सुप्रोक्षितमस्त्विति ।
शिवा आपस्सन्त्विति च युग्मानेवोदकेन हि ॥
सौमनस्यमस्त्विति च पुष्पदानमनन्तरम् ।
अक्षतं चारिष्टं चास्त्वित्यक्षतान् प्रतिपादयेत् ॥

:ति। स्वस्तिवाचनेऽपि विशेषस्तेनैव दर्शितः—'युग्मानेव वस्ति वाच्यम्' इति। अक्षय्ये स्वधावचने च विशेषो ना-दीमुखाः पितरः प्रीयन्तामिति। अक्षय्यस्थाने नान्दीमुखान् पेतॄन् वाचयिष्य इति पृच्छति। नान्दीमुखाः पितरः पि ामहाः प्रपितामहश्च प्रीयन्तामिति वचनेन प्राचीनप्रकरणो-क्रमनुसन्धेयम्। शेषं पार्वणवदेव। पार्वणं च द्विविधं विस्तृ-तपार्वणमविस्तृतपार्वणं चेति। तत्राविस्तृतपार्वणं सङ्कल्पवि-धानेन क्रियमाणम्। पिण्डनिर्वापणादिविधानेन क्रियमाणं विस्तृ-तपार्वणम्। पार्वणवदित्यातिदेशिकवचनेन द्विविधपार्वणध-र्मातिदेशाद्विस्तृतपार्वणधर्मानुष्ठानासम्भवे सङ्कल्पविधानपार्वण-र्मकमपि वृद्धिश्राद्धाद्यनुष्ठेयमित्यवगन्तव्यम्।

इति स्मृतिचन्द्रिकायां कात्यायनाद्युक्तवृद्धिश्राद्ध-
प्रयोगपद्धतिः.

---

अथाभ्युदयिकश्राद्धनिरूपणप्रसङ्गादन्यदाभ्युदयिकं कर्म निरूप्यते। तत्र चतुर्विंशतिमतम्—

श्राद्ध आभ्युदये प्राप्ते देवतास्थापनं स्मृतम्।
जातिधर्मकुलश्रेणीलोकानां वृद्धिकारणम्॥
तिस्रः पूज्याः पितुः पक्षे तिस्रो मातामहे तथा।
इत्येता मातरः प्रोक्ताः पितृमातृष्वसाऽष्टमी॥
ब्राह्मयाद्याश्च तथा सप्त दुर्गाक्षेत्रगणाधिपान्।

वृद्ध्यादौ पूजयित्वा तु पश्चान्नान्दीमुखान् पितॄन् ॥
मातृपूर्वान् पितॄन् पूज्य ततो मातामहानपि ।
मातामही ततः केचिद्युग्मा भोज्या द्विजातयः ॥

इति । आभ्युदये अभ्युदयनिमित्ते श्राद्धे प्राप्ते कर्तव्यतया प्रस्तुते ततः प्रागेव मात्रादिपूजनार्थं देवतास्थापनं स्थण्डिलादौ मात्रादिगणाधिपान्तदेवतावाहनं स्मृतमिति प्रथमार्धस्यार्थः । पितुः पक्षे पितृवर्गे तिस्रः मातृपितामहीप्रपितामह्यः पूज्याः । तथा मातामहे मातामहवर्गे तिस्रः मातामहीमातुःपितामहीमातुःप्रपितामह्यः । 'पितृमातृस्वसाऽष्टमी' इति पितृष्वसा सप्तमी मातृष्वसा अष्टमी पूज्याः इत्यष्टौ मनुष्यमातरः प्रोक्ता इति द्वितीयश्लोकस्यार्थः । ब्राह्मयाद्यास्तथा सप्त ब्राह्मी वैष्णवी माहेश्वरी ऐन्द्री वाराही कौमारी चामुण्डा इत्येताः सप्त देवमातरः । तथा दुर्गाक्षेत्रगणाधिपान् । दुर्गां क्षेत्राधिपं गणाधिपं च वृद्ध्यादौ वृद्धिश्राद्धात्प्राक् षोडशोपचारैः पूजयित्वा पश्चान्नान्दीमुखान् पितॄन् श्राद्धे पूजयेदिति तृतीयश्लोकस्यार्थः । शेषं व्यक्तम् । अथवा वृद्धिश्राद्धात्प्राक् कात्यायनोक्तदेवताः पूज्याः । तास्तु तृतीयश्लोके प्रदर्श्यन्ते—

कर्मादिषु च सर्वेषु मातरस्सगणाधिपाः ।
पूजनीयाः प्रयत्नेन पूजिताः पूजयन्ति ताः ॥
प्रतिमासु च शुद्धासु लिखिता वा पटादिषु ।
गन्धपुष्पाक्षतैश्चैव नैवेद्यैश्च पृथग्विधैः ॥

(कुल)कुड्यलग्ना वनोद्धारा पञ्चधारा घृतेन तु ।
कारयेत्सप्तधारा वा नातिनीचा न चोच्छ्रिताः ॥
आयुष्याणि च शान्त्यर्थं जप्त्वा तत्र समाहितः ।
षड्भ्यः पितृभ्यः तदनु श्राद्धदानमुपक्रमेत् ॥
वसिष्ठोक्तो विधिः कृत्स्नः द्रष्टव्योऽत्र निरामिषः ।
गौरी पद्मा शची मेधा सावित्री विजया जया ॥
देवसेना स्वधा स्वाहा मातरो लोकमातरः ।
धृष्टिः पुष्टिस्तथा तुष्टिः आत्मदेवतया सह ॥
आभ्योऽर्घ्यं गन्धपुष्पं च धूपदीपं निवेदयेत् ।

इति । कर्मादिषु नान्दीश्राद्धप्रयोजककर्मोपक्रमेषु आयुष्याणि 'आ नो भद्राः क्रतवः' इत्यादिनोक्तानि* । षड्भ्यः पितृभ्यः पित्रादिभ्यो मातामहादिभ्यश्च मातृश्राद्धपूर्वकं श्राद्धदानमुपक्रमेत् । वसिष्ठोक्तो विधिः वसिष्ठादिस्मृतिकारोक्तविधिः। आत्मदेवता आत्मनोऽभीष्टदेवता ॥

कर्मादिषु च सर्वेषु मातरस्सगणाधिपाः ।
पूजनीयाः प्रयत्नेन पूजिताः पूजयन्ति ताः ॥

इत्यनेनोक्तमात्रादयः पूजनीयाः ।

कन्यापुत्रविवाहेषु प्रवेशे नववेश्मनः ।
नामकर्मणि बालानामन्नप्राशनकर्मणि** ॥
सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने ।

---

* सूक्तानि. ** चूडाकर्मणि वै तथा.

नान्दीमुखं पितृगणं पूजयेत्प्रयतो गृही ॥
कर्मण्यथाभ्युदयिके माङ्गल्यवति शोभने ।
जन्मन्यथोपनयने विवाहे पुत्रकन्ययोः ॥
पितॄन्नान्दीमुखान्नाम तर्पयेद्विधिपूर्वकम् ।

इत्यादिवचनेनोक्तनान्दीमुखश्राद्धस्य चानुष्ठानं क्वचिद्विषये तन्त्रेण कार्यं, न त्वावृत्त्या इत्यत्राह स एव—

गणशः क्रियमाणेषु मातृभ्यः पूजनं सकृत् ।
सकृदेव भवेच्छ्राद्धं आदौ न पृथगादिषु ॥

अस्यार्थः—देशान्तरगतस्य चिरकालमश्रूयमाणसद्भावस्य मृत- इति बुद्ध्या पुत्रादिना कृतप्रेतकार्यस्य कालान्तरे आगतस्य यानि जातकर्मादीनि संस्कारकर्माणि पुनः संभूय क्रियन्ते तथा तस्य कृतप्रायश्चित्तस्य यानि जातकर्मादीनि कर्माणि सम्भूय क्रियन्ते तथोपनयनात्प्राक् स्वस्वकाले कथञ्चिदकृत- चौलपर्यन्तसंस्कारस्य यानि कर्माण्युपनयनात्पूर्वं संभूय क्रियन्ते तेषु गणशस्संभूय क्रियमाणेषु जातकर्मादिसंस्कारेषु मात्रा- दिपूजाया नान्दीश्राद्धस्य च सकृत्तन्त्रेण प्रथमं क्रियमाणस्य कर्मण आदौ अनुष्ठानं न पृथगादिषु नावृत्त्या सर्वसंस्कार- कर्मादिष्विति । यत्तु तेनैवोक्तं—

मातृयागक्रियां पूर्वं कृत्वा शेषं तु मङ्गळम् ।
ऋतुत्रयात्तु कर्तव्यं न चान्यल्लघु मङ्गळम् ॥

इति, तत् पूर्वोक्तव्यतिरिक्तविषये क्रमेण यथाकालक्रियमाणस-

वैसंस्कारकर्मणां षण्मासातिक्रमेऽपि कालात्ययाभावे सति द्रष्टव्यम् ॥

इति स्मृतिचन्द्रिकायां आभ्युदयिककर्मनिरूपणम्.

---

अथ वृद्धिश्राद्धविकृतिभूतकर्माङ्गश्राद्धविषयाणि—

तत्र पारस्करः—

निषेककाले सोमे च सीमन्तोन्नयने तथा।
ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं वृद्धिमत्स्मृतम् ॥

इति। निषेककालो भार्याया ऋतुस्नानकालादारभ्य षोडशरात्रपर्यन्तः। तत्र पूर्णनक्षत्रान्वितदिने गर्भाधानाख्यकर्माङ्गश्राद्धं कार्यम्। सोमे सोमयागकाले तत्र दीक्षादिने तदङ्गश्राद्धं कार्यम्। सोमशब्दोऽत्र आधानाग्निहोत्रादिकर्मणामुपलक्षणार्थः। कर्माङ्गवचनमकरणे कर्मवैगुण्यज्ञापनार्थम्। अत एवैतत्कृत्वैव कर्म कर्तव्यमिति वचोभङ्ग्या शातातपेन दर्शितं—

तानिष्ट्वा तु पितॄन् यज्ञे कर्म वैदिकमाचरेत्।

इति। पितॄन् नान्दीमुखसंज्ञिकान्। वैदिकं कर्म गर्भाधानपुंसवनसीमन्तोन्नयनसोमयागाग्निहोत्रादिकम्। एतच्च कर्माङ्गश्राद्धमसकृत्क्रियमाणाग्निहोत्रादिकर्मणां प्रथममेकदैव कर्तव्यम्। यत आह कात्यायनः—

असकृद्यानि कर्माणि क्रियेरन् कर्मकारिभिः।
प्रतियागं न चैतास्स्युः मातरः श्राद्धमेव च ॥

इति । एताः 'कर्मादिषु च सर्वेषु मातरस्सगणाधिपाः पूजनीयाः प्रयत्नेन' इत्यनेन या गणाधिपसहिताः मातर उक्ता इत्यर्थः । श्राद्धं कर्माङ्गश्राद्धम् । अत एवानन्तरमुक्तं तेनैव—

आधाने होमयोश्चैव वैश्वदेवे तथैव च ।
बलिकर्मणि दर्शे च पूर्णमासे तथैव च ॥
सर्वयज्ञेषु यज्ञज्ञाः वदन्त्येवं मनीषिणः ।
एकमेव भवेच्छ्राद्धमेतेषु न पृथक्पृथक् ॥

इति । होमयोरित्यनेनाधानसमभिव्याहाराद्विवचनात्सायंप्रातरग्निहोमावृत्तौ कर्माङ्गश्राद्धं कार्यम् । यतोऽनन्तरमाह—

नाष्टकासु भवेच्छ्राद्धं न श्राद्धे श्राद्धमिष्यते ।

इति । अष्टकाश्राद्धविषयाः विशेषधर्मास्तत्तद्ग्रन्थोक्ता द्रष्टव्याः ॥ गोष्ठीश्राद्धशुद्ध्यर्थश्राद्धयात्राश्राद्धपुष्ट्यर्थश्राद्धविषयाणि विशेषवचनानि अस्मिन्नेव काण्डे श्राद्धभेदनिरूपणप्रकरणे दर्शितान्यनुसन्धेयानि । सपिण्डीकरणश्राद्धविषयाणि तु विशेषवचनान्याशौचकाण्डे दर्शयिष्यामः ॥

इति स्मृतिचन्द्रिकायां कर्माङ्गश्राद्धविषयाणि.

---

अथ तीर्थश्राद्धविषयाणि—

तत्र मत्स्यपुराणं—

स्नात्वा नदीषु सर्वासु पितॄन् देवांश्च तर्पयेत् ।
तत्रतत्र यथावित्तं कुर्याच्छ्राद्धादिकं तथा ॥

अकालेऽप्यथवा काले तीर्थश्राद्धं तथा नरैः ।
प्राप्तैरेव सदा कार्यं कर्तव्यं पितृतर्पणम् ॥
तीर्थे तु ब्राह्मणान्नैव परीक्षेत कथञ्चन ।
अन्नार्थिनमनुप्राप्तं भोजयेन्मनुशासनात् ॥
सक्तुभिः पिण्डदानं स्यात्संयावैः पायसेन वा ।
कर्तव्यमृषिभिर्दिष्टं पिण्याकेनैङ्गुदेन वा ॥
पिण्याकेन तिलानां वा तत्रसद्भिर्नरैस्सह ।
श्राद्धं च तत्र कर्तव्यमर्घ्यावाहनवर्जितम् ॥
श्वध्वाङ्क्षगृध्रकङ्काद्या घ्नन्ति दृष्ट्वा न ते क्रियाः ।

इति । ऐङ्गुदेन पिण्याकेन इङ्गुदफलनिष्पन्नेन पिण्याकेन । श्वध्वाङ्क्षादयः श्राद्धकर्त्रादिभिर्दृष्टा अपि तीर्थे क्रियमाणाः श्राद्धक्रियाः न घ्नन्तीत्यर्थः ॥

इति स्मृतिचन्द्रिकायां तीर्थश्राद्धविषयाणि.

---

श्राद्धकाण्डस्य रचना वचनैर्मुनिभिः कृतैः ।
कृता गदाधरप्रीत्यै श्रीमद्याज्ञिकदेवणैः ॥

इति सकलविद्याविशारदश्रीकेशवादित्यभट्टोपाध्याय-
सूनुयाज्ञिकदेवणभट्टोपाध्यायसोमयाजि-
विरचितायां स्मृतिचन्द्रिकायां
श्राद्धकाण्डः समाप्तः.

श्रीः

# स्मृतिचन्द्रिका

श्रीयाज्ञिकदेवणभट्टोपाध्यायविरचिता

## आशौचकाण्डः

---

# SMRITICHANDRIKA

## V. ASAUCHA KANDA

BY

DEVANABHATTA

# उपोद्घातः

संस्काराह्निकव्यवहारश्राद्धाशौचकाण्डेषु विभक्तायाः स्मृतिचन्द्रिकाया आशौचकाण्डोऽयमन्तिमो भागः साधु संकलितो मुद्रितोऽजनि। प्रायश्चित्तकाण्ड इत्यपरः काण्डो देवणभट्टेन प्रायेण व्यरचीति संभाव्यमानोप्यद्यापि नोपालभ्यत।

स्मृतिचन्द्रिकेयं परस्परविरुद्धस्मृत्यर्थसमन्वयैकप्रयोजना स्मृतिनिबन्धग्रन्थेष्वन्यतमा जागर्ति। हेमाद्रि–माधव–भट्टनीलकण्ठ–कमलाकरभट्ट–वैदिकसार्वभौम–वैद्यनाथदीक्षितादिभ्यो निबन्धकारेभ्यः स्मृतिचन्द्रिकाप्रणेता याज्ञिकदेवणभट्टोऽयं प्राचीन इति ज्ञायते। हेमाद्रिणा स्वीये श्राद्धकल्पे स्मृतिचन्द्रिकाकारस्य तात्पर्याण्यनूदितानि क्वचित्खण्डितानीति देवणभट्टो हेमाद्रेः पूर्वकालिक इति श्राद्धकाण्डोपोद्घाते सूचितम्।

"अस्ति शस्तगुणस्तोमः सोमवंशविभूषणम्।
महादेव इति ख्यातो राजराजेव भूतले॥
तस्यास्ति नाम हेमाद्रिः सर्वश्रीकरणप्रभुः।
निजोदारतया यश्च सर्वश्रीकरणप्रभुः॥"

इति स्वीयदानखण्डस्यारम्भे स्वाश्रयराजप्रशस्तिं स्वप्रशस्तिं च प्रशंसन् हेमाद्रिः 1260 तमात्क्रिस्ताब्दादा च 1271 तमात्क्रिस्ताब्दाद्देवगिरिमधिष्ठितस्य यादववंश्यस्य महादेवनृपतेस्सभायां धर्माधिकारिपदवीमारूढोऽभूदिति बाढं ज्ञायते।

"यत्तु चन्द्रिकाकारेणोक्तं सवर्णाभावे त्वसवर्णमपि शूद्रव्यतिरिक्तं निमन्त्रणाय प्रेषयेदिति तन्नारायणप्रोक्तवचनाविरोधा-

वुपेक्षणीयम् " इति श्राद्धकल्पे 1139 तमपत्रे हेमाद्रिणा कृता-त्स्मृतिचन्द्रिकाकारपरामर्शाद्देवणभट्टोऽयं तस्मात्प्राक्कालिक इति को वा संदिह्यात् ।

" व्याख्यातं चान्यथा विज्ञानेश्वरपादैः—
मातरि पूर्वं प्रमीतायां तन्निमित्ताशौचमध्ये यदि पितुरुपरमस्स्यात् तदा न पूर्वेण शुद्धिः, किंतु पितुः प्रयाणनिमित्ताशौचशुद्धिः कार्या " इति विज्ञानेश्वरं गुरुत्वपुरस्कारातिशयद्योतकेन विज्ञानेश्वरपादशब्देन निर्दिश्य याज्ञवल्कीयाशौचकाण्डस्थस्य विंशतितमश्लोकार्धस्य व्याख्या देवणभट्टेनानूदिता दृश्यते । ततश्चायं ग्रन्थकृत् विज्ञानेश्वरस्य प्रायेण शिष्यः प्रशिष्यो वाऽभूदिति संभाव्यते ।

"नासीदस्ति भविष्यति क्षितितले कल्याणकल्पं पुरं
नो दृष्टः श्रुत एव वा क्षितिपतिः श्रीविक्रमार्कोपमः ।
विज्ञानेश्वरपण्डितो न भजते किंचान्यदन्योपम-
श्चाकल्पं स्थिरमस्तु कल्पलतिकाकल्पं तदेतत्त्रयम् ॥"

इति मिताक्षराख्यव्याख्यासमाप्तौ कल्याणपत्तनस्य तदधिष्ठातुर्विक्रमार्कस्य राज्ञस्तदाश्रितस्य स्वस्य चाकल्पस्थायिकीर्तिप्रशस्तिमाशंसन् विज्ञानेश्वरः 1076 तमात्क्रिस्ताब्दादा च 1126 तमात्क्रिस्ताब्दात्कृतराज्यस्य चालुक्यवंश्यस्य कल्याणनिवासिनो विक्रमार्कस्य राज्ञस्समकालिकोऽभूदिति स्पष्टमाकल्यते । ततश्च [विज्ञा]नेश्वरस्य शिष्यः प्रशिष्यो वा देवणभट्टस्तत्कालिकः पञ्चा[शद्व]त्सरैरुत्तरकालिको वेति वक्तुं शक्यते ।

देशभेदादाचारभेदस्तावत्तैत्तिरीयोपनिषदि शिक्षावल्ल्यामित्थं दर्शितः—" अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा

वा स्यात्तत्र ब्राह्मणास्सम्मर्शिनः युक्ता आयुक्ताः अलूक्षा धर्मकामास्स्युः यथा ते तत्र वर्तेरन् तथा तत्र वर्तेथाः" इति युगापरनामककालभेदाच्चाचारभेदः स्मृतिषु बहुधा प्रपञ्चितो दृश्यते। तथाच देशतः कालतश्चाचारेषु भिद्यमानेषु तत्तदाचाराणां विहितत्वाविहितत्वप्रतिपादिकाः स्मृतयश्च बाढं भिद्येयुरेव। ततश्च स्मृतीनां परस्परविरोधः देशकालमतिभेदात्संजात इति वक्तुं शक्यते। निबन्धकारास्तु देशकालभेदेन स्मृत्यर्थसमन्वयं न कुर्वन्ति, किंतु—

मुहूर्तं जीवितो बालः पञ्चत्वं यदि गच्छति।
मातुश्शुद्धिर्दशाहेन सद्यश्शौचास्तु गोत्रिणः॥

इति बृहत्प्रचेतसो वचनस्य विरुद्धं "जातमृते मृतजाते वा सपिण्डानां दशाहम्" इति हारीतवचनं "शिशोर्नाभिच्छेदादूर्ध्वं मरणे वेदितव्यं" इति पदाध्याहारेणार्थान्तरं प्रकल्प्यार्थसमन्वयं स्मृतीनामैककण्ठ्यं च प्रतिपादयन्ति। एतादृशैककण्ठ्यप्रकल्पनाप्रवृत्तौ निबन्धॄणां तत्तत्स्मृतिदेशकालभेदाज्ञानमेव मूलमिति प्रतिभाति। एतादृशार्थसमन्वयकल्पनावशाद्बहून्यनभ्युपगमनीयानि तात्पर्याणि दत्तावकाशानि भवन्ति। तथाहि—सर्वा अपि स्मृतयस्समानदेशकाला इत्येकं, स्मृतीनां प्रामाण्ये न तारतम्यमित्यपरं, "कलौ पाराशराः स्मृताः" इति वचने जागरूके सत्यपि प्रामाण्यविषये पाराशरस्मृतेः स्मृत्यन्तराद्विशेष इति तृतीयं, स्मृत्युक्तास्सर्वेऽपि विधिनिषेधाः पुरेदानीमपि कृतानुष्ठाना इत्यनभ्युपगमनीयार्थाभ्युपगम इति चतुर्थं, पुरातनानामाचाराणां नैव ह्रासः नापि नवानां प्राप्तिरिति विप्रतिपन्नार्थाभ्युपगम इति पञ्चममित्यनेकविधानि तात्पर्याणि दत्तावकाशानि भवन्ति। न चैतादृशानि तात्पर्याण्यभ्युपगन्तुं शक्यन्ते। तथाच

स्मृतिनिबन्धॄणां समन्वयार्थयत्नः न साधु समालोचित इत भाति ।

तदित्थं निबन्धकाराणां समन्वययत्ने अनभ्युपगमनीयतात्पर्यप्रचारकेऽपि स यत्नोऽन्यथा सफल एव—कति स्मृतयः पुराऽऽसन्, कथं वा तासां पाठक्रमः प्रचलित इति संदेहः बहूनां निबन्धकाराणामनुवादपरीक्षया निरस्तो भवतीति ।

आशौचकाण्डस्यास्य शोधने द्वौ मातृकाकोशावुपयुक्तौ—No. 4338 तालपत्रात्मकमान्ध्रालिप्या लिखितमेतत्कोशागारस्थमशुद्धमेकं, राजकीयसरस्वतीभाण्डागारस्थं ग्रन्थालिप्या लिखितं शुद्धमपरम् ॥

R. SHAMA SASTRY.

---

श्रीः.

# स्मृतिचन्द्रिकायामाशौचकाण्डे

## विषयानुक्रमणिका.

विषयः.

# अशुद्धशोधनम्.

| पुटे. | पङ्क्तौ | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| 4 | 12 | ज्ञापितुं | ज्ञापयितुं |
| 11 | 21 | समानोदकाना | समानोदकानां |
| 12 | 11 | छात्रवियं | छात्रविषयं |
| 13 | 4 | स्वाध्योपेत | स्वाध्यायोपेत |
| 22 | 13, 17 | काष्ठावत् | काष्ठवत् |
| 25 | 11 | क्रियमाणाग्निऽऽसंस्कार | क्रियमाणाऽऽग्निसंस्कार |
| 26 | 19 | ऊर्द्विवर्षे | ऊनद्विवर्षे |
| 28 | 8 | निखनेन | निखनेन |
| 30 | 16 | प्राप्ताप्रत्तासु | प्रत्ताप्रत्तासु |
| 30 | 17 | स्तिरात्रं | त्रिरात्रं |
| 32 | 3 | स्मान्मृतके | स्यान्मृतके |
| 32 | 12 | त्यंसस्कृता | त्वसंस्कृता |
| 33 | 10 | व्यवस्थाया | व्यवस्थया |
| 35 | 8 | यौवेन | यौवने |
| 38 | 11 | प्रमिणा | प्रामिणा |
| 40 | 16 | यस्सास्सा | यस्यास्सा |
| 49 | 1 | शब्दस्स | शब्दस्य |
| 49 | 7 | र्वोक्त | पूर्वोक्त |
| 50 | 7 | दवार्ग | दर्वाग |
| 50 | 9 | श्रुध्यति | शुध्यति |

| पुटे. | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| 50 | 15 | सूत्रागता | सूत्रगता |
| 51 | 20 | त्वाशोचे | त्वाशौचे |
| 55 | 3 | आद्र | आर्द्र |
| 56 | 10 | दूर्ध्वमति | दूर्ध्वमपि |
| 59 | 7 | मारम्य | मारभ्य |
| 64 | 2 | मरणोशोच | मरणाशौच |
| 81 | 1 | र्यज्ञपाश्व: | यज्ञपार्श्व: |
| 87 | 5 | ज्येष्ठ सन्निहिते | ज्येष्ठेऽसन्निहिते |
| 88 | 1 | तदेवा | तदेव |
| 114 | 8 | स्नान | स्थान |
| 136 | 10 | स्ववन्त्र | स्वतन्त्र |
| 137 | 11 | समिद्धेऽगौ | समिद्धेऽग्नौ |
| 137 | 15 | पीतिकरं | प्रीतिकरं |
| 163 | 12 | संवस्तरं | सवत्सरं |
| 166 | 5 | यज्ञज्ञवत् | यज्ञवत् |
| 169 | 15 | क्रांबैश्च | क्रौबेर्न |
| 170 | 13 | हाति | इति |
| 199 | 11 | मान्मयु: | माम्रयुः |

श्रीः.

# स्मृतिचन्द्रिकायां आशौचकाण्डः.



अथाशौचकालादौ कर्तव्यैकोद्दिष्टादिश्राद्धस्य निरूपणार्थमाशौचप्रकरणमारभ्यते ।

तत्र शङ्खः—

दानं प्रतिग्रहो होमः स्वाध्यायः पितृकर्म च ।
प्रेतपिण्डक्रियावर्जमाशौचे विनिवर्तयेत् ॥

सपिण्डादिजनने मरणे वा यदप्रायत्यं दानादिधर्मेष्वयोग्यत्वलक्षणं पापविशेषात्मकं वा भवति तदाशौचशब्देन बोद्धव्यम् । अयमेवाशौचशब्दार्थ इत्युपदिष्टः। अदूरे भट्टाचार्यग्रन्थसंवादे दृढीकरिष्यामः । एवंविधाशौचे वर्तमाने प्रेतोपकारकपिण्डक्रियाव्यतिरिक्तपितृकर्मदानप्रतिग्रहादिकं च न कुर्यादित्यर्थः। प्रेतपिण्डक्रियावर्जमिति पर्युदासेन प्रेतोपकारकं श्राद्धमाशौचे वर्तमानेऽपि कर्तव्यमिति दर्शितम् । आशौचस्य वर्तमानता न चिरं काल एवेत्याह दक्षः—

सद्यश्शौचं तथैकाहस्त्र्यहश्चतुरहस्तथा ।
षड्दशद्वादशाहश्च पक्षो मासस्तथैव च ॥
मरणान्तं तथा चान्यद्दश पक्षास्तु सूतके ।

इति । दश पक्षा इति नावधारणार्थं, इतोऽधिकानामपि पक्षाणां स्मृतिषु दर्शनात् ।

.................... अचिरे तूत्तमे त्रयः ।
राजन्ये तु चतूरात्रं वैश्ये पञ्चाहमेव च ॥
अष्टाहेन तु शूद्रस्य शुद्धिरेषा प्रकीर्तिता ।

इति पञ्चाहादिकमपि स्मृतम् । अयमर्थः—

अचिरे गर्भकालस्य निष्पादकचतुर्थमासादर्वाचीने काले गर्भस्रुतां यथामासं नाशौचं, किंतु उत्तमे ब्राह्मणवर्णे त्रयो दिवसाः मातुश्शुद्धिहेतवः, राजन्ये क्षत्रियवर्णे चतूरात्रं मातुश्शुद्धिहेतुः, वैश्यवर्णे पञ्चाहं मातुश्शुद्धिकारणं, शूद्रवर्णस्य अष्टाहेन स्रावे मातुश्शुद्धिः । (ब्राह्मण्यास्त्रिरात्रं क्षत्रियायाश्चतूरात्रं वैश्यायाः पञ्चरात्रं शूद्राया अष्टरात्रं शुद्धिकारणम्) । शुद्धिशब्दार्थस्तु—'पापक्षयश्शुद्धिः धर्मयोग्यत्वमेव वा' इति भट्टाचार्योक्तो द्रष्टव्यः । पापक्षयः सपिण्डादौ जनने मरणे वा तत्सम्बन्ध्यादावुत्पन्नस्य पापविशेषस्य क्षयः । धर्मयोग्यत्वं दानादिधर्मानुष्ठानार्हत्वम् । एवं शुद्धिशब्दार्थो मतभेदेन द्विधा विवृतो भट्टाचार्यैः । तद्विपरीतस्य जननमरणनिमित्तकस्य पापविशेषस्य दानादिधर्मानुष्ठानायोग्यत्वस्य च मतभेदेनाशौचशब्दाभिधेयत्वं ज्ञापितमिति मन्तव्यम् । अचिरगर्भस्रावे मातुरेवाशौचं, न पित्रादिसपिण्डानाम् । तथाचानन्तरमुक्तं तेनैव—

स्रावे मातुस्त्रिरात्रं स्यात्सपिण्डाशौचवर्जनम् ।

इति । त्रिरात्रमिति ब्राह्मणवर्णाभिप्रायं, राजन्यादेश्चतूरात्रादेरुक्तत्वात् । यत्तु सुमन्तुनोक्तं—'गर्भमासतुल्या दिवसा गर्भस्रंसने सद्यश्शौचं च' इति, तच्चतुर्थमासाविषयम् । व्यवस्थितविकल्पश्चायम् । एवंचायमर्थः—गर्भस्रंसने चतुर्थे मासि गर्भस्रावे मातुश्चतूरात्रमाशौचं, सपिण्डपुरुषस्य स्नानात्सद्यश्शौचमिति । तथाच वृद्धवसिष्ठः—'गर्भस्रावे मासतुल्या दिवसाः स्त्रीणां स्नानमात्रमेव पुरुषस्य ईषत्कठिनगर्भस्रावे तु त्रिरात्रम्' इति, एतत् चतुर्थमासजातगर्भस्रावविषयमिति व्यक्तं, मासान्तरे ईषत्कठिनस्रावासंभवात् । अस्य वचनस्यायं तात्पर्यार्थः—चतुर्थे मासे मृदुतया ईषत्काठिनतया वा गर्भस्रावे मातुस्त्रिरात्रमाशौचं, सपिण्डपुरुषस्य मृदुतया स्रावे सद्यश्शौचं, कठिनतया स्रावे त्रिरात्रमाशौचमिति । पुरुषग्रहणादत्र सपिण्डस्त्रीणां नाशौचं, किन्तु पुरुषस्येत्येकवचनात्पितुस्त्रिरात्रमाशौचम् । यत्तु मरीचिना सपिण्डस्त्रीपुंससाधारण्येन त्रिरात्रमुक्तं—

पाते मातुर्यथामासं पित्रादीनां दिनत्रयम् ।

इति, यच्च वसिष्ठेन—'गर्भस्य पतने सपिण्डानां त्रिरात्रम्' इति, तत् पञ्चमषष्ठमासपातविषयं, मासान्तरे गर्भपातासंभवात् । तात्पर्यार्थस्तु—पञ्चमे मासि गर्भपाते मातुः पञ्चरात्रमाशौचं, षष्ठे षड्रात्रं, पित्रादीनां सपिण्डानां तु मासद्वयेऽपि त्रिरात्रमिति । यत्तूक्तं यमेन—

अजातदन्ते तनये शिशौ गर्भच्युते तथा ।
सपिण्डानां तु सर्वेषामहोरात्रमशौचकम् ॥

इति, तत् गुणवत्सपिण्डविषयं असन्निहितविषयं वा । यत्तूक्तं ब्रह्मपुराणे—

सद्यश्शौचं सपिण्डानां गर्भस्य पतने सति ।

इति, तत् चतुर्थमासान्तर्गतमृदुरूपगर्भस्रावविषयं, तत्रैव च सुमन्तुना वृद्धवसिष्ठेन च सापिण्डपुरुषस्य सद्यश्शौचविधानात् । एवं स्रावे पातशब्दो मातुर्जठरान्निर्गमनगुणेन स्रावेण गौण्या वर्तत इति बोध्यं, मुख्यार्थपरत्वे पूर्वोक्तवचनविरोधापत्तेः । चतुर्थमासादिषु त्रिषु यच्चतूरात्रादिकमाशौचमुक्तं तत् ब्राह्मणादिवर्णचतुष्कसाधारणं, विशेषास्मरणात् । विशेषस्मरणं च वर्णचतुष्टयेऽप्याशौचविषयमेव ज्ञापितुं मनुनाऽत्र साधारणरजस्वलाशुद्धेस्साहचर्यं कृतम्—

रात्रिभिर्मासतुल्याभिर्गर्भस्रावे विशुध्यति ।
रजस्युपरते सर्वा स्नानेन स्त्री रजस्वला ॥

इति । सर्वा सर्ववर्णेत्यर्थः ।

सप्तममासादिषु स्मृत्यन्तरोक्तं द्रष्टव्यम्—

आ चतुर्थाद्भवेत्स्रावः पातः पञ्चमषष्ठयोः ।
अत ऊर्ध्वं प्रसूतौ तु दशाहं सूतकं भवेत् ॥

इति । आङभिविधौ । दशाहमिति ब्राह्मणीविषयमेव, न जात्यन्तरस्त्रीविषयम् । तथाचादिपुराणे—

षण्मासाभ्यन्तरं यावद्गर्भस्रावो भवेद्यदा ।
तदा माससमैस्तासां दिवसैश्शुद्धिरिष्यते ॥
अत ऊर्ध्वं स्वजात्युक्तमाशौचं तासु विद्यते ।

इति । षण्मासाभ्यन्तरं यावत् चतुर्थमासमारभ्येत्यर्थः । स्वजात्युक्तमित्यनेनैतदुक्तं—ब्राह्मण्या दशाहाशौचं, क्षत्रियाया द्वादशाहाशौचं, वैश्यायाः पञ्चदशाहाशौचं, शूद्राया मासमिति। यत्तु प्रचेतसोक्तं—

सूतिका सर्ववर्णानां दशाहेन विशुध्यति ।
ऋतौ तु न पृथक्स्त्रीणां सर्ववर्णेष्वयं विधिः ॥

स्त्रीणां रजोदर्शने यस्त्रिरात्राशौचविधिः स सर्ववर्णेष्वविशिष्ट इत्यर्थः । अत्र सर्ववर्णानां सूतिका दशाहेन शुध्यतीत्येतत् प्रसवसमयासृक्स्रवणनिबन्धनाप्रायत्यलक्षणाशौचाभिप्रायं, ऋतुमत्याशौचसाहचर्यात् ।

अत ऊर्ध्वं स्वजात्युक्तमाशौचं तासु विद्यते ।

इति पूर्वोक्तवचनं, मातापित्रादिसर्वसपिण्डसाधारणासरूपाभिप्रायं, स्वजात्युक्तमित्युक्तत्वात् । यत्तु पैठीनसिनोक्तं—'सूतिकां पुत्रजननीं विंशतिरात्रेण कर्माणि कारयेन्मासेन स्त्रीजननीम्' इति, तद्वचनं दानादिधर्मेष्वयोग्यत्वलक्षणाशौचाभिप्रायमिति न पूर्वोक्तविरोधः । कर्माण्यत्रादृष्टार्थानि यागदानादीनि विवक्षितानि । विंशतिरात्रेण गतेनेत्यर्थः । प्रसव

दिनमारभ्य विंशतिदिनेष्वतीतेषु दानादिकर्मणि योग्या भवतीत्यर्थः ।

सूतिका सर्ववर्णानां दशाहेन विशुध्यति ।

इत्यत्र सर्वशब्दश्शूद्रेतरवर्णेषु संकोचनीयः । तथाच पारस्करः–

द्विजातेस्सूतिका या स्यात्सा दशाहेन शुध्यति ।
त्रयोदशेऽह्नि संप्राप्ते शूद्रा शुध्यत्यसंशयः ॥

इति । एवं सूतिकायामस्पृङ्निस्सरणनिबन्धनमप्रायत्यं युगत्रयमात्रपरिहरणादिहेतुभूतं द्विजादिषु दशरात्रपर्यन्तं, अघरूपाशौचं त्वस्पृश्यत्वादिहेतुभूतं स्वजात्युक्तदशद्वादशपञ्चदशाहपर्यन्तं, दानादिधर्मानधिकारलक्षणं तु द्विजादिषु पुत्रजनन्यां विंशतिरात्रपर्यन्तं स्त्रीजनन्यां मासपर्यन्तमित्यवगन्तव्यम् । यत्तु चतुर्विंशतिमत उक्तं—

अधस्तान्नवमान्मासाच्छुद्धिस्स्यात्प्रसवे सदा ।
मृते जीवेऽपि वा तस्मिन्नहोभिर्माससंख्यया ॥

इति, अधस्तान्नवमान्मासात् सप्तममासादारभ्येति शेषः । तदेतत् सूतिकाव्यतिरिक्तसपिण्डविषयं, सूतिकादिसर्वसपिण्डविषयत्वे पूर्वोक्तवचनविरोधापत्तेः । एवंच यदुक्तं विष्णुना— 'ब्राह्मणस्य सपिण्डानां जननमरणयोर्दशाहमाशौचं द्वादशाहं राजन्यस्य पञ्चदशाहं वैश्यस्य मासं शूद्रस्य' इति, तदेतद्विष्णुवचनं

नवमे दशमे वाऽपि प्रबलैस्सूतिमारुतैः ।

निस्सार्यते बाण इव यन्त्राच्छिद्रेण सज्वरः ॥

इति याज्ञवल्क्योक्तनवमदशममासप्रसवविषयं वेदितव्यम् । यत्तु पैठीनसिनोक्तं—

जनौ सपिण्डाश्शुचयो मातापित्रोस्तु सूतकम् ।
सूतकं मातुरेव स्यादुपस्पृश्य पिता शुचिः ॥

इति, तस्यायमर्थः—सपिण्डस्य जनने पितृमातृव्यतिरिक्ताः सपिण्डाश्शुचयः सपिण्डजनननिबन्धनाशौचे धर्मानाधिकारलक्षणे विद्यमानेऽप्यघरूपाभावात्स्पर्शनयोग्याः । तत्सम्भवान्मातापित्रोरस्पृश्यत्वलक्षणं सूतकं भवति । तत्संभवश्च मातापित्रोर्जायमानप्राणिपीडाहेतुत्वात् । तद्धेतुत्वं तज्जनकतया पितुः कथंचित्परम्परया, मातुः गर्भान्निर्गमनानुकूलप्रेरणतया साक्षात् । ततश्च गुरुतया स्नानमात्रानपनोद्यं सूतकं मातुरेव स्यात्, न पितुः । तेन शुद्ध्यर्थं कालप्रतीक्षाऽभावेऽपि स्नानमात्रेण पिता शुचिः अघनाशात्स्पर्शयोग्यो भवतीति । तथाच स्मृत्यन्तरं—'जननेऽप्येतन्मातापित्रोर्मातुरेवास्पर्शनात्मकं नान्येषां ज्ञातीनाम्' इति । यथा मरणे तदनन्तरमधर्मयोग्यत्वलक्षणमाशौचं नाभिच्छेदात्प्राङ्मातापित्रोरेव भवति नान्येषां सपिण्डानां जायमानप्राणिपीडनकर्तृत्वरहितानाम् । मातापित्रोर्मध्येऽपि स्नानमात्रानपनोद्यमस्पर्शनहेतुभूतमाशौचं मातुरेवेत्यर्थः । एतेन यदुक्तं जनने पापोत्पत्तौ निमित्ताभावाद्धर्मानर्हत्व लक्षणमेवाशौचं न पुनरघरूपाशौचामिति तन्निरस्तम् । तर्ह्य-

स्पृश्यत्वधर्मानर्हत्वलक्षणमाशौचं संभवति, अग्निहोत्रादिकर्मानर्हाणां विवाहरहितानामस्पृश्यत्वाभावात् । तेन जननिमित्तं च द्विविधमेव । यदङ्गिरोवचनं—

प्राक् स्नानाज्जननेऽस्पृश्यः कर्महानिरशौचकम् ।

इति, तत् पितृविषयं वेदितव्यम् । स्नानादूर्ध्वं पिता सूतिकां स्पृशति चेत्तत्स्पृष्टौ स्नानादप्यस्पृश्य एव । तथाच पराशरः—

यदि पत्न्यां प्रसूतायां द्विजस्संसर्गमिच्छति ।
सूतकं तु भवेत्तस्य यदि विप्रष्षडङ्गवित् ॥

इति । संसर्गमिच्छति पत्न्या सह संस्पर्शलक्षणं संसर्गं करोति तस्य द्विजस्य सूतिकास्पर्शननिमित्तमस्पृश्यत्वं भवेदित्यर्थः । पतिरिति वक्तव्ये द्विज इत्युक्तिः पतिव्यतिरिक्तस्यापि सूतिकां स्पृशतो द्विजस्य समानमेतदिति ज्ञापनार्थम् । अत एव सुमन्तुः—'मातुरेव सूतकं तां स्पृशतां च, नेतरेषाम्' इति । प्रसवसमयासृङ्निस्सरणनिबन्धनाप्रायत्यलक्षणसूतकाभिप्रायमेतत् । तां सूतिकां स्पृशतो जनस्य सूतकमस्पृश्यत्वलक्षणं भवति, नेतरेषां तामस्पृशतां जनानामित्यर्थः । वसिष्ठोऽपि—

नाशौचं सूतके पुंसां संसर्गं चेन्न गच्छति ।
रजस्तत्राशुचि ज्ञेयं तच्च पुंसि न विद्यते ॥

इति । पराशरस्तु सरूपाशौचमाह—

प्रसवे गृहमेधी तु न कुर्यात्सङ्करं यदि ।

दशाहाच्छुध्यते माता त्ववगाह्य पिता शुचिः ॥

इति । अत्रिरपि—

संपर्काज्जायते दोषः पारक्ये मृतिजन्मनि ।

तद्वर्जनात्पितुरपि सद्यश्शौचं विधीयते ॥

इति । पारक्ये मृतिजन्मनि परसंबन्धिनि मरणे जनने चेत्यर्थः । आदिपुराणेऽपि—

सूतके तु मुखं दृष्ट्वा जातस्य जनकस्ततः ।

कृत्वा सचेलस्नानं तु शुद्धो भवति तत्क्षणात् ॥

इति । संवर्तोपि—

सचेलं तु पितुस्स्नानं जाते पुत्रे विधीयते ।

माता शुध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः ॥

न दोषावहमित्यर्थः । माता शुध्येत् स्पर्शनयोग्या भवतीत्यर्थः । यत्तु बोधायनेनोक्तं—'जनने तावन्मातापित्रोर्दशाहमाशौचं मातुरित्येके' इति, आशौचं असमवायलक्षणम् । तत्र मातापित्रोर्दशाहमित्येतत्पूर्वपक्षत्वेनोक्तमिति तावद्ग्रहणादवगम्यते । तेन 'मातुरित्येके' इत्ययमेव सम्यक्पक्ष इति न पूर्वोक्तविरोधः । यदुक्तमङ्गिरसा—

सूतके सूतिकावर्जं संस्पर्शो न ह्यशुद्धिदः ।

इति, तत् अस्नातपितृव्यतिरिक्तविषयम् । यत्तु तेनैवोक्तं—

नाशौचं सूतके प्रोक्तं सपिण्डानां क्रियावताम् ।

इति, अस्यार्थः—क्रियावतां जन्मदाख्यदेवताप्रीत्यर्थं यागादिक्रियावतां पित्रादिसपिण्डानां जन्मदाख्यदेवतायागाद्यनुष्ठानदिवसेषु नाशौचं कर्मायोग्यत्वलक्षणं तदनुष्ठानकाल इति। तथाच व्यासः—

सूतिकावासनिलया जन्मदा नाम देवताः ।
तासां यागनिमित्तं तु शुद्धिर्जन्मनि कीर्तिता ॥

इति । यागग्रहणं पूजाकर्मादेरुपलक्षणार्थम् । अत एवानन्तरमुक्तं तेनैव—

प्रथमे दिवसे षष्ठे दशमे चैव सर्वदा ।
त्रिष्वेतेषु न कुर्वीत पुत्रजन्मनि सूतकम् ॥

इति । सूतकं तु धर्मायोग्यत्वलक्षणमित्यभिप्रेतं, यागनिमित्तमित्यभिधानात् । प्रथमे दशमे वा यागनिमित्ताशौचाभावः। यागकालस्तु—

षष्ठेऽह्नि यागं दानं च जन्मदानां तु कारयेत् ।

इति। यागार्थं ततस्तत्र शुद्धिः प्रकीर्तितेत्यर्थः। दशमेऽह्न्यपि रात्रावेव यागविधानम्। तथाच मार्कण्डेयः—

रक्षणीया तथा षष्ठी निशा तत्र विशेषतः।
रात्रौ जागरणं कार्यं जन्मदानां तथा बलिम् ॥
पुरुषाश्शस्त्रहस्ताश्च नृत्तगीतैश्च योषितः ।
रात्रौ जागरणं कुर्युर्दशम्यां चैव सूतके ॥

इति। प्रथमे दिवसे कर्मादिनिमित्ते जातकर्माद्यनुष्ठानकाले कृत्स्ने न प्रथमेऽह्नि। तथा शङ्खलिखितौ—'कुमारप्रसवे नाभ्यामच्छिन्नायां गुडतिलहिरण्यवस्त्रप्रावरणगोधान्यानां प्रतिग्रहेऽप्यदोषः तदहरित्येके' इति। कुमारप्रसवदिने अच्छिन्नायां नाभ्यां दानप्रतिग्रहादिष्वदोष इति। तदहरित्येके मन्यन्ते। अत एव याज्ञवल्क्यः—

तदहर्न प्रदुष्येत पूर्वेषां जन्मकारणात्।

इति। यस्मिन् दिने कुमारजननं तदहर्न प्रदुष्येत कुमारजन्मनिमित्तदानार्चनानर्हत्वापादकं न भवति यस्मात्तस्मिन्नहनि पूर्वेषां पित्रादीनां पुत्ररूपेण जन्मोपपत्तेरित्यर्थः। यत्तु जैमिनिनोक्तं—

यावन्न छिद्यते नाळं तावन्नाप्नोति सूतकम्।
छिन्ने नाळे ततः पश्चात्सूतकं तु विधीयते॥

इति, तस्यायमर्थः—नाभिच्छेदनिमित्तकं सर्वसापिण्डानामघरूपमाशौचं आशौचनिमित्तसंभावनादूर्ध्वमेव भवति न पुनः पूर्वमेव चेति।

नन्वघरूपाशौचं सपिण्डपितृव्यतिरिक्तानां न भवति, कारणाभावादित्याशङ्क्य कारणमाह हारीतः—'प्रेताभिभूतत्वाच्छावाशौचं जाते वृद्धियोगेन केनेति मीमांसन्ते नाभ्यच्छिन्नकालानामुच्छेदभूयस्त्वाच्च कुलस्याशौचं भवति' इति। समानोदकानां तु जनननिमित्ताशौचं त्रिरात्रं वेदितव्यं,

जन्मन्येकोदकानां तु त्रिरात्राच्छुद्धिरिष्यते ।

इति स्मरणात् । जन्मनि पित्रादिसपिण्डानामपि त्रिरात्रमाशौचमाह बृहन्मनुः—

जीवन् जातो यदि शिशुर्मृतस्सूतक एव वा ।
सूतकं सकलं मातुः पित्रादीनां त्रिरात्रकम् ॥

इति । अयमर्थः—जातश्शिशुर्यदि नाभिच्छेदात्पूर्वं मृतः तदा मातुर्दशाहमाशौचं, पित्रादिसर्वसपिण्डानां त्रिरात्रमिति । यद्बृहत्प्रचेतसो वचनम्—

मुहूर्तं जीवितो बालः पञ्चत्वं यदि गच्छति ।
मातुश्शुद्धिर्दशाहेन सद्यश्शौचास्तु गोत्रिणः ॥

इति, तत् प्रस्तुताग्निहोत्रानुष्ठातृविषयं, 'अग्निहोत्रार्थं स्नानोपस्पर्शनात्तत्कालाशौचम्' इति शङ्खस्मरणात् । यत्तु हारीतेनोक्तं—'जातमृते मृतजाते वा सपिण्डानां दशाहम्' इति, सूतकमिति शेषः । अत्र जातमृते यद्दशाहमुक्तं तत् जातस्य शिशोर्नाभिच्छेदादूर्ध्वं मरणे वेदितव्यं, बृहन्मनुवचनसमानविषयत्वेऽन्योन्यविरोधापत्तेः । मृतजातविषये पारस्करेणापि दशाहं सूतकमुक्तं—

गर्भे यदि विपत्तिस्स्याद्दशाहं सूतकं भवेत् ।

इति । सपिण्डानामिति शेषः । उभयत्र दशाहग्रहणं स्वजात्युक्तकालोपलक्षणार्थम् । यत्तु—

पुत्रो जातो यत्र मृतो मृतो वा सूयते यदि ।

सूतकं मातुरेव स्यात्पित्रादीनां त्रिरात्रकम् ॥

इति, तदेतत् वृत्तस्वाध्यायोपेतपित्रादिविषयम् । एतच्च मृत जातत्रिरात्रसूतकं वृत्तस्वाध्योपेतपित्रादेरपि कलौ न कार्यम् ॥

इति स्मृतिचन्द्रिकायां प्रसवाशौचनिर्णयः.

---

## अथ शावाशौचनिर्णयः.

---

तत्रमनुः—

प्रेतशुद्धिं प्रवक्ष्यामि द्रव्यशुद्धिं तथैव च ।

चतुर्णामपि वर्णानां यथावदनुपूर्वशः ॥

इति । ननु वर्णानामित्यनेनैव विप्रक्षत्रियविट्छूद्राणामित्येषोऽर्थस्सिद्धः, चतुर्णामित्यनर्थकम् । इति चेदुच्यते—

सब्रह्मचारिण्येकाहमतीते क्षपणं स्मृतम् ।

मातुले पक्षिणी रात्रिः शिष्यर्त्विग्बान्धवेषु च ॥

इत्येवमादिवचनेषु येऽनुपात्तवर्णविशेषा आशौचविधयः ते सर्वे न प्रथमवर्णमात्रविषयाः किंतु सर्ववर्णविषया इति ज्ञापनार्थं चतुर्णामित्युक्तम् । उक्तं चैवमेवैतद्भाष्यार्थसंग्रहकारेण—

असपिण्डेषु वर्णेषु अतीते श्रोत्रिये गुरौ ।

अतीते नृपतौ तद्वदृतुकालेषु योषिताम् ॥

अग्रजासु तथा स्त्रीषु मातुले बान्धवेषु च ।
एवमादावशौचस्य चतुर्णामपि तुल्यता ॥
वर्णानामित्येव सिद्धे चतुर्णामपि कीर्तनात् ॥

इति । प्रतिज्ञातक्रमेणादौ प्रेतशुद्धिर्निरूप्यते । तत्र पैङ्ग्यः– 'गर्भस्थे प्रेते मातुर्दशाहम्' इति । प्रेताशौचमिति शेषः। मातृव्यतिरिक्तानां सपिण्डानामस्मिन् विषये बृहद्विष्णुनोक्तं– 'मृतजाते कुलस्य सद्यश्शुद्धिः' इति । जातमृते त्वाह व्याघ्रः—

जाते मृते सपिण्डानां सद्यश्शौचं विधीयते ।
दशाहेनैव दम्पत्योस्सोदराणां तथैव च ॥

इति । दशाहेनेति जन्मदिनमृतबालविषयम् । जन्मदिनादूर्ध्वं मृतबालविषयेऽप्याह स एव—

अन्तर्दशाहे जातस्य शिशोर्निष्क्रमणं यदि ।
सूतकेनैव शुद्धिस्स्यात्पित्रोश्शातातपोऽब्रवीत् ॥

इति । पित्रोरिति सोदरभ्रातॄणामुपलक्षणार्थम् । शिशोरन्तर्दशाहे द्वितीयादिदिने । निष्क्रमणं मरणम् । सूतकेनैव जन्माशौचशेषाहोभिरेव पित्रोः सोदरभ्रातॄणां च शिशुमरणाशौचादपि शुद्धिर्भवतीत्यर्थः । तथाच अन्तर्दशाहोपरतस्य यत्पित्रादीनां मरणाशौचं तत्सूतकाहोभिरेव शुध्यतीत्यर्थः। यत्तुपैङ्गिवचनम्–'जात उभयोः कृते नामानि सोदरभ्रातॄणां च' इति, तत् कृते नामनीति नामकरणदिनस्य दशमस्योपलक्षणार्थम्। एवंचा-

यमर्थः—जातशिशौ जन्मदिने प्रेते मातापित्रोस्सोदरभ्रातॄणां च दशाहमाशौचं, कृते नामनि नामकरणदिने दशमे गते सति पूर्वोक्तानामेवाहोरात्रमाशौचमिति। तथाच शङ्खः—

दशाहान्तर्गते बाले शुद्धिस्स्याज्जन्मना सह।
ऊर्ध्वं दशाहादेकाहं ........................... ॥

इति। दशाहान्तः दशाहमध्ये बाले गते प्रेते जन्माशौचशुद्ध्या सह मातापित्रोः सोदरभ्रातॄणां च शिशुमरणादपि शुद्धिस्स्यात्। ऊर्ध्वं चैतेषामेकाहमिति। यत्तु यमेनोक्तं—

दशाहाभ्यन्तरे बालः कदाचिन्म्रियते यदि।
शावाशौचं न कर्तव्यं सूत्याशौचेन शुध्यति॥

इति, तस्यायमर्थः—प्रथमप्रवृत्तसूतकमध्ये शिशुमरणाशौचं च सूतकापगमादूर्ध्वं मात्रादिभिर्न कर्तव्यं, यतस्सूत्याशौचेन सूत्याशौचकालविषयेणैव मातापितरावपि शावाशौचादपि शुध्यतः सोदरभ्रातरश्च शुध्यन्तीति। यदप्यापस्तम्बेनोक्तं—'सूतके चोत्थानादाशौचं सूतकवन्मृते तस्मिन्नेव बाले सद्यश्शौचं नात्रोदकम्' इति, तस्याप्ययमर्थः—यस्मिन् जाते सूतकं प्रवृत्तं तत्सूतकमध्ये तस्मिन्नेव बाले मृते सूतकवदोत्थानादाशौचं यथा सूतकमादशम्या विहितं सूतिकोत्थानपर्यन्तं तथा शिशुमरणाशौचमपि मात्रादीनां तत्पर्यन्तमेव, सूत्याशौचशुद्धेः। तस्मिन् विषये सपिण्डान्तरवत्सद्यश्शौचं मात्रादीनाम्। नात्र प्रेतायोदकमिति। ओत्थानादाशौचमिति यदन्तस्सूतके दशमदिनेऽ-

पि शिशुमरणे तद्दिन एवाशौचं न पुनः 'अहश्शेषे द्वाभ्यां प्रभाते त्रिभिः' इत्यादिवचनोक्तो विशेषोऽत्रापीति दर्शयति। यदुक्तं षट्त्रिंशन्मते 'न सूतिश्शावशोधिनी' इति, तत् द्वये-कत्र्यन्तरसूत्याशौचविषयं, अन्यथा पूर्वोक्ताशौचविषयादेकव-चनविरोधापत्तेः । यत्तु बृहन्मनुनोक्तं—

दशाहाभ्यन्तरे बाले प्रमीते तस्य बान्धवैः ।
शावाशौचं न कर्तव्यं सूत्याशौचं विधीयते ॥

इति तस्यायमर्थः—दशाहाभ्यन्तरे बाले मृते बान्धवैः पि-तृव्यादिभिरपि शावाशौचं मात्रादिवद्दीर्घकालं न कर्तव्यं, किंतु सद्य एव, सूत्याशौचं पितृव्यादिबान्धवानामपि मात्रादिव त्स्वजात्युक्तं दशाहादिदीर्घकालतया विधीयत इति । यत्तु शाट्यायनेनोक्तं—

बालस्त्वन्तर्दशाहे तु प्रेतत्वं यदि गच्छति ।
सद्य एव विशुद्धिस्स्यान्नाशौचं नैव सूतकम् ॥

इति, तत् मातुलादिविषयम् । ततश्चायमर्थः—मातुलादिब-न्धूनामिह न कालापनोद्यं शावाशौचं सूतकं वा किंतु तदन्न-निमित्तमप्रायत्यं सूतकादि वा स्पर्शननिमित्ताप्रायत्यवत् स्नान-मात्रेण नश्यतीति ॥

इति स्मृतिचन्द्रिकायां सूतकमध्यभवशिशुमरणाशौचविषयाणि.

---

# अथ सूतकोपरिभवशिशुमरणाशौचविषयाणि.

तत्र शङ्खः—

दशाहान्तर्गते बाले शुद्धिस्स्याज्जन्मना सह ।
ऊर्ध्वं दशाहादेकाहमधस्ताच्चौलकर्मणः ॥
तत ऊर्ध्वं त्रिरात्रं स्यादधस्तान्मौञ्जिबन्धनात् ॥

इति । अधस्ताच्चौलकर्मणः प्रथमाब्दविहिताच्चौलादधस्तात् दन्तोद्गमादिति यावत् । एवंचायमर्थः—दशाहान्तर्गतसूतकानुवृत्तिदशायां बाले मृते जननाशौचेन सह मरणाशौचस्यापि शुद्धिर्भवति, ऊर्ध्वं दशाहात्सूतकापगमादूर्ध्वं दन्तजननादधस्ताद्बाले मृते एकमहोरात्रमाशौचं, दन्तजननादूर्ध्वं मौञ्जिबन्धनादधस्तात् त्रिरात्रमिति । अत्र 'शुद्धिस्स्याज्जन्मना सह' इत्येतन्मातापितृविषयं,

'सूतकेनैव शुद्धिस्स्यात्पित्रोश्शातातपोऽब्रवीत् ।'

इति पूर्वोक्तस्यापि वचनस्य सामर्थ्यात् । एवंचैतत्साहचर्यात् 'ऊर्ध्वं दशाहादेकाहं' इत्येतद्दशम्यां नामकरणे सति द्रष्टव्यम्; 'जननाद्दशरात्रे व्युष्टायां* शतरात्रे संवत्सरे वा नामकरणम्' इति गृह्यपरिशिष्टोक्तेः दशरात्रादिकाले नामकरणं यथा तस्य ।

*वृष्टायां, पा.

'प्राङ्नामकरणात्सद्य एकाहं दन्तजन्मनः ।
चूडायास्त्रिदिनंप्रोक्तं तथा वृद्धिकमाव्रतात् ॥'

इति स्मृत्यन्तरोक्तं सद्यश्शौचं दशाहादूर्ध्वं नामकरणपर्यन्तं वेदितव्यम् । स्मृत्यन्तरस्यायमर्थः—सूतकापगमादूर्ध्वं नामकरणात्पूर्वं सद्यः, दन्तजननात्प्रागहोरात्रेण, दन्तजननादूर्ध्वं तृतीयवर्षविहितचूडाकरणात्प्राक् त्रिरात्रेण, अत ऊर्ध्वं मौञ्जिबन्धनात्प्राक्केनैव त्रिरात्रेणाग्निसंस्कारोदकदानसहितेन शुद्धिरिति । अत एव संग्रहकारः—

नाम्नो दन्तोद्गमाच्चौलादुपनीतेरधः क्रमात् ।
सद्यश्शौचमहस्त्र्यहो नियताग्न्युदकः परः ॥

यत्तु शङ्खेनोक्तं—

अजातदन्ते बाले तु सद्यश्शौचं विधीयते ।
अहोरात्रात्तथा शुद्धिर्बाले त्वकृतचौलके ॥

इति । अकृतचौलके चूडाकालादर्वागित्यर्थः ।

यदपि याज्ञवल्क्येनोक्तं—

आदन्तजन्मनस्सद्य आचौलान्नैशिकी स्मृता ।
त्रिरात्रमाव्रतादेशाद्दशरात्रमतः परम् ॥

इति, जननानन्तरं नामकरणमारभ्य दन्तोद्गमात्प्रागतीतस्य संबन्धिनां सद्यश्शौचम्, दन्तजननादारभ्य चूडाकरणात्पूर्वमहोरात्रम्, चूडाकरणादारभ्य उपनयनपर्यन्तं त्रिरात्रमाशौचमित्यर्थः । तदेतद्वचनद्वयं मातापितृसोदरभ्रातृव्यतिरिक्तविषयम् ।

'अजातदन्ते बाले तु सद्यश्शौचं विधीयते।'

इत्यत्र विषयमाहाङ्गिराः—

अनुजातस्य तावत्स्यादाशौचं संस्थितस्य तु।
यावत्स्नानं न कुर्वन्ति सचेलं बान्धवा बहिः॥

इति। अनुजातो जातदन्ताद्बालतरः अनुत्पन्नदन्त इत्यर्थः। अपराण्यपि वचनान्यस्मिन् प्रकरणे प्रदर्शितवचनविरुद्धवचनवदवभासमानानि बहूनि विद्यन्ते, तेषां विरोधपरिहारो वक्ष्यमाणप्रकरणे वक्ष्यते॥

इति स्मृतिचन्द्रिकायां सूतकोपरिभव-
शिशुमरणाशौचविषयाणि.

## अथ शिशुमरणे शरीरसंस्काराशौचविषयाणि.

तत्र आदिपुराणे—

स्त्रीणां तु पतितो गर्भः सद्यो जातो मृतोऽथवा।
अजातदन्तो मासैर्वा मृतष्षड्भिर्गतैस्तथा॥
वस्त्राद्यैर्भूषणं कृत्वा न्युप्तव्यस्स तु काष्ठवत्।
खनित्वा तु शनैर्भूमिं सद्यश्शौचं विधीयते॥

इति। स्त्रीणां तु यो गर्भः पतितः, यः सद्यः जातस्सन् तत्क्षण एव मृतः, यश्चाजातदन्तस्सन् षण्मासादूर्ध्वमजातदन्तो मृतः, स बहुभिर्वस्त्रमाल्यैरलंकृत्य भूमिं खात्वा गर्ते काष्ठवन्निक्षिप्तव्य इत्यर्थः। सद्यश्शौचं मातापितृसोदरभ्रातृव्यति-

रिक्तानामित्यर्थः। मात्रादीनां तु पूर्वप्रकरणोक्तमाशौचमनुसंधेयम्। जातदन्ताविषये त्वादिपुराण एवोक्तं—

जातदन्तं मृतं त्यक्त्वा चरेदेकाहमेव तु।

इति, दन्तजननादूर्ध्वं परित्यक्ताविषयम्। पूर्वोक्तविधिनाऽरण्ये निक्षिप्य एकाहमाशौचमाचरेदित्यर्थः। इदं चैकाहमाशौचं मात्रादिव्यतिरिक्तविषयं, मात्रादिविषये पूर्वप्रकरणोक्तं त्रिरात्राशौचं वेदितव्यम्। यथाऽऽदिपुराण उक्तं—

अनतीतद्विवर्षं तु मृतं भूमौ निधाय च।
त्रिरात्रं बान्धवानां तु स्यादाशौचं तु सर्वशः॥

इति। दन्तजननादूर्ध्वमपूर्णद्विवर्षं मृतं पूर्वोक्तविधिना भूमौ गर्तवत्यां निधाय पूरयेदिति प्रथमवाक्यार्थः। उक्तविषये मात्रादीनां बान्धवानां त्रिरात्रमाशौचं भवेदिति द्वितीयवाक्यार्थः। अनतीतद्विवर्षस्य खनने विशेषमाह यमः—

ऊनाद्विवर्षकं प्रेतं घृताक्तं निखनेद्भुवि।
यमगाथा गायमानो यमसूक्तमनुस्मरन्॥

इति। गाथाः 'योऽस्य कौष्ठ्यजगतः' इत्याद्यास्तिस्र ऋचः। यमसूक्तं 'परेयुवांसं' इति षड्चम्। मनुरपि—

ऊनद्विवार्षिकं प्रेतं निदध्युर्बान्धवा बहिः।
अलंकृत्य शुचौ भूमावस्थिसंचयनादृते॥
नास्य कार्योऽग्निसंस्कारो नापि कार्योदकक्रिया।
अरण्ये काष्ठवत्त्यक्त्वा क्षपेयुस्त्र्यहमेव तु॥

इति। यत्र भूमौ पुराऽस्थिसंचयनं कृतं तां विहायान्यत्र शुचौ भूमाववटं खात्वा तत्र प्रेतशरीरं बान्धवा निधाय इष्टकालोष्टपाषाणादिभिः प्रच्छादयेयुरित्यर्थः। बान्धवा इति बहुवचनं बन्धूनामत्रानुगमनं कृताकृतमिति ज्ञापयितुम्। नियमपरं चेद्बहुवचनम्—

'ऊनद्विवार्षिकं प्रेतं निखनेन्नोदकं ततः।'

इति याज्ञवल्क्यवचनविरोधः प्रसज्येत। तस्मादेकेन द्वाभ्यां त्रिभिर्वा निखननं कार्यमिति तात्पर्यार्थः। 'न कुर्यादुदकं' इति याज्ञवल्क्यवचनेन खननानन्तरं यच्छुद्ध्यर्थं स्नानं न तन्निषिध्यते, किंतु यत्प्रेतायोदकदानं तन्निषिध्यत इत्युक्तं तद्भाष्ये। द्विवर्षमरणेऽप्युक्तं याज्ञवल्क्येन—

आ श्मशानादनुव्रज्य इतरो ज्ञातिभिर्वृतः।

यमसूक्तं तथा गाथां जपद्भिर्लौकिकाग्निना॥

स दग्धव्यः.................................॥

इति। इतरः पूर्णद्विवर्षो यो मृतः स ज्ञातिभिः आश्मशानादनुव्रज्यः अनुगन्तव्यः, लौकिकाग्निना तैरेव यमसूक्तं यमगाथां च जपद्भिर्दग्धव्यश्चेत्यर्थः। अत्रानुव्रज्य इति नियमविधिबलान्नियमेन ज्ञातिभिरनुगमनं कर्तव्यम्। इतर इत्यभिधानादूनद्विवर्षे नियमाभावोऽवगम्यते। निखननं च द्विवर्षात्प्रागेवेत्यवगम्यते। लौकिकाग्निरसंस्कृताग्निश्चण्डालाग्निव्यतिरिक्तोऽग्निर्ग्राह्यः;

चण्डालाग्निरमेध्याग्निस्सूतकाग्निश्च कर्हिचित् ।
पतिताग्निश्चिताग्निश्च न शिष्टग्रहणोचितः ॥

इति देवलस्मरणात् । अस्मिन्वचने लौकिकाग्निनेति वदन् जातारणिनिर्मथिताग्निव्यतिरिक्तः जातकर्मादिसंस्कारेषु होमार्थ इति दर्शयति । अत एवोक्तं देवस्वामिना—'चूडाकरणादिहोमार्थं त्वग्नेर्जातारणेरुत्पत्तिः न तत्सद्भावेऽपि विद्यमानाग्निपक्षबाधनमयुक्तम्' इति। ननु संपूर्णद्विवर्षस्य याज्ञवल्क्येन विहितोऽग्निसंस्कारो न नित्यः, 'ऊनद्विवार्षिकं प्रेतं निदध्युर्बान्धवा बहिः' इति प्रस्तुत्य 'नास्य कार्योऽग्निसंस्कारः' इति मनुनाऽभिधानाद्दर्शयति सर्वनाम्ना ऊनद्विवर्षप्रसवमर्शनं तथा व्याख्यानमयुक्तमिति । उच्यते—ऊनद्विवर्षविषये नित्यवन्निखननं विधाय वाशब्दादिकं विना तत्रैव काष्ठावत्यागरूपपक्षान्तरविधानस्यानुचितत्वात्, अस्येति सर्वनाम्न ऊनद्विवर्षप्रत्यासन्नतया सन्निहितसंपूर्णद्विवर्षप्रत्यवमर्शकत्वमेव युक्तमिति नास्यावकाशः। किंच संपूर्णद्विवर्षस्याग्निसंस्कारप्रतिषेधे क्रियमाणे कथं तत्र मृतशरीरस्य संस्कार इत्यपेक्षायामरण्ये काष्ठावत्त्यागविधिरपेक्षितो भवति। नैवमूनद्विवर्षे, तत्राग्निसंस्कारप्रतिषेधेऽपि निखननरूपसंस्कारस्य प्रागुक्तेरपि विद्यमानत्वात् । तस्मादेवमेव व्याख्येयम् । 'क्षपेयुस्त्र्यहमेव तु' इति त्रिरात्राशौचाविधिर्यद्यपि न विशेषेणाभिहितः, तथाऽपि 'बालानां कृतचूडानामशुद्धिर्नैशिकी

स्मृता' इति तेनैव त्रिवर्षपर्यन्तं सापिण्डानामहोरात्राशौचस्योक्तत्वात् तदविरोधेन मातापितृसोदरभ्रातृष्वेव त्रिरात्रमाशौचमुपातिष्ठते, दन्तजननादूर्ध्वं त्रिवर्षपर्यन्तं त्रिरात्राशौचस्य मातापितृसोदरभ्रातृविषयत्वेन प्रतिपादितत्वात् । 'नास्य कार्योऽग्निसंस्कारो नापि कार्योदकक्रिया' इति वदन्नुदकदानक्रियाया अग्निसंस्कारानुविधायित्वं दर्शयति । तेनाग्निसंस्कारोदकदानाक्रिययोः सह वा प्रवृत्तिस्सह वा निवृत्तिरिति बोद्धव्यम् । ततश्च—

'नात्रिवर्षस्य कर्तव्या बान्धवैरुदकक्रिया'

इति मनुवचनान्तरे उदकक्रियानिषेधादग्निसंस्कारस्य प्रतिषेधोऽवगन्तव्यः । अयं चाग्निसंस्कारोदकदानानिषेधो नामकरणात्प्रागेव, नियेनोर्ध्वं,

'जातदन्तस्य वा कुर्यान्नाम्नि वाऽपि कृते सति ।'

इति तेनैवानन्तरमभिधानात् । नामकरणाद्दन्तजननादूर्ध्वं त्रिवर्षपर्यन्तं नाग्निसंस्कारमुदकदानं च बान्धवाः कुर्युरित्यर्थः । एवंच जन्मप्रभृति नामकरणपर्यन्तं नाग्निसंस्कारो नोदकदानं च, नामकरणप्रभृति ऊनद्विवर्षपर्यन्तमुदकदानक्रियारहितं निखननं तत्सहिताग्निसंस्कारो वा, संपूर्णवर्षप्रभृत्यूनद्विवर्षपर्यन्तमुदकदानरहितोऽरण्ये काष्ठवत्त्यागोऽग्निसंस्कारो वा तत्सहितोऽत्रेति संकलितोऽर्थः प्रत्येतव्यः । नात्रिवर्षस्येति वदन्नसंपूर्णत्रिवर्षप्रभृत्यामौञ्जिबन्धनादग्निसंस्कारोदकदानप्रतिषे—

धो न विद्यत इति दर्शयति। तेन संपूर्णत्रिवर्षस्याकृतचौल-स्यापि मरणे नियत एवाग्निसंस्कारो नित्या चोदकक्रियेति मन्तव्यम्। अत एवाङ्गिराः—

यद्यप्यकृतचूडो वै जातदन्तस्तु संस्थितः।
दाहयित्वा तथा तत्र कन्याशौचं त्र्यहं चरेत्॥

इति। जातदन्तो जाताखिलदन्तः संपूर्णत्रिवर्ष इत्यर्थः। कृ-तचूडं संस्थितं दाहयित्वोदकक्रियां तस्यैव कृत्वा त्र्यहमा-शौचं मातापितृव्यतिरिक्तोपि सपिण्डः समाचरेदित्यर्थः। यद्यपीति वदन्नूनत्रिवर्षस्य कृतचूडस्यैव संस्थाने दहनोदक-दानत्रिरात्राशौचं नियतं न पुनरकृतचूडस्यापीति दर्शयति। दर्शितं च लोकाक्षिणा—

तूष्णीमेवोदकं कुर्यात्तूष्णीं संस्कारमेव च।
सर्वेषां कृतचूडानामन्यत्रापीच्छया द्वयम्॥

इति। संस्कारं अग्निसंस्कारम्। अन्यत्रापि अकृतचूडेऽपि नामकरणादूर्ध्वं द्विवर्षपर्यन्तं इच्छया प्रेताभ्युदयकामनया अग्निसंस्कारोदकदानात्मकं द्वयं कुर्यादित्यर्थः। अग्निसंस्कारे कृते उदकदाननियमात्त्रिरात्राशौचनियमनं मात्रादिसपिण्डा-नाम्। तथा च पराशरः—

दन्तजातेऽनुजाते च कृतचूडे च संस्थिते।
अग्निसंस्करणं तेषां त्रिरात्रमशुचिर्भवेत्॥

इति। येषामजातदन्तानामग्निसंस्करणं कृतं तेषां सपिण्डमात्रं मात्रादिव्यतिरिक्तमपि त्रिरात्रमशुचि भवेदित्यर्थः। आदिपुराणे अकृतचूडस्याप्यग्निसंस्कारे कृते पित्रादिव्यतिरिक्तानामपि त्रिरात्रमाशौचमित्युक्तं—

अनतीतद्विवर्षस्तु प्रेतो यत्रोपदह्यते।
अतिमोहाभिभूतैस्तु देशसाधर्म्यमाचरन्॥
आशौचं बान्धवानां तु त्रिरात्रं तत्र विद्यते॥

इति। देशसाधर्म्यमाचरन् स्वदेशाचारमाचरद्भिरित्यर्थः। मोहः स्नेहः। यत्तु वसिष्ठेनोक्तं—'उदकक्रियाऽऽशौचं द्विवर्षात्प्रभृति दन्तजननादित्येके' इति। तस्यायमर्थः—प्रेताभ्युदयकामनया क्रियमाणाग्निऽऽसंस्कारपूर्वोदकदानक्रिया सर्वसपिण्डानां त्रिरात्रमाशौचं च द्विवर्षप्रभृति त्रिवर्षपर्यन्तं दन्तजननप्रभृति त्रिवर्षपर्यन्तं वा वेदितव्यमिति। 'दन्तजननादित्येके' इत्येतन्मतान्तरोपलक्षणार्थं, 'नाम्नि वाऽपि कृते सति' इति मनुना नामकरणप्रभृत्युदकदानादेरभिधानात्। दन्तजननादि मातापितृभ्यामेवाशौचं प्राक्चूडाकरणादिति मातापितृभ्यामेवाशौचं त्रिरात्रं कर्तव्यमिति शेषः।

प्राङ्नामकरणात्सद्य एकाहं दन्तजन्मनः।
चूडायास्त्रिदिनं प्रोक्तं.......................॥

इति स्मृत्यन्तरे दन्तजननादूर्ध्वं प्राक्चूडाकरणान्मातापितृविषये त्रिरात्राशौचस्याभिधानात्। मातापितृभ्यामेवेत्येवकारः

सपिण्डान्तराणां त्रिरात्राशौचस्य निवृत्त्यर्थो नाशौचमात्रस्य। तथात्वे—

'आदन्तजन्मनस्सद्य आचौलान्नैशिकी स्मृता'।

इत्यादिभिश्च सपिण्डाशौचप्रतिपादकवचनैस्सह विरोधोऽपरिहार्यस्स्यात्। एतेनैव 'आद्विवर्षे प्रेते मातापित्रोराशौचम्' इति पारस्करवचनं व्याख्यातम्। अत एवानन्तरमुक्तं तेनैव—'एकरात्रं त्रिरात्रं वा शरीरमदग्ध्वा निखनन्ति' इति। तत्र त्रिरात्रमिति पक्षो मातापितृविषयः। एकरात्रपक्षस्तु तदितरसपिण्डविषय इति मन्तव्यम्। 'शरीरमदग्ध्वा निखनन्ति' इत्यस्मिन्विषये दाहस्थाने निखननमिति दर्शितम्। यत्तु शङ्खलिखिताभ्यामुक्तं—'बालेऽतीते सद्यश्शौचं य ऊनद्विवर्षस्स्यादनुत्पन्नदन्तकः' इति, यो बाल ऊनद्विवर्षः तस्मिन् व्यतीते सद्यश्शौचमित्यन्वयः। तदेतत् प्रस्तुताग्निहोत्राद्यनुष्ठानविषयं, 'अग्निहोत्रार्थं स्नानोपस्पर्शनात्तत्कालं शौचम्' इति शङ्खस्मरणात्। तेन शङ्खस्यापि 'आचौलान्नैशिकी स्मृता' इत्यादिपूर्वोक्तवचनैस्सह नास्ति विरोधः। यत्तु काश्यपेनोक्तं—'बालानामजातदन्तानां त्रिरात्रेण शुद्धिः' इति, यत्तु वैवस्वतेनोक्तं—बाले वा जातदन्ते वा त्रिरात्रमाशौचं सद्यश्शौचमिति गौतमः' इति, यदपि वसिष्ठेन—'ऊनद्विवर्षे प्रेते गर्भप्रपतने वा सपिण्डानां त्रिरात्रमाशौचं सद्यश्शौचमिति गौतमः' इति, तत्र त्रिरात्रमित्यग्निसंस्कारविषयम्।

सद्यश्शौचमित्यनग्निसंस्कार एव प्रस्तुताग्निहोत्रानुष्ठानविषयम्। यत्तु पैठीनसिनोक्तं—'अकृतचूडानां त्रिरात्रम्' इति, तदप्यग्निसंस्काराविषयम्। अनग्निसंस्कारे वा मातापितृविषयम्। यत्तु यमेनोक्तं—

ऊनद्विवर्षके बाले प्रेतत्वमुपगच्छति।
अजातदन्ते तनये शिशौ गर्भच्युते तथा॥
निकृत्तचूडके वाऽपि देशान्तरमथो गते।
सपिण्डानां तु सर्वेषामहोरात्रमशौचकम्॥

इति, चत्वार्येतानि वाक्यानि। 'अहोरात्रमशौचकम्' इति त्रिष्वपि वाक्येषु संबध्यते। तत्राद्यवाक्यस्यायमर्थः—दन्तजाते ऊनद्विवर्षके बाले प्रेते निखननमेव। तत्र पित्रादिव्यतिरिक्तसपिण्डानामहोरात्रम्। द्वितीयवाक्यस्यायमर्थः—अजातदन्ते तनये नामकरणादूर्ध्वं खनने च कृते मातापित्रोरहोरात्रमाशौचमिति। तनयग्रहणादत्र मातापित्रोर्गम्यते। तृतीयवाक्योक्तगर्भच्युतावेकरात्रम्।

पाते मातुर्यथामासं पित्रादीनां दिनत्रयम्।

इति मरीचिवचनाविरोधपरिहाराय गुणवत्पित्रादिसपिण्ड विषयमिति मन्तव्यम्। चतुर्थं वाक्यं देशान्तरमृतकृतचूड बालविषयमिति तस्मिन्नेव वाक्ये स्पष्टम्। अतो नास्यापि वचनान्तरविरोधः। यत्तु याज्ञवल्क्येनोक्तं—

त्रिरात्रं दशरात्रं वा शावमाशौचमिष्यते।

ऊनद्विवर्षे उभयोस्सूतकं मातुरेव हि ॥

इति । उभयोर्मातापित्रोरित्यर्थः । ततश्चोनद्विवर्षे प्रेते मातापित्रोर्दशरात्रं शावाशौचमित्युच्यते । पूर्वोक्तत्रिरात्राशौचविधायकानेकवचनविरोधप्रसङ्गात्तत्परिहाराय त्रिरात्रं शावाशौचमित्यनेनैव सबन्धः, न पुनर्दशरात्रं शावाशौचमिष्यत इत्यनेनापीति नास्य वचनस्य पूर्वोक्तवचनेन सह विरोधः। यत्तु स्मृत्यन्तरवचनं—'ऊनद्विवर्षे प्रेते मातापित्रोरेव नेतरेषाम्' इति, तस्यायमर्थः—ऊनद्विवर्षे प्रेते निखनेन कृते मातापित्रोरेव त्रिरात्रमाशौचं नेतरेषां सपिण्डानां, तेषां त्वेकरात्राभिधानादिति सर्वमनवद्यम् ॥

एवं निरूपितवयोऽवस्थाप्रयुक्ताशौचविधिः ब्राह्मणादिचतुर्वर्णसाधारणः, वर्णविशेषानुपादानेन मातापित्रोर्विहितत्वात् । 'तुल्यं वयसि सर्वेषाम्' इति व्याघ्रपादवचनाच्च । वयसि षण्मासादिरूपे यत्सद्यश्शौचादि विहितं तत्सर्वेषां ब्राह्मणानामविशिष्टमित्यर्थः । यद्यप्यन्यानि ऋश्यशृङ्गवचनानि वयोऽवस्थाप्रयुक्ताशौचविषयाणि क्षत्रियादिषु दीर्घकालाशौचप्रतिपादकानि सन्ति, तथाऽपि 'कर्मभूयस्त्वात्फलभूयस्त्वम्' इति न्यायेनात्र शुद्धिभूयस्त्वाभावादनुष्ठातॄणां चानादरत्वे सति तानि न लिखितानि ॥

इति स्मृतिचन्द्रिकायां मृतशिशुशरीरसंस्काराशौचविषयाणि.

उक्तमविशेषेण गर्भस्रावादिस्त्रीपुंसप्रजामरणे शावाशौचम्। इदानीं स्त्रीप्रजामरणाशौचविषयाणि कानिचिद्वचनानि लिख्यन्ते। तत्रापस्तम्बः—

अप्रौढायां तु कन्यायां सद्यश्शौचं विधीयते।

इति। दन्तजननादूर्ध्वमपीति शेषः। एवंच—

अजातदन्ते बाले तु सद्यश्शौचं विधीयते।
अहोरात्रात्तदा शुद्धिर्बाले त्वकृतचूडके॥

इत्यत्र दन्तजननादूर्ध्वं बालमरणे सत्यहोरात्राशौचविधानं कन्येतरबालविषयमिति मन्तव्यम्। मनुना त्वकन्याविषय एव विहितं—

नृणामकृतचूडानामशुद्धिर्नैशिकी स्मृता।

इति। नृणां पुंसामित्यर्थः।

निवृत्तचूडकानां तु त्रिरात्राच्छुद्धिरिष्यते।

इति। एतदपि मनूक्तमकन्याविषयमेव, नृणामित्यस्यानुषङ्गात्। कथं तर्ह्याशौचं कृतचूडकन्यामरण इत्यपेक्षिते आपस्तम्बः— 'एकाहाच्छुद्धिमायान्ति कृतचूडिकायाम्' इति। कृतचूडिकायां कन्यायां विवाहादर्वाङ्मृतायामहोरात्रमित्यर्थः।

अप्रत्तायां मृतायां तु कन्यायामेकरात्रकम्।
आशौचं बान्धवानां तु पित्रादीनां प्रकीर्तितम्॥

इति मार्कण्डेयस्मरणात्। तत्र पित्रादीनां बान्धवानामिति नैवमन्वयः, पित्रादिसर्वबन्धूनामहोरात्राशौच उच्यमाने स्मृत-

न्तरविरोधापत्तेः । अतस्तत्परिहाराय पित्रादीनामस्मिन्विषये स्मृत्यन्तरे प्रकीर्तितं त्रिरात्रमाशौचं भवतीत्यध्याहृतेनान्वयो द्रष्टव्यः । पितृवत्सोदराणामपि प्रत्यासत्त्यतिशयान्न बन्धुवदाशौचं, किंतु पितृवदेवेति ज्ञापयितुं बहुवचननिर्देशः पित्रादीनामिति कृतः । यमेनोक्तं—

पित्रोरुपरमे स्त्रीणामाशौचं तु कथं भवेत् ।
त्रिरात्रेण विशुद्धिस्स्यादित्याह भगवान् यमः ॥

अत्र स्त्रीणामुपरमे पित्रोः कथमाशौचमित्यन्वयः । अकृतचूडस्त्रीणामुपरमे मातापित्रोराशौचं कथं भवेत्? बन्धूनामिवैकरात्रमाशौचं? उत प्रत्यासत्त्यतिशयात्ततोऽधिकं? इति संशये पित्रोस्त्रिरात्रेणैव शुद्धिरिति नियमेन निर्णय इत्यर्थः । पित्रोरिति पित्रादीनामित्यन्वयोऽवगन्तव्यः । एवं पित्रोरिति यत्रयत्रोच्यते तत्रतत्र पितृशब्दस्य सोदरभ्रातॄणामुपलक्षणत्वं वेदितव्यम् । काष्र्णाजिनिरपि पितृव्यादिबन्धूनां पित्रादिनामाशौचे विशेषमाह—

प्रात्ताप्रत्तासु योषित्सु संस्कृतासंस्कृतासु च ।
मातापित्रोस्त्रिरात्रं स्यादितरेषां यथाविधि ॥

अप्रत्तासु जातदन्तास्विति शेषः । अजातदन्तासु पित्रादीनामेकरात्राशौचस्य शङ्खेनोक्तत्वात् । जातदन्तासु स्त्रीषु पित्रादीनां पुमपत्यवदेवाशौचं वेदितव्यम् । 'इतरेषां यथाविधि' इत्यस्यायमर्थः—इतरेषां पितृव्यादीनां कन्यानां प्राक्चूडाक-

रणात्सद्यश्शौचं, प्राग्दानादेकाहं, वाग्दत्तानां प्राक्परिणयनात्त्र्यहमित्यादिविध्यन्तरानुसारेण शुद्धिरिति । प्रत्ता प्रक्रान्तदाना वाग्दत्तेति यावत् । संस्कृता विवाहसंस्कारेण संस्कृता ।

वारिपूर्वं प्रदत्तासु या नैव प्रतिपादिता ।
असंस्कृता तु सा प्रोक्ता त्रिरात्रमुभयोः स्मृतम् ॥

इति मरीचिस्मरणात् । उभयोः भर्तृपितृपक्षयोः । अत एव मनुः—

स्त्रीणामसंस्कृतानां तु त्र्यहाच्छुध्यन्ति बान्धवाः ।
यथोक्तेनैव कालेन शुद्ध्यन्त्येव सनाभयः ॥

इति । अयमर्थः—वाग्दत्तानां विवाहासंस्कृतानां स्त्रीणां मरणे वाग्दानसमये कुमारीस्वीकर्तृपितृकेन बन्धुभावमुपागता भर्तृपक्षीयास्त्रिरात्रेण शुद्ध्यन्ति । सनाभयः कन्याप्रत्यासन्नास्त्रिपुरुषपर्यन्तास्सपिण्डाः यथाऽत्रैवोक्तेन त्रिरात्रकल्पेन शुध्यन्ति। 'अप्रत्तानां तु स्त्रीणां त्रिपुरुषसापिण्ड्यम्' इति वचनबलादेवं व्याख्यातम् । पद्मपुराणे तु कन्यामरणाशौचं प्रपञ्चेनाभिहितम्—

आजन्मनस्तु चौलान्ता कन्या यत्र विपद्यते ।
सद्यश्शौचं भवेत्तत्र सर्ववर्णेषु नित्यशः ॥
ततो वाग्दानपर्यन्तं यावदेकाहमेव हि ।
ततः परं प्रवृत्तायां त्रिरात्रमिति निश्चयः ॥

वाग्दाने च कृते यत्र तत्रोभयतस्त्र्यहम् ।
पितुर्वरस्य च ततो दत्तानां भर्तुरेव हि ।
स्वजात्युक्तमशौचं स्यान्मृतके जननेऽपि च ॥

इति । ततो वाग्दानपर्यन्तमित्यादेरयमर्थः —ततः तस्माच्चौलाद्वाग्दानपर्यन्तं कन्याविपत्तौ यावदेकाहं अहोरात्रं यावत्तावदाशौचं, ततःपरं वाग्दानादूर्ध्वं विवाहोत्कर्षविषये वाग्दानावस्थायामेव प्रवृत्तायामधिकवयस्यापि त्रिरात्रमेवेति निश्चयः। वाग्दाने कृते तत्रोभयतः पक्षे त्रिरात्रं, ततो विवाहादूर्ध्वं दत्तानां सम्यक्प्रतिपादितानां मरणे अपत्यजनने केवलं भर्तृपक्षस्य स्वजात्युक्तं दशाहमाशौचं स्यादिति । प्रवृत्तायां त्रिरात्रमित्यस्य दृष्टरजस्यपवादमाह शङ्खः—

पितृवेश्मनि या नारी रजः पश्यत्यसंस्कृता ।
तस्यां मृतायां नाशौचं कदाचिदपि शाम्यति ॥

इति । स्वजात्युक्तदशाहादिकालादर्वाक्कदाचिदपि न शाम्यतीत्येवं कैश्चिद्व्याख्यातम् । विवाहोत्कर्षवच्चूडाकरणवाग्दानयोरुत्कर्षे आचौडात्सद्य आवाग्दानादेकाहमेवेति निश्चयो न्यायसाम्यात्कार्यः । अचूडितायामवाग्दत्तायां वा रजोदर्शने 'पितृवेश्मनि या नारी' इत्यादिवचनोक्तं द्रष्टव्यम् । परतो मृतायामाशौचं पितृपक्षे निवर्तत इत्याह मार्कण्डेयः—

कन्यायास्तु व्रतस्थाने विवाहः परिकीर्तितः ।
उद्वाहितानामाशौचं पितृपक्षे विधीयते ॥

इति। अस्य क्वचिदपवादमाह विष्णुः—'विवाहसंस्कारसंस्कृतासु स्त्रीषु नाशौचं पितृपक्षे तत्प्रसवमरणे चेत्पितृगेहे भवेतां तदैकरात्रं त्रिरात्रं वा' इति। तत्प्रसवमरणे इत्यादेरयमर्थः—विवाहसंस्कृतानां स्त्रीणां पितृगेहे प्रसवे गर्भस्थशिशुजनने तस्या मरणे वा यथाक्रमं प्रसवे एकरात्रं मरणे त्रिरात्रं पितृव्यादिबन्धूनामाशौचं भवतीति। तथाच बान्धवा इत्यनुवृत्तौ शङ्खः—

'गेहे मृतासु दत्तासु कन्यासु त्र्यहं तथा।'

इति। परिणीतासु स्त्रीषु पितृगेहे मृतासु पितृव्यादिबान्धवास्त्र्यहमाशौचं कुर्युरित्यर्थः। अथवा प्रसवे मरणे बान्धवानामेकरात्रं पित्रादेस्त्र्यहमिति व्यवस्थाया विष्णुवचनं व्याख्येयं,

दत्ता नारी पितुर्गेहे सूयेताथ म्रियेत वा।
तद्बन्धुवर्गस्त्वेकेन शुद्धस्तज्जनकस्त्रिभिः॥

इति ब्रह्मपुराणे व्यवस्थयैवाभिधानात्। जनकग्रहणं जनन्यास्सोदरभ्रातॄणामपि प्रदर्शनार्थम्। एवं पितृगेहे प्रसवे पितृपक्षीयस्यैकरात्रमाशौचं मरणे त्रिरात्रमेकरात्रं वेति। पितृगृहादन्यत्र प्रसवे मरणे वा पितृपक्षस्य नास्त्याशौचं, मातापित्रोस्स्वगेहे जनने मरणे वा त्रिरात्रं, गृहान्तरेऽपि मरणे त्रिरात्रं प्रसवे तूभयोरपि नास्त्याशौचं कारणाभावादित्यवगन्तव्यम्। यत्तु शङ्खलिखिताभ्यामुक्तं—'वाक्प्रदाने कृते विवाहे चाकृते यत्र कन्या विपद्यते तत्रोभयतः उभयस्मिन् भर्तृपितृपक्षे त्रिरात्रमाशौचं ऊढायां गोत्रात्पिण्डाशौचाभ्यां निवृत्तिः'

इति, आशौचशब्देनात्र आशौचदशायां कर्तव्यमुदकदानं निर्दिश्यते । ततश्चायमर्थः—ऊढायां कन्यायां पितृगेहे मृतायां पितृव्यादिबन्धूनामेकाहमाशौचं पितृगोत्रात्पिण्डोदकदानादेर्निवृत्तिरिति । अतो न पूर्वोक्तविरोधः । पितृगोत्रतः पिण्डाशौचनिवृत्तौ हेतुमाह पैठीनसिः—'दत्ता कन्या परैव भवति' इति । ऊढा कन्या भर्तृगोत्रेणैव भवतीत्यर्थः ।

'एकत्वं सा गता भर्तुः पिण्डे गोत्रे च सूतके' ।

इति स्मरणात् । अतश्च पिण्डोदकदानमूढायै भर्तृगोत्रेण कर्तव्यामित्यर्थः । अत एव मार्कण्डेयः—

ब्राह्मादिषु विवाहेषु या ऊढा कन्यका भवेत् ।
भर्तृगोत्रेण कर्तव्यास्तस्याः पिण्डोदकक्रियाः ॥

आसुरादिविवाहेषु पितृगोत्रेण धर्मतः ॥

ं । पितृगोत्रेण कन्यापितृगोत्रेणेत्यर्थः । ऊढायाः पिण्डोदकयाश्च भर्तृकुल्यैः कर्तव्याः । तथाच वासिष्ठः—'दत्तानारे कुर्वीरंस्ताश्च स्त्रियस्तेषाम्' इति । उद्वाहितानां स्त्रीणार्वैदेहिकं भर्तृकुल्याः कुर्युः, तेषां भर्तृकुल्यानां मरणे ता उद्वाहिताः स्त्रियः कुर्युरित्यर्थः । पुत्रादिप्रत्यासन्नाधिकार्यभावविषयमेतदिति श्राद्धकाण्डे निरूपितम् ॥

इति स्मृतिचन्द्रिकायां स्त्रीप्रजाशौचविषयाणि.

अथान्यान्यपि शावाशौचविषयाणि वचनानि लिख्यन्ते.

तत्राङ्गिराः—

अतःपरं तु वर्णानां प्रतिपत्तिर्यथाक्रमम् ।

वक्ष्यामश्शावमाशौचं यथादृष्टं मनीषिभिः ॥

इति । अतः परं उपनीतशवनिमित्तमाशौचं वक्ष्याम इत्यर्थः । अनुपनीतशवनिमित्ताशौचस्य प्रागुक्तत्वात् । अत एव—

त्रिरात्रमाव्रतादेशाद्दशरात्रमतः परम् ।

इत्युक्तम् । व्रतादेश उपनयनम् । ततःपरं बाल्ये यौवेन वार्धके वा मरणे दशरात्रमाशौचं भवतीत्यर्थः । अस्मिन् विषये मनुरपि—

दशाहं शावमाशौचं सपिण्डेषु विधीयते ।

इति । सपिण्डेषु ब्राह्मणसपिण्डेष्वित्यर्थः ।

शुध्येद्विप्रो दशाहेन द्वादशाहेन भूमिपः ।

वैश्यः पञ्चदशाहेन शूद्रो मासेन शुध्यति ॥

इति तेनैवोक्तत्वात् । ब्रह्मणक्षत्रियवैश्यशूद्रसपिण्डेषु दशाहं द्वादशाहं पञ्चदशाहं मासं शावाशौचं विधीयत इत्यर्थः । यत्तु याज्ञवल्क्येनोक्तम्—

त्रिरात्रं दशरात्रं वा शावमाशौचमिष्यते ।

इति । तत्र त्रिरात्रपक्षः समानोदकाविषय इत्यविरोधः । एवमेव बृहस्पतिः—

दशाहेन सपिण्डास्तु शुद्ध्यन्ति प्रेतसूतके ।

त्रिरात्रेण सकुल्याश्च स्नात्वा शुध्यन्ति गोत्रजाः ॥

इति । कः पुनस्सपिण्डादीनां भेदः? उच्यते—यतः प्रवृत्तस्संतानविशेषः स कूटस्थ इति व्यवह्रियते । तत्सन्तानेषु तमादिं कृत्वा गणिताः पुत्रपौत्रादयः सप्तपुरुषपर्यन्ता न गोत्रान्तरानुप्रविष्टाः परस्परं सपिण्डा विज्ञेयाः । तथाच शङ्खलिखितौ—

सपिण्डता तु सर्वेषां गोत्रतस्सप्तपौरुषी ।

इति । कूटस्थमारभ्य सप्तपुरुषपर्यन्तास्सपिण्डाः । सर्वेषां कूटस्थसंततिजातानां गोत्रतः एकगोत्रत्वलक्षणोपाधिसद्भावे सतीत्यर्थः । एवं कूटस्थस्त्रीपुंससन्ततिजातानां दौहित्रपौत्राणां गोत्रभेदादन्योन्यसापिण्डता नावगन्तव्या । सप्तपौरुषी चेयं सपिण्डता ब्राह्मणादिसर्ववर्णेषु समानैव,

सपिण्डता तु पुरुषे सप्तमे विनिवर्तते ।
सजातीयेषु वर्णेषु चतुर्थे भिन्नजातिषु ॥

इति पराशरस्मरणात् । कूटस्थसजातीयेषु सपिण्डता सप्तमादूर्ध्वं निवर्तत इति असजातीयेषु त्रिपुरुषादूर्ध्वं निवर्तत इत्यर्थः । तथाऽऽह शातातपः—

पुत्राणां च सपिण्डानामप्रत्तानां च योषिताम् ।
सपिण्डता तु निर्दिष्टा पितृपक्षे त्रिपूरुषात् ॥

इति । साप्तपौरुषात् सापिण्ड्यं विनिवर्तते । अत ऊर्ध्वं समा-

नोदकाः। समानोदका एव बृहस्पतिना सकुल्या इत्युक्ताः। निवृत्तसमानोदकभावा गोत्रजाः।

समानोदकभावस्त्वनुवर्तेताचतुर्दशात्।
जन्मनाम्नोः स्मृतेरेके तत्परं गोत्रमुच्यते ॥

इति व्याघ्रस्मरणात्। जन्म च नाम च जन्मनामनी, तयोः स्मरणं यावत्तावत्समानोदकभाव इत्येके मन्यन्ते। अतःपरं समानोदकभावस्त्वेकेषां मते निवर्तेत इत्युक्तम्। उक्तं च साक्षान्मनुना—

सपिण्डता तु पुरुषे सप्तमे विनिवर्तते।
समानोदकभावस्तु जन्मनाम्नोरवेदने ॥

इति। जन्मावेदनं अस्मत्कुलोद्भूतोऽयमिति स्मरणोत्सादनं, नामावेदनं देवदत्तवंश्या इति स्मरणोत्सादनम्। एवं जन्मनाम्नोरन्यतरस्मरणोत्सादनेऽपि समानोदकभावो निवर्तेत इत्यर्थः। तथाच स्मृत्यन्तरेऽपि—

समानोदकभावस्य निवृत्तिस्स्यादवेदने।
जन्मनाम्नोरन्यतराविज्ञानेऽपि निवर्तते ॥

इति। एवमस्मरणेऽपि न समनोदकभावो निवृत्तो येषां गोत्रजाः स्नानाच्छुध्यन्ति। येषां जन्मनाम्नोरस्मरणे सत्यपि चतुर्दशपुरुषातिक्रमात्सगोत्रत्वं तेषां स्नानमात्राच्छुद्धिः,

'समानोदकानां त्र्यहं गोत्रजानामहः स्मृतम्'

इति जाबालिवचनस्यैवंविधगोत्रजविषयत्वात्। समानोदकानां

त्र्यहमित्यनेन समानोदकेष्वेव त्र्यहमिति न नियम्यते, असमानोदकेष्वपि स्मरणदर्शनात्। तथाच स्मृतिः—

'त्र्यहं मातामहाचार्यश्रोत्रियेष्वशुचिर्भवेत्'।

इति। मातामहो मातुः पिता। आचार्यः—

उपनीय तु यश्शिष्यं वेदमध्यापयेद्द्विजः।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते॥

इत्युक्तलक्षणवान्। श्रोत्रियः एकशाखाध्यायी। 'एकां शाखामधीत्य श्रोत्रियो भवति' इति बोधायनस्मरणात्। वाक्यार्थस्तु—मातामहाचार्यश्रोत्रियेषु मृतेषु क्रमेण दौहित्रः अश्रोत्रियोऽपि तच्छिष्यः प्रातिवेश्यद्विजश्च त्र्यहमशुचिर्भवेदिति। श्रोत्रिये त्र्यहमशुद्धिः प्रातिवेश्य एव द्विजे, अप्रातिवेश्यानामेकग्रामिणामेकरात्रस्य वक्ष्यमाणत्वात्। अत एव मनुना श्रोत्रिये विशेष उक्तः—

श्रोत्रिये तूपसंपन्ने त्रिरात्रमशुचिर्भवेत्।

इति। उपसंपन्नः प्रत्यासन्नः प्रातिवेश्य इति यावत्। आश्वलायनोप्याचार्यलक्षणसंपन्ने गुरौ त्रिरात्रमाह—'गुरौ चासपिण्डे त्रिरात्रम्' इति। सपिण्डो गुरुः पिता। तदितर उक्तलक्षणवानाचार्यः। इतरेष्वाचार्येष्वित्यनन्तरं नैनैवाभिधानात्। अतोत्राप्यन्योपनीतशिष्यस्यैवासपिण्डगुरुमरणे त्रिरात्रं वेदितव्यम्। एतच्च त्रिरात्रं परेण दहनादिके क्रियमाणे द्रष्टव्यम्। यदाह मनुः—

गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरन्।

प्रेताहारैस्समं तत्र दशरात्रेण शुध्यति ॥

इति । प्रेताहाराः प्रेतद्रव्योपजीविनः, प्रेतकुटुम्बान्तर्गतास्सपिण्डा इति यावत् । तैस्सह दशरात्रेण पितृमेधकर्ता शिष्यश्शुध्यतीत्यर्थः । एवंच दशरात्राशौचस्य पितृमेधकर्तृत्वप्रयुक्तत्वाद्दौहित्रादावपि पितृमेधकर्तृत्वे दशरात्रं वेदितव्यम् । प्रचेता अपि—

मातृष्वसामातुलयोश्श्वश्रूश्वशुरयोर्गुरौ ।

मृते चर्त्विजि याज्ये च त्रिरात्रेण विशुध्यति ॥

इति । मातृष्वस्रादिषु वक्ष्यमाणपक्षिण्याशौचविधिविरोधपरिहाराय किंचिद्विशेषणं कल्प्यम् । तत्र पित्रोरसान्निधानासामर्थ्यादौ मतृष्वसामातुलयोः भागिनीसुतसान्निधात्रोः श्वश्रूश्वशुरयोः जामातृपोषकयोः गुरौ उपनयनादिकर्तरि ऋत्विजि यजमानकुलक्रमायाते याज्ये च क्षत्रियकुलक्रमायाते मृते भागिनेयादिः प्रतिसंबन्धी त्रिरात्रेण शुध्यतीति । वृद्धमनुरपि—

पित्रोरुपरमे स्त्रीणामूढानां तु कथं भवेत् ।

त्रिरात्रेण विशुद्धिस्स्यादित्याह भगवान् यमः ॥

पित्रोरुपरमे पितुर्वा मातुर्वा मरणे विवाहसंस्कारसंस्कृतानां दुहितॄणां त्रिरात्रेण शुद्धिरित्यर्थः । दौहित्राणां मरणेऽप्याह स एव—

संस्थिते पक्षिणी कार्या दौहित्रे भागिनीसुते ।

संस्कृते तु त्रिरात्रं स्यादिति धर्मो व्यवस्थितः ॥

इति । दौहित्रे भागिनीसुते उपनयनसंस्कारसंस्कृते माता-महमातामह्योः मातृष्वसामातुलयोस्त्रिरात्रमाशौचं भवति । उप-नयनासंस्कृते पक्षिणी, आगामिवर्तमानाहर्युक्तां रात्रिं माता-महादिः क्षपयेदित्यर्थः । अत्रोपनीतमरणाशौचकथनेऽतिप्रसङ्गा-दनुपनीतस्यापि कथितमिति मन्तव्यम् । बोधायनोऽपि— 'शिष्यसतीर्थ्यसब्रह्मचारिषु त्रिरात्रमहोरात्रमेकाहमिति कुर्वीत' इति । त्रीण्येतानि वाक्यानि । तत्र प्रथमवाक्यस्यायमर्थः— अन्येनोपनीते शिष्ये मृते त्रिरात्रमाशौचमाचार्यः कुर्यादिति । कृतविद्या एकगुरवश्शिष्याश्च सतीर्थ्याः; तेषु कस्यचिन्मरणे तदितरस्सतीर्थ्यः अहोरात्रं कुर्यादिति द्वितीयवाक्यार्थः । एक-गुरवस्सहाध्यायिनः शिष्यास्सब्रह्मचारिणः; तेष्वेकस्मिन्मृते तदि-तरस्सब्रह्मचारी एकाहमाशौचं कुर्यादिति तृतीयवाक्यार्थः । हारीतोऽपि—

> परपूर्वासु भार्यासु पुत्रेषु कृतकेषु च ।
> मातामहे त्रिरात्रं स्यादेकाहं तु सपिण्डतः ॥

इति । परः वर्तमानभर्तुरन्यः स्वभर्ता यस्यास्सा परपूर्वा पुनर्भूरित्यर्थः । कृतकः पुत्रः जन्मव्यतिरिक्तैः कारणैर्जातो द-त्तादिः पुत्रः । वाक्यार्थस्तु—मातामहादौ मृते परपूर्वाया भार्याया मरणे पूर्वापरयोर्भर्त्रोस्त्रिरात्रं, कृतकपुत्रमरणे जन्मव्यतिरिक्तका-रणेन यस्य पुत्रो जातस्तस्य त्रिरात्रं, पूर्वापरभर्तुः कृतकपुत्रिण-श्च ये सपिण्डास्तेषामहोरात्रमाशौचमित्यर्थः । अत्र सपिण्डदौ

हिरात्राशौचकथनप्रसङ्गात्पुनर्भूसपिण्डानामाशौचं कथितमिति मन्तव्यम्। शङ्खस्तु स्वैरिणीपुनर्भ्वामपि त्रिरात्राशौचमाह—

अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु च।
परपूर्वासु च स्वासु त्रिरात्राच्छुद्धिरिष्यते ॥

इति। अनौरसेषु पुत्रेषु क्षेत्रजदत्तकादिषु अन्यगतासु पुनर्विवाहमन्तरेण भर्त्रन्तरं समाश्रितासु स्वैरिणीषु परपूर्वासु स्वासु वर्णानतिक्रमेण पुनर्भूषु। विष्णुश्शङ्खोक्तविषये जन्मन्यपि त्रिरात्रमाह—

अनौरसेषु पुत्रेषु जातेषु च मृतेषु च।
परपूर्वासु भार्यासु प्रसूतासु मृतासु च ॥

इति। 'मातामहेऽतीते त्रिरात्रेण' इति पूर्ववाक्यश्रुतत्रिरात्रेणेतिपदमिहानुषज्यते। अङ्गिरा अपि—

गृहे यस्य मृतः कश्चिदसपिण्डः कथंचन।
तस्याप्यशौचं विज्ञेयं त्रिरात्रं नात्र संशयः ॥

इति। प्रधानगृहमरणविषयमेतत्। अप्रधानगृहमरणे त्वाह विष्णुः—'असपिण्डे स्ववेश्मनि मृतेऽप्येकरात्रमाशौचम्' इति। असपिण्डयोनिसंबन्धमरणे त्वाह गौतमः—'पक्षिणीमसपिण्डयोनिसंबन्धे सहाध्यायिनि च' इति। पितृव्यादिः योनिसंबन्धः, तद्व्यावृत्त्यर्थमसपिण्डग्रहणम्। ततश्चायमर्थः—असपिण्डयोनिसंबन्धाः मातुलमातृष्वसृभगिनीभागिनेयपितृष्वसृतत्सुतादयः, तेषां मरणे तत्संबन्धप्रतियोगी भागिनेयादिः

पक्षिणीं क्षपयेदित्यर्थः। योनिसंबन्धेषु त्रिपूरुषपर्यन्तं पक्षिणी शिष्टैराचर्यतेति धर्मवेदिभिरभिहितम्। सहाध्यायिनीत्यस्यायमर्थः—येन शास्त्रेण सहैकस्मिन् गुरुकुले द्वादशाब्दादिबहुकालमध्ययनं च कृतं तन्मरणे तदितरस्तत्सहाध्यायी पक्षिणीं क्षपयेदिति। मनुरपि—

मातुले पक्षिणीं रात्रिं शिष्यर्त्विग्बान्धवेषु च।

इति। अल्पोपकारकमातुले, अन्योपनीतसाङ्गवेदाध्यायिनि शिष्ये, आधानप्रभृति यावज्जीवमार्त्विज्यकारिणि ऋत्विजि, आत्मपितृमातृबान्धवे मृते भागिनेयादिः पक्षिणीं रात्रिमशुचिर्भवतीत्यर्थः। बान्धवाः स्मृत्यन्तरे दर्शिताः—

आत्मपितृष्वसुः पुत्रा आत्ममातृष्वसुस्सुताः।
आत्ममातुलपुत्राश्च विज्ञेया आत्मबान्धवाः॥
पितुः पितृष्वसुः पुत्राः पितुर्मातृष्वसुस्सुताः।
पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः॥
मातुः पितृष्वसुः पुत्रा मातुर्मातृष्वसुस्सुताः।
मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः॥

वृद्धमनुरपि—

श्वशुरयोर्भगिन्यां च मातुलान्यां च मातुले।
पितुस्स्वसरि मातुश्च पक्षिणीं क्षपयेन्निशाम्॥
मातुले श्वशुरे मित्रे गुरौ गुर्वङ्गनासु च।
आशौचं पक्षिणीं रात्रिं मृता मातामही यदि॥

इति। श्वशुरयोः स्वल्पोपकारिणोः भगिन्यां मातृहितकारिण्यां मातुलान्यां मातुलपत्न्यां अल्पोपकारिणि मातुले च पितृष्वसरि मातृष्वसरि चाल्पोपकारिण्यां पक्षिणीं निशां क्षपयेदिति पूर्वश्लोकार्थः। द्वितीयश्लोके पुनर्मातुलग्रहणं श्वशुरविशेषणार्थम्। यो मातुलो भागिनेयाय दुहितरं दत्वा श्वशुरस्संजातस्तस्मिन् श्वशुर इत्यर्थः। मित्रे मित्रविधानेन स्वीकृते। गुरौ शास्त्रोपदेशके,

अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः।
तमपीह गुरुं विद्याच्छ्रुतोपक्रियया तया॥

इति शास्त्रोपदेशकेऽपि गुरुशब्दस्मरणात्। यत्तु जाबालिना 'गोत्रजानामहः स्मृतम्' इत्युक्त्वोक्तं—

मातृबन्धौ गुरौ मित्रे मण्डलाधिपतौ तथा।

इति, मातृबन्धुः मातुलः। यत्तु याज्ञवल्क्येन—

अहस्त्वदत्तकन्यासु बाले त्वकृतचूडके।

इत्युक्त्वोक्तं—

गुर्वन्तेवास्यनूचानमातुलश्रोत्रियेषु च।
अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु च॥

इति, यच्च विष्णुनोक्तं–'आचार्यपत्नीगुरूपाध्यायमातुलश्वशुरश्वश्रूसहाध्यायिशिष्येष्वेकरात्रेण शुद्धिः' इति, तत्र जाबाल्युक्तगुरुशब्दस्य याज्ञवल्क्योक्तगुरुशब्दस्य च विष्णूक्तोपाध्यायशब्देन समानार्थत्वमवगन्तव्यम्। अत एवाश्वलायनेन 'गुरौ चासपिण्डे त्रिरात्रम्' इत्युक्त्वोक्तं–'इतरेष्वाचार्येष्वेकाहम्' इति। 'उपनीय

तु यश्शिष्यं वेदमध्यापयेत्' इत्यादिना निरूपितादाचार्यादितरेष्वाचार्येष्वित्यर्थः। मातुल एकरात्रमनुपकारकमातुलविषयम्। पुत्र एकरात्रं यथाकथंचित्स्वीकृतपुत्रविषयम्। शिष्य एकरात्रमितराचार्यविषयम्। श्रोत्रिय एकरात्रं समानग्रामश्रोत्रियविषयं, 'एकाहं सब्रह्मचारिणि समानग्रामिणि च श्रोत्रिये' इत्याश्वलायनस्मरणात्। अनौरसेषु पुत्रेष्वन्यगतासु भार्यास्वेकरात्रमनौरसादीनामसंनिधानविषयम्। श्वशुरयोरेकरात्रविधानं जामात्रनुपकारकश्वशुरविषयम्। सहाध्यायिन्येकरात्रं द्वादशाब्दकालादन्यतरकालसहाध्यायिविषयम्। अन्यथा जाबालिवचनात्पूर्वोक्तत्रिरात्रविधायकवचनैस्सह विरोधस्स्यात्। यत्तु मनुनोक्तं—

प्रेते राजनि संज्योतिर्यस्य स्याद्विषये स्थितः।

इति। ज्योतिषा सह वर्तत इति सज्योतिः। अह्नि चेन्मरणं यावत्सूर्यदर्शनं तावदाशौचं, रात्रौ चेत् यावन्नक्षत्रदर्शनं तावदाशौचमित्यर्थः। तदेतत् स्वल्पदेशाधिपतिविषयं, महामण्डलाधिपतिविषये त्वेकरात्रविधानात्। अत एव स्वल्पदेशाधिपतौ सज्योतिरनध्यायमाह वृद्धमनुः—

ग्रामेश्वरे कुलपतौ श्रोत्रिये च तपस्विनि।
शिष्ये पञ्चत्वमापन्ने शुचिर्नक्षत्रदर्शनात्॥

इति। कुलपतिः समूहपतिः। असंनिहितश्रोत्रियादिविषयमेतत्। यत्तु मनुनोक्तं—

भगिन्यां संस्थितायां तु भ्रातर्यपिच संस्थिते ।
मित्रे जामातरि प्रेते दौहित्रे भगिनीसुते ॥
स्यालके तत्सुते चैव सद्यस्स्नानेन शुध्यति ॥

इति, भगिन्यां विवाहसंस्कृतायां मृतायां सोदरभ्राता सद्यस्स्नानेन शुध्यति न मातापितृवत्त्रिरात्रेणेत्यर्थः । भ्रातरि सोदरे च उपनयनसंस्कृते मृते भगिनी सद्यस्स्नानेन शुध्यतीति । मित्रे चिरकालानुबन्धशून्ये जामातरि प्रेते श्वशुरौ सद्यस्स्नानेन शुध्यतः । स्यालकः पत्नीभ्राता तस्मिंस्तत्सुते वा मृते सद्यस्स्नानेन शुध्यतीति । दौहित्रे भगिनीसुते च सद्यश्शौचमसंनिहितदौहित्रादिविषयम् । अतो न दौहित्रादावुक्तत्रिरात्रविरोधः । उक्तं समानोदकाद्याशौचमत्र त्रिष्वपि वर्णेषु समानं, सपिण्डाशौचवदत्र विशेषोल्लेखनाविशेषस्मरणात् अविशेषज्ञापकस्य वाच्यत्वाच्च । तथा हि आशौचप्रकरणादौ--

आशौचमसपिण्डेषु प्रोषिते श्रोत्रिये गुरौ ।
अतीते नृपतौ तद्वदृतुकाले च योषिताम् ॥
अप्रजासु तथा स्त्रीषु मातुले बान्धवेषु च ।
एवमादावशौचस्य चतुर्णामपि तुल्यता ॥
वर्णानामित्येव सिद्धे चतुर्णामपि कीर्तनात् ॥

इति । अप्रजासु गर्भस्रावादिना नष्टप्रजासु ॥

इति स्मृतिचन्द्रिकायामन्यानि शावाशौचविषयाणि.

---

अथासन्निहितदेशभवकालभवसपिण्डादिजननमरणाशौचविषयाणि वचनानि लिख्यन्ते। अत्र मनुः—

सन्निधावेव यः कल्पश्शावाशौचस्य कीर्तितः।
असन्निधाने स ज्ञेयो विधिस्संबन्धिबान्धवैः॥

संबन्धिनो व्यवहितसंबन्धिनः समानोदका इति यावत्। बान्धवाः प्रत्यासन्नसंबन्धिनः सपिण्डा इति यावत्। कल्पो विधिः। वाक्यार्थस्तु—शावाशौचस्य यो विधिः 'दशाहं शावमाशौचं सपिण्डेषु विधीयते, त्र्यहात्तूदकदायिनः' इत्यादिवचनैस्सापिण्डसमानोदकानां कीर्तितः,स एव विधिः सन्निहितदेशभवसपिण्डादिमरणे ज्ञेयः। अयं च वक्ष्यमाणशावाशौचस्य विधिरसंनिहितदेशभवमरणविषये संबन्धिबान्धवैः ज्ञेय इति। शावाशौचस्येति जन्माशौचस्यापि प्रदर्शनार्थम्।

जननेऽप्येवमेव स्यान्निपुणां शुद्धिमिच्छताम्।
जन्मन्येकोदकानां तु त्रिरात्राच्छुद्धिरिष्यते॥

इति वचनेन सपिण्डसमानोदकानां कीर्तितो यस्स एष जन्माशौचविधिः सन्निहितदेशभवजननविषयो ज्ञेयः। असन्निहितदेशभवजननविषये वक्ष्यमाणो विधिर्ज्ञेयः। ततस्तावदसन्निहितदेशभवसपिण्डमरणे विशेषं दर्शयति स एव—

विगतं तु विदेशस्थं शृणुयाद्यो ह्यनिर्दशम्।
यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत्॥

इति। विगतं मृतम्। विदेशस्थं असन्निहितदेशस्थम्।

अनिर्दशं अनिर्गतदशाहम्। एतदनिर्गतद्वादशाहादेरुपलक्षणार्थं, वाक्यार्थस्तु—असन्निहितदेशमृतं सपिण्डं यः स्वजात्युक्तकालाशौचमध्ये शृणुयात् सः स्वाशौचकालस्य यच्छेषं यावच्छेषं तावदेव तावत्कालमेव अशुचिर्भवेदिति। असन्निहितदेशप्रसवेऽपि समानमेतत्। तथाच बृहस्पतिः—

अन्यदेशमृतं ज्ञातिं श्रुत्वा पुत्रस्य जन्म वा।
अनिर्गतदशाहं तु शेषाहोभिर्विशुध्यति॥

इति। अन्यदेशमृतं असन्निहितदेशमृतं ज्ञातिं, पुत्रस्य जन्म ज्ञातेरपत्यस्य वा जन्म। शङ्खोपि—

देशान्तरगतं श्रुत्वा कल्याणं मरणं तथा।
यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत्॥

इति। देशान्तरगतं असन्निहितदेशभवं कल्याणं अपत्यजन्मेति यावत्। असन्निहितदेशभवमरणे तु विशेषमाह पारस्करः—'प्रोषितसंस्थे यावच्छ्रवणप्रभृति कृतोदकाः कालशेषमासीरन्' इति। कृतोदकाः प्रेताय दत्तोदकाः। मरणाशौचदशायामनुष्ठेयस्याधश्शयनादेरुपलक्षणार्थमेतत्। असन्निहितदेशभवसमानोदकमरणे त्वाह मनुः—

बाले देशान्तरस्थे तु पृथक्पिण्डे च संस्थिते।
सवासा जलमाप्लुत्य सद्य एव विशुध्यति॥

इति। पृथक्पिण्डे असपिण्डे समानोदक इति यावत्। देशान्तरस्थे असन्निहितदेशस्थे। देशान्तरस्थितत्वेन बालः अ-

सपिण्डो विशेष्यते । वाक्यार्थस्तु—असन्निहितदेशस्थे बाले समानोदके वा मृते मरणवार्ताश्रवणानन्तरमेव तत्क्षणे सचेलस्नानेन विशुध्यतीति । एवं समानोदक जन्मन्यपि विशुद्धिः । तथाच बृहस्पतिः—

सन्निधानेऽशौचमिति शावं संपरिकीर्तितम् ।
दूरदेशे मृते जाते सद्यश्शौचमुदाहृतम् ॥

अत्रापि शावाशौचग्रहणं सूतकस्य प्रदर्शनार्थम् । अत एवा सन्निधाने वक्ष्यमाणाशौचविधिरत्र प्रदर्शितः । एवं मरणे जन्मनि च विहितं समानोदकानां सद्यश्शौचं सन्निधाने विहितत्रिरात्रादिकालविशेषाभावे द्रष्टव्यम् । तत्सद्भावे तच्छेषशुद्धिरप्यवगन्तव्या, 'यच्छेषं दशरात्रस्य' इति शङ्खनोक्तस्य सन्निहितसमानोदकजन्ममरणाशौचकालविशेषोपलक्षणार्थत्वात्, 'प्रोषिते कालशेषस्स्यात्' इति याज्ञवल्क्यस्मरणाच्च। यदा दशाहादूर्ध्वमसन्निहितदेशभवजन्मश्रवणं तदाऽऽह देवलः—

नाशुच्यं स्वल्पमप्यस्ति व्यतीतेषु दिनेष्वपि।

इति । व्यतीतेषु दिनेषु प्रसवस्याशुच्यं स्वल्पमपि नास्तीत्यर्थः। यत्पुनर्मनुनोक्तं—

निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च ।
सवासा जलमाप्लुत्य शुद्धो भवति मानवः ॥

इति । पुत्रस्य जन्म चेत्यनेन ज्ञातिपुत्रस्येति न्यायेनावगम्यते,

पुत्रशब्दस्य संबन्धिविशेषपरत्वात् । एवंचायं वाक्यार्थः— निर्गतदशाहं ज्ञातिमरणं ज्ञातेरपत्यस्य जन्म वा श्रुत्वा श्रवणानन्तरक्षणे सचेलस्नानेनासापिण्डस्य शुद्धिरिति । सन्निहितदेशगुणवतां तु यदाशौचं—

एकाहाच्छुध्यते विप्रो योऽग्निवेदसमन्वितः ।
हीने हीनतरे चैव त्र्यहश्चतुरहस्तथा ॥

इत्यादिवचनैरुक्तं तस्मिन्नाशौचेऽतिक्रान्ते पुर्वोक्त–'निर्दशं ज्ञातिमरणं' इत्यादिवचनोक्तं द्रष्टव्यम् । निर्दशं ज्ञातिमरणमित्यत्र दशाहशब्दात् यथैकाहत्र्यहचतुरहादौ जन्ममरणवार्ताश्रवणे शुद्धिः तथाऽत्रापि कालविशेषेण शुद्धिः । 'यच्छेषं दशरात्रस्य' इति वचनस्थदशरात्रग्रहणं दशरात्रस्थानापन्नकालान्तरस्याप्युपलक्षणार्थम् । अत एव संग्रहकारेणोक्तं—

यस्य वर्णस्य यः कालो विहितो गुणवत्तया ।
श्रुत्वा तदन्तरे चादौ तच्छेषेण विशुध्यति ॥

इति । निर्गुणब्राह्मणादीनामुक्तस्य दशरात्रादिशावाशौचस्यातिक्रमादूर्ध्वं सन्निहितदेशे सपिण्डस्य मरणवार्ताश्रवणे त्वाह जाबालिः—

अतीते सूतके स्वेस्वे त्रिरात्रं स्यादशौचकम् ।
संवत्सरे व्यतीते तु सद्यश्शौचं विधीयते ॥

इति । यद्यपि सूतकशब्दः प्रसवाशौचे मुख्यः; तथाऽप्यप्राय-

त्यसाम्यादत्र मृतके वर्तते, सूतकेष्वतीताशौचानां सपिण्डानां त्रिरात्रविध्यसंभवात् । मनुनाऽप्युक्तं—

अतिक्रान्ते दशाहे तु त्रिरात्रमशुचिर्भवेत् ।
संवत्सरे व्यतीते तु सद्य एव विशुध्यति ॥

इति । तस्माद्वचनात्प्राचीनवचनोक्तं—'विगतं तु विदेशस्थं शृणुयात्' इत्येतावदिहानुवर्तते । ततश्चायमर्थः—स्वजात्युक्तकालाशौचादूर्ध्वं प्रथमसंवत्सरादर्वाक्सन्निहितदेशस्थं मृतं सपिण्डं यः शृणुयात् असौ त्रिरात्रमशुचिर्भवेत् । अतीते त्वाशौचे प्रथमसंवत्सरेऽतीते यश्शृणुयात्तदा स्नानेन शुध्यतीति । तथाच शङ्खः—

अतीते दशरात्रे तु त्रिरात्रमशुचिर्भवेत् ।
तथा संवत्सरेऽतीते स्नानेनैव विशुध्यति ॥

इति । अस्मिन्विषये गोतमोऽप्याह—'श्रुत्वा चोर्ध्वं दशम्याः' इति । प्रकृतं त्रिरात्रमत्र श्रुत्वा चेति चशब्देनानुकृष्यते । पक्षिणीमुपरितनसूत्रागतामत्र केचित् योजयन्ति तदयुक्तं, चशब्दानर्थक्यप्रसङ्गात् पूर्वोक्तानेकवचनविरोधप्रसङ्गाच्च ।

आशौचे समतीते तु बन्धुश्च श्रूयते मृतः ।
तत्र त्रिरात्रमाशौचं भवेत्संवत्सरादधः ॥

इति देवलवचनविरोधापत्तेश्च । स्वेष्वाशौचाहस्स्वतीतेषु प्रथमसंवत्सरमध्ये यद्यसन्निहितदेशमृतः सपिण्डः श्रूयते तत्र त्रिरा-

त्रमाशौचं भवेदित्यर्थः। प्रथमसंवत्सरादूर्ध्वं मरणश्रवणेऽप्याह स एव—

ऊर्ध्वं संवत्सरादाद्यान्मृतश्चेच्छ्रूयते स्वकैः।
भवेदेकाहमेव............................... ॥

इति। असान्निहितदेशमृतो यदि प्रथमसंवत्सरादूर्ध्वं सपिण्डैः श्रुतः तदा तेषामेकाहमाशौचं पञ्चमात्प्राचीनसपिण्डविषयम्।

संवत्सरे व्यतीते तु सद्यश्शौचं विधीयते।

इति जाबालिनोक्तं सद्यश्शौचं पञ्चमादिसापिण्डविषयम्। एवमेवात्र विषयव्यवस्था न्याय्या। तथा हि—पञ्चमात्प्राचीनेषु पिण्डदाने देवतात्वेन त्रयाणां कर्तृत्वेन चेतरस्य साक्षात्पिण्डदानक्रियायोगात्सापिण्ड्यं, पञ्चमादिषु पिण्डदातृहस्तलग्नलेपदाने देवतात्वेन च पिण्डदानक्रियायोगाच्च। एवं च यत्र-यत्र साक्षात्सापिण्ड्यं तत्रैकरात्रं, यत्र परंपरया तत्र सद्यश्शौचमिति पूर्वोक्तसद्यश्शौचविधायकवचनानां न विरोधः। तस्मात्संवत्सरात्प्रागभिहितं त्रिरात्रं अत ऊर्ध्वमभिहितं सद्यश्शौचमेकरात्रं च देशान्तरलक्षणरहितसन्निहितदेशविषये द्रष्टव्यम्। देशान्तरलक्षणयुक्तदेशान्तरे मृतविषये आह वसिष्ठः—'देशान्तरस्थे मृते ऊर्ध्वं दशाहाच्छुत्वैकरात्रमाशौचम्' इति। प्रथमसंवत्सरानन्तरमेतत्। अत एव विष्णुवसिष्ठौ—'व्यतीते त्वाशौचे संवत्सरान्तस्त्वेकरात्रेण ततः परं स्नानेन' इति। एवं च यत्पैठीनसिनोक्तं—

देशान्तरमृतिं श्रुत्वा क्लीबे वैखानसे यतौ ।
सद्यश्शौचं.................................... ॥

इति तत् देशान्तरमृतं प्रथमसंवत्सरात्परतः श्रुत्वेत्यध्याहृतेन संगमयितव्यम् । अतो न पूर्वोक्तवासिष्ठादिवचनविरोधः। किं पुनर्देशान्तरलक्षणमित्यपेक्षिते वृद्धमनुः—

महानद्यन्तरं यत्र गिरिर्वा व्यवधायकः ।
वाचो यत्र विभिद्यन्ते तद्देशान्तरमुच्यते ॥

इति । अयमर्थः—महानद्योर्यदन्तरं मध्ये गिरिर्वा देशयोर्व्यवधायको यत्रासीत् अपभ्रंशादिभाषाभेदो वा यत्र विद्यते तद्देशान्तरमिति व्यपदिश्यत इति । काः पुनर्महानद्य इत्यपेक्षिते नरसिंहपुराणे—'गङ्गा यमुना गोदावरी कृष्णवेणी तुङ्गभद्रा कावेरीसिता महानद्यः' इति । वामनपुराणे—

गोदावरी भीमरथी कृष्णवेणी सरस्वती ।
[1]तुङ्गभद्रा सुप्रयोगा सिंहा कावेरिरेवती ॥
दुग्धोदा नळिनी रेवा निशिता कलभस्वना ।
महा अपि महानद्यस्सह्यमूलाद्रिनिर्गताः ॥

'महा अपि महानद्यः' इत्ययमर्थः—परिगणिताभ्योऽन्या याः काश्चिद्विस्तारवत्यः ता अपि महानद्य इति । एवं च गङ्गा·

[1] तुङ्गभद्रा प्रयागश्च सिंहा कावेरिरेविका ।
दोग्धा धनतिला रेवा वारिशीता वलस्वना ॥
एताः अपि.................... इति पाठान्तरम् ।

यमुनयोर्यदन्तरं गङ्गाया उत्तरदेशापेक्षया यमुनाया दक्षिणदेशश्च देशान्तरं भवतीत्यवगन्तव्यम् । एवं गोदावर्यादिमहानदीनामन्तराण्यपि बहिष्ठदेशानपेक्ष्य देशान्तराणीति ज्ञातव्यम् । न च वाच्यं महानद्या दक्षिणकूलमुत्तरकूलं च परस्परापेक्षया देशान्तरं भवतीति; तयोस्सामीप्यादेवेति । यथोक्तं बृहन्मनुना—

देशनामनदीभेदो निकटे यत्र वै भवेत् ।
तेन देशान्तरं प्रोक्तं स्वयमेव स्वयम्भुवा ॥

देशनामानि अङ्गवङ्गकळिङ्गादीनि । नदीभेदो नदीविशेषः महानदीति यावत् । नदीभेदग्रहणं पूर्वोक्तपर्वतादीनामप्युपलक्षणम् । वाक्यार्थस्तु—अङ्गवङ्गादिनामान्तरं महानद्यादिकं च निकटे यत्र भवतः तत्रापि देशान्तरलक्षणेऽपि सामान्यत्वादिना स्वयम्भुवा देशान्तरं प्रोक्तमिति । एवमत्यन्तसंनिहितस्यापि देशान्तरत्वे 'देशान्तरस्थे प्रेते' इत्यादिवसिष्ठवचनेन नात्रैकरात्रं भवितुमर्हति, असन्निहितेऽपि त्रिरात्रं सन्निहिते त्वेकरात्रमिति विपरीतम् । अतो मरणव्यवधानतारतम्यापेक्षया यद्देवलेनोक्तं—

आ त्रिपक्षात्त्रिरात्रं स्यात् षण्मासात्पक्षिणी तथा ।
अहस्तु नवमादर्वागूर्ध्वं स्नानेन शुध्यति ॥

इति, तत् निकटदेशान्तरे द्रष्टव्यम् । अत्र पूर्वपक्षानुसारेण

व्यवस्थाऽवगन्तव्या । आ त्रिपक्षात् दशरात्रादिस्वजात्युक्ताशौचकालादूर्ध्वमिति शेषः । बृहस्पतिस्तु योजनसंख्याविशेषेण देशान्तरमाह—

देशान्तरं वदन्त्येके षष्टियोजनमायतम् ।
चत्वारिंशद्वदन्त्यन्ये त्रिंशदन्ये तथैव च ॥

इति । अस्मिंस्तु पक्षे जाबाल्याद्युक्तं सन्निहितदेशविषयत्रिरात्राशौचं त्रिंशद्योजनादर्वाक्तनविषये द्रष्टव्यम् । यत्र त्रिंशद्योजनादर्वागपि महानद्यादिव्यवधायकसद्भावः तत्र निकटदेशान्तरविषये 'आ त्रिपक्षात्त्रिरात्रं स्यात्' इति वचनोक्तं द्रष्टव्यम् । त्रिंशद्योजनात्परतोमृतविषये महानद्यादिव्यवधायकालाभेऽपि 'देशान्तरस्थे प्रेते' इत्यादिवसिष्ठोक्तमेवात्र 'आ संवत्सरात्तत ऊर्ध्वं ततः परं स्नानेन' इति विष्णुनाऽप्युक्तं सद्यश्शौचमेवेत्यवगन्तव्यम् । एवमुक्तमतिक्रान्ताशौचं मातापितृव्यतिरिक्तसापिण्डविषयम् । मातापितृविषये तु सन्निहितदेशे निकटदेशान्तरे च दशरात्रमेव । तथाच पैठीनसिः—

पितरौ चेन्मृतौ स्यातां दूरस्थोऽपि हि पुत्रकः ।
श्रुत्वा तद्दिनमारभ्य दशाहं सूतकी भवेत् ॥

इति । दूरस्थशब्देनात्र सन्निहितस्वदेशस्थो दूरदेशान्तरस्थश्चोक्तः । अपिशब्देन निकटदेशान्तरस्थ उक्त इति मन्तव्यम् । सूतकी भवेत् मरणाशौची भवेदित्यर्थः । अत्र किंचिद्व्याख्यकारेणोक्तं—श्रुत्वेत्यत्र तत ऊर्ध्वमिति शेषो द्रष्टव्यः ।

ततश्च दशरात्रमध्ये तु वार्ताश्रवणे पुत्रस्यापि तच्छेषेणैव सपिण्डान्तरवच्छुद्धिरिति। यत्तु दक्षेणोक्तं—

महागुरुनिपाते तु आर्द्रवस्त्रोपवासिना।
अतीतेऽब्देऽपि कर्तव्यं प्रेतकार्यं यथाविधि॥

इति। आर्द्रवस्त्रोपवासिना आर्द्रवस्त्रोपेतेन। अतीतेऽब्देऽपि अत्यन्तचिरकालादूर्ध्वम्। प्रेतकार्यं आशौचदिनेषूक्तोदकपिण्डलक्षणं विवक्षितम्। तदेव तत्पुनस्संस्कारकर्तुः पुत्रस्य तदानीं संस्करणासामर्थ्येऽप्याशौचानियमेषु समर्थतया गृहीताशौचस्य द्रष्टव्यम्। यत्तु याज्ञवल्क्येन संवत्सरेऽतीते प्रेतकार्यरहितमुदकदानसहितं सद्यश्शौचमुक्तं—'वत्सरे पूर्णे प्रेतं दत्वोदकं शुचिः' इति, तत् पुत्रव्यतिरिक्तसपिण्डविषयम्। महागुरुनिपात इत्यत्र महागुरुशब्देन पिता माता चोच्यते, न पुनः पितैव,

द्वौ गुरू पुरुषस्येह पिता माता च धर्मतः।
तयोर्गुरुः पिता तावन्माता गुरुतरा स्मृता॥

इति मातुरपि गौरवातिशयस्मरणात्। अत एव त्रिरात्रविधायकवचनान्तरेण मातृपर्युदासो दक्षेणैव कृतः—

पितृपत्न्यामतीतायां मातृवर्जं द्विजोत्तमः।
संवत्सरेऽप्यतीतेऽपि त्रिरात्रमशुचिर्भवेत्॥

इति। स्मृत्यन्तरं—

अतिक्रान्ते दशाहे तु पश्चाज्जानाति चेद्गृही।

त्रिरात्रं सूतकं तस्य न तद्द्रव्यस्य कस्यचित् ॥

इति । अत्र व्याघ्रः—

तुल्यं वयसि सर्वेषामतिक्रान्ते तथैव च ।
उपनीते तु कर्तव्यं तस्मिन्नेवातिकालजम् ॥

वयसि षण्मासादिरूपे यत्सद्यश्शौचादि विहितं तत्सर्वेषां ब्राह्मणादिवर्णानां तुल्यमविशिष्टम् । उपनीते तु सन्निहितदेशे मृते दश द्वादश पञ्चदश त्रिंशद्दिनाशौचं ब्राह्मणादिवर्णानां, तस्मिन्नेव उपनीतोपरम एव अतिक्रान्ताशौचं नानुपनीतोपरम इति । यत्तु स्मृत्यर्थसारे क्वचिद्ब्राह्मणादिवर्णानामतुल्यतयोक्तं मातापितृमरणे दशाहादूर्ध्वं दूरदेशेऽपि संवत्सरादूर्ध्वमपि पुत्रः श्रुत्वा श्रवणदिनमारभ्य दशाहादिकं यथावर्णमाशौचं कुर्यादिति; तच्चिन्त्यं, 'तुल्यं वयसि सर्वेषाम्' इति व्याघ्रवचनविरोधाच्च । यदपि तेनैव मातापितृविषय उक्तः, विशेषस्य विषयान्तरेऽपि समत्वमुक्तं 'स्त्रीपुंसयोः परस्परं चैवं सर्ववर्णोक्तमवर्णसपत्नीषु चैवम्' इति, तदपि चिन्त्यं, स्त्रीपुरुषादिविषये विशेषोपदेशकस्य प्रख्यातपुरुषग्रन्थप्रदीपवर्णादिष्वदर्शनात् ॥

इति स्मृतिचन्द्रिकायामसन्निहितदेशकालभवसपिण्डादिजननमरणाशौचविषयाणि ॥

# अथानेकाशौचसन्निपातविषयाणि.

---

तत्र देवलः—

अघानां यौगपद्ये तु शुद्धिर्ज्ञेया गरीयसा ।

इति । अघानामिति सामान्यग्रहणे गर्भस्रावपातप्रसवेषूक्तानामाशौचानां वयोऽवस्थाप्रयुक्तमरणाशौचानामुपनयनोर्ध्वं मरणाशौचानां च ग्रहणम् । अघानामाशौचानां मध्ये कयोश्चिद्यौगपद्येन सन्निपाते गरीयसेतरस्य शुद्धिर्ज्ञेयेत्यर्थः । दीर्घकालापनोद्याशौचं गरीयः, अल्पकालापनोद्याशौचमगरीय इति । अनेन हेतुना प्रथमद्वितीयापेक्षया तृतीयं गरीयः चतुर्थादिष्वप्युत्तरोत्तरं पूर्वपूर्वापेक्षया गरीय इत्यवगन्तव्यम् । समानकुलजननमरणाशौचयोर्मध्ये कालाधिक्येनाप्युत्तरस्य गरीयस्त्वायोगात्किं तयोर्गरीय इत्यपेक्षिते तेनैवोक्तं—

मरणोत्पत्तियोगे तु गरीयो मरणं भवेत् ।

इति । अनेन कालतस्समानयोर्जननमरणयोश्च मिथो गुरुलघुभावो नास्तीत्यर्थादुक्तम् । कथं पुनर्जननाशौचान्मरणाशौचस्य गरीयस्त्वम्? अत्रोच्यते—पापविशेषात्मकमाशौचं प्रथमप्रकरणे प्रतिपादितम् । पापविशेषाणां च महत्त्वाल्पत्ववशाद्गौरवं लाघवं च भवतीति दण्डधर्मशास्त्रे प्रतिपादितम् । एवमत्रापि कारणमहत्त्वान्मरणाशौचस्य स्वरूपतो गुरुत्वं, कारणाल्पत्वात्सूत्याशौचस्य स्वरूपतोऽल्पत्वमवगन्तव्यम् । कथं पुनर्मरणा-

शौचस्य कारणमहत्त्वं, कथं वा जननाशौचस्य कारणाल्पत्व-मित्यपेक्षिते हारीतः—'प्रेताभिभूतत्वाच्छावाशौचं जाते वृद्धि-योगाद्व्याक्तत्वात्केनेति. मीमांसन्ते बालाः कुलानुगतिच्छेदात्क्ले-शभूयस्त्वाच्च कुलस्याशौचं भवति' इति । अस्यायमर्थः—मरणाशौचकारणप्रेतसंपर्कबाहुल्याच्छावाशौचं वाऽघं कुलस्य बहु भवति, शिशोः क्लेशबाहुल्योपपादकनाभिच्छेदे शिशुसहि-तार्थमप्रतिषिद्धमनुमतं भवतीति न्यायेन कथंचिदनुमतिद्वारक-र्तृत्वमस्तीति जनने कुलस्याशौचं कुलस्याघं भवतीति । य-तोऽघस्वरूपाशौचं नाभिच्छेदानुमतिनिमित्तं स्वत एव कर्मा-नधिकारलक्षणाशौचवज्जननानन्तरमेव न भवति, किंतु नाभि-च्छेदादूर्ध्वमेव । तथा च जैमिनिः—

यावन्न च्छिद्यते नाळं तावन्नाप्नोति सूतकम् ।
छिन्ने नाळे ततः पश्चात्सूतकं तु विधीयते ॥

इति । गरीयस्त्वात्समकालयोश्शावसूत्याशौचयोः सन्निपाते सूत्या कदाचिच्छावस्य शुद्धिः, तस्याः शावापेक्षया दीर्घ-कालत्वात् । अत एवाङ्गिराः—

सूतके मृतकं वै स्यान्मृतके त्वथ सूतकम् ।
तदाऽधिकृत्य मृतकं शौचं कुर्यान्न सूतकम् ॥

एतदेव षट्त्रिंशन्मतेऽप्युक्तं—

शावाशौचे समुत्पन्ने सूतकं तु यदा भवेत् ।
शावेन शुध्यते सूतिर्न सूतिश्शावशोधिनी ॥

इति । सूताशौचमध्ये शावाशौचे समुत्पन्नेऽपि न सूतिः शावशोधिनीत्यर्थः। तेन स्वकालेनैवास्मिन्विषये शावाशौचशुद्धिः। तदाहाङ्गिराः—

अनिर्दशाहे जनने पश्चात्स्यान्मरणं यदि ।

प्रेतमुद्दिश्य कर्तव्यं तत्राशौचं स्वबन्धुभिः ॥

जननाशौचमध्ये तत्समानकालं यदा मरणाशौचं भवति तदा मरणदिनमारभ्य प्रेतसंपर्कनिमित्तमाशौचं स्वकालापगमपर्यन्तं बन्धुभिः कर्तव्यमित्यर्थः । यदा तु समानकालयोस्सन्निपातः तदा द्वयोस्तुल्यत्वेऽपि गुरुत्वेन प्राथम्यं ग्राह्यमित्याह शङ्खः—

समानाशौचसंपाते प्रथमेन समापयेत् ।

इति । जात्या कालतस्समानाशौचयोस्सन्निपाते प्रथमाशौचसमाप्तिकाल एव द्वितीयाशौचमपि समापयेदित्यर्थः । विष्णुरपि—'जननाशौचमध्ये यद्यपरं जननं स्यात्तत्र पूर्वाशौचव्यपगमे शुद्धिः। मरणाशौचमध्ये ज्ञातिमरणेऽप्येवम्' इति पूर्वाशौचकालशेषस्योपरमे परशावादपि शुद्धिर्भवतीत्यर्थः । यदाह मनुः—

अन्तर्दशाहे स्यातां चेत्पुनर्मरणजन्मनी ।

तावत्स्यादशुचिर्विप्रो यावत्तत्स्यादनिर्दशम् ॥

इति । अनया वचोभङ्ग्या पूर्वाशौचकालशेषेणैव पराशौचादपि शुद्धिर्भवतीत्युक्तं भवति । याज्ञवल्क्येन सुस्पष्टमुक्तं—

अन्तरा जन्ममरणे शेषाहोभिर्विशुध्यति ।

इति । पूर्वाशौचस्य पराशौचापेक्षया दीर्घकालस्य समकालस्य वा शेषैरहोभिरन्तरापतितमाशौचं विशुध्यतीत्यर्थः । यत्पुनर्मध्यपतितमाशौचं पूर्वापेक्षया दीर्घकालं न तत्र पूर्वाशौचशेषाहोभिर्विशुद्धिः, पूर्वाशौचस्य स्वल्पकालतया लघुत्वात् । किं त्वल्पकालेनैव शुद्धिः । तथाच शङ्खः—

असमानं द्वितीयेन धर्मराजवचो यथा ।

इति । द्वितीयमाशौचं प्रथमाशौचकालापेक्षया दीर्घकालत्वेनासमानं द्वितीयेन द्वितीयाशौचकालेन गच्छतीति यावत् । यमोऽपि—

अघवृद्धिमदाशौचं पश्चिमेन समापयेत् ।
यथा त्रिरात्रे प्रक्रान्ते दशाहं प्रविशेद्यदि ॥
आशौचं पुनरागच्छेत्तत्समाप्य विशुध्यति ॥

इति । द्वितियमाशौचं प्रथमाशौचानुवृत्तिकालापेक्षया दीर्घकालानुवर्तनेन वृद्धिमत् पश्चिमेन समापयेदित्यर्थः । अमुमेवार्थमुदाहरणपूर्वकं स्पष्टयति—यथेत्यादिना । अस्यायमर्थः—त्रिरात्रजननाशौचे मरणाशौचे वा प्रक्रान्ते दशाहं जननाशौचं मरणाशौचं वा यदि प्रविशेत् दशाहाशौचं त्रिरात्रापेक्षया दीर्घकालं जननाशौचं मरणाशौचं वा पुनरागच्छेत् अत्र पश्चिमाशौचसमाप्त्या शुद्धिः । तथाऽन्यत्रापि प्रक्रान्तैकरात्राशौचमध्ये प्रविष्टमघवृद्धिमदाशौचं स्वकालेनैव शुध्यतीति । तथाचोशनसोक्तं—

अल्पाशौचस्य मध्ये तु दीर्घाशौचं भवेद्यदि ।

न पूर्वेण विशुद्धिस्स्यात्स्वकालेनैव शुध्यति ॥

इति । देवलेन तु प्रथमाशौचानुवृत्तिकालापेक्षया दीर्घकालानुवर्तनेन वृद्धिमदाशौचं स्वकालेन विशुध्यतीति वचनभङ्गयोक्तम् । तस्य क्वचिदपवादोऽप्युक्तः—

परतः परतोऽशुद्धिरघवृद्धौ विधीयते ।

स्याच्चेत्पञ्चतमादह्नः पूर्वेणापि विशिष्यते ॥

इति । परतः अघवृद्धौ परभूतस्य पूर्वसजातीयस्य विजातीयस्य वा दिनाधिक्येन वृद्धौ परतोऽशुद्धिः पराशौचस्य यावान् कालस्तस्य सर्वस्यापगमपर्यन्तमशुद्धिः; तत ऊर्ध्वं शुद्धिरिति पूर्वार्धस्यार्थः । 'स्याच्चेत्पञ्चतमादह्नः' इत्याद्यपवादादेव उत्तरार्धस्यायमर्थः—पूर्वाशौचं पराशौचापेक्षया स्वल्पकालमपि यदि पञ्चतमादह्नः पञ्चमदिनात्परतोपि कतिपयदिनोपेतं स्यात्तदा पूर्वेण पूर्वाशौचकालशेषेण पराशौचस्यापि शुद्धिः विशिष्यते विधीयत इति । एवमुक्तं भवति—उत्तराशौचस्य दीर्घकालत्वेऽपि यदि पूर्वाशौचमुत्तराशौचकालार्धादधिककालं स्यात्तदा पूर्वेणैवोत्तरस्यापि शुद्धिर्भवति । अत्रोदाहरणं—

अधस्तान्नवमान्मासाच्छुद्धिस्स्यात्प्रसवे तदा ।

मृते जीवेऽपि वा तस्मिन्नहोभिर्माससंख्यया ॥

इति वचनेन सप्तममासप्रसवे सप्तरात्रं, अष्टममासप्रसवेऽष्टरात्रमुक्तम् । नवममासादिप्रसवे तज्जननमरणयोर्दशाहमाशौचमिति

नवमेनैव दशरात्रमुक्तम् । तत्र यदा सप्तरात्राशौचमध्ये दश-रात्राशौचं तदाऽर्धाधिकत्वात्पूर्वाशौचशेषेणोत्तराशौचस्य शुद्धि-र्भवति । एवमन्यत्राप्युत्तराशौचकालार्धाधिककाले पूर्वाशौचे द्वितीयाशौचस्य तच्छेषेणैव शुद्धिरवगन्तव्या । एवञ्च शङ्खेन यदुक्तं—

असमानं द्वितीयेन धर्मराजवचो यथा ।

इति, यदपि प्रजापतिना—'गच्छतो लघुता तथा' इति, यदपि हारीतेन—'लघुना नैव तम्' इति; तत्र शङ्खवचन-स्यार्थः प्रागेव प्रदर्शितः । प्रजापतिहारीतवचनयोरयमर्थः—दीर्घकालतया गुर्वाशौचं स्वल्पकालतया लघ्वाशौचेन पूर्वभा-विना न शुध्यतीति । तान्येतान्युत्तराशौचकालार्धादधिकका-लाशौचापनोद्यल्घ्वाशौचेषु द्रष्टव्यानि । यदा तु संपूर्णाशौचयोः प्रथमोत्तरयोरुत्तरस्य प्रथमान्त्यदिने सन्निपातस्तदा विशेषमा-हतुश्शङ्खलिखितौ—'अथ चेदुत्तरा प्रमीयेत जायेत वा शिष्टैरेव दिवसैश्शुध्येताहश्शेषे द्वाभ्यां प्रभाते तिसृभिः' इति । अहश्शेषः अहोरात्रशेषः । एतदुक्तं भवति—संपूर्णा-शौचस्यान्त्याहोरात्रमध्ये संपूर्णाशौचान्तरस्य यदा सन्निपा-तस्तदा द्वितीयाशौचस्य प्रथमाशौचकालशेषेण न शुद्धिः, किंतु तच्छेषादूर्ध्वं द्वाभ्यां रात्रिभ्यां शुद्धिः । यदा तु पुनर-ष्टमे यामे संपूर्णाशौचान्तरसन्निपातस्तदाऽष्टमयामादूर्ध्वं तिसृभी रात्रिभिरिति । शातातपोऽप्याह—

रात्रिशेषे द्व्यहाच्छुद्धिर्यामशेषे शुचिस्त्र्यहात् ।

इति । रात्रिशेषे द्व्यहाच्छुद्धिरिति अहश्शेषे द्व्यहाच्छुद्धिरित्यर्थोऽवगन्तव्यः । एवमुक्तो विशेषः संपूर्णाशौचविषये द्रष्टव्यः । यथाऽऽह बोधायनः—अथ यदि दशरात्रसान्निपाते पुनराद्यं दशरात्रमाशौचमानवमाद्दिवसात्, इति । अस्यार्थो धर्मप्रदीपे वर्णितः । अत्रापि वर्ण्यते—यावन्नवमदिनसमाप्तिः तावत्पूर्ववर्तमानाशौचदिवसकालेनोत्तराशौचसमाप्तिरित्यर्थः। अत्र नवमग्रहणमुपान्त्यदिवसप्रदर्शनार्थम् । ततश्च द्वादशरात्रादिष्वप्येतत्सूचितमिति गुरुणा व्याख्यातं—'ततश्च दशमेऽहनि यदा दिवाऽऽशौचोत्पत्तिस्तदाऽपि द्वाभ्यामित्येतद्वेदितव्यम्' इत्येतदन्तेन ग्रन्थेन । 'दशमेऽहनि यदा दिवाऽऽशौचोत्पत्तिः' इत्यत्र धर्मदीपग्रन्थे—"दशमेऽहनीत्येतद्द्वादशाहादेरुपलक्षणार्थम्, ततश्च ब्राह्मणस्य पूर्वाशौचदशमेऽह्नि संपूर्णद्वितीयाशौचप्रक्रमः, क्षत्रियस्य पूर्वाशौचद्वादशेऽह्नि, वैश्यस्य पूर्वाशौचपञ्चदशेऽह्नि, शूद्रस्य पूर्वाशौचमासान्त्यदिने तदाऽपि द्वाभ्यामित्ययं विशेषो वेदितव्यः । अत एव गौतमेन—तच्चेदन्तः पुनरापतेच्छेषेण शुद्ध्येरन् रात्रिशेषे द्वाभ्यां प्रभाते तिसृभिश्चतुर्णामिसविशेषेण वर्णानाम्" इत्युक्तम् । आशौचसान्निपाते शेषेण शुध्येरन्नित्युक्त्वा रात्रिशेषे द्वाभ्यां प्रभाते तिसृभिरिति यदुक्तं तच्चतुर्णामिसविशेषेण ज्ञेयमित्यर्थः । एवमसंपूर्णाशौचसन्निपाते संपूर्णाशौचान्त्यदिवसे तस्यासंपूर्णस्य द्वितीयाशौच

स्यार्धरात्रादेः पूर्वं पूर्वाशौचशेषेणैव शुद्धिर्बोद्धव्या । मातापितृमरणाशौचयोस्त्वन्त्यादिनात्पूर्वमेव मिथस्सन्निपातेऽपि न प्रथमाशौचशेषेण शुद्धिः । यदाह शङ्खः—

मातर्यग्रे प्रमीतायामशुद्धौ म्रियते पिता ।

पितुश्शेषेण शुद्धिस्स्यान्मातुः कुर्यात्तु पक्षिणीम् ॥

इति । यद्यप्यत्र मातुर्मरणाशौचशेषमात्रेण पश्चाद्भाविपितृमरणाशौचस्य शुद्धिः, पितृमरणाशौचशेषेण पक्षिण्यधिकेन पश्चाद्भाविमातृमरणाशौचस्य शुद्धिरिति प्रतिभाति । तथाऽपि नायं वचनार्थः, पितृमरणाशौचस्य निमित्ततो मातृमरणापेक्षया गरीयसः पूर्वशेषमात्रेण शुद्धिः, मातृमरणाशौचस्य निमित्ततः पितृमरणापेक्षया लघीयसः पूर्वाशौचशेषेण पक्षिण्यधिकेन शुद्धिरित्यनुचितार्थत्वात् । अतोऽन्यथा व्याख्येयम् । व्याख्यातं चान्यथा विज्ञानेश्वरपादैः—"मातरि पूर्वं प्रमीतायां तन्निमित्ताशौचमध्ये यदि पितुरुपरमः स्यात्तदा न पूर्वशेषेण शुद्धिः, किंतु पितुः प्रयाणनिमित्ताशौचशुद्धिः कार्या । तत्रापि पितुः प्रयाणाशौचमध्ये मातरि स्वर्यातायामपि न पूर्वशेषमात्राच्छुद्धिः, किंतु पूर्वाशौचं समाप्योपरि पक्षिणीं क्षपयेत्" इति । आदिपुराणे तु प्रथमाशौचोत्तरार्धसन्निपातेऽस्य द्वितीयाशौचस्य न पूर्वशेषेणैव शुद्धिः, किंतु स्वकालेनैवेति केषांचिन्मतमुपन्यस्य तत्सर्वं धर्मशास्त्रविरुद्धत्वाद्विचार्यमित्यभिप्रायेणोक्तं—

आद्ये भार्गव यावत्स्यात्सूतकस्य तु सूतके ।
सूतके पतिते चास्मात्सूतकाच्छुद्धिरिष्यते ॥
अत ऊर्ध्वं द्वितीयात्स्यात्सूतकात्तु विशोधनम् ।
एवमेव विचार्यं स्यात्सूतके मृतके तथा ॥

इति । अस्यायमर्थः—प्रक्रान्तसूतकस्य पूर्वार्धमध्ये प्रविष्टस्य द्वितीयस्य सूतकस्य प्रक्रान्तसूतकशेषेण शुद्धिः, पूर्वार्धादूर्ध्वं प्रविष्टस्य तु स्वकालेनैव, प्रक्रान्तशावाशौचमध्ये प्रविष्टस्य सूतकस्याप्येवमेव शुद्धिरिति यत्केषांचिन्मतं तद्विचार्यं, चिन्त्यं च धर्मशास्त्रविरुद्धत्वादिति ॥

इति स्मृतिचन्द्रिकायामनेकाशौचसन्निपातविषयाणि.

---

उक्तमनेकविधमाशौचं—

सद्यश्शौचं तथैकाहस्त्र्यहश्चतुरहस्तथा ।
षड्दशद्वादशाहश्च पक्षो मासस्तथैव च ॥

इत्यादिकम् । तस्य सर्वस्याप्यपवादो गृहस्थेतराश्रमस्येति प्रतिपादितं—

नैष्ठिकानां वनस्थानां यतीनां ब्रह्मचारिणाम् ।
नाशौचं सूतके प्रोक्तं शावे वाऽपि तथैव च ॥

इति । सपिण्डादिषु यदाशौचमुक्तं तत् गृहस्थेतराश्रमाणां न कदाचिद्भवतीत्यर्थः । यद्यप्यत्र नाशौचमिति सामान्यवशात्सद्यश्शौचस्यापवादः प्रतिभाति; तथाऽपि वक्ष्यमाणवचन-

विरोधात्तद्व्यतिरिक्ताशौचस्यायमपवाद इत्यवगन्तव्यम् । एवंच नैष्ठिकादिषु एकाहद्व्यहाद्यनेकविधाशौचस्थानेषु सद्यश्शौचमित्यवगन्तव्यम् । तथा च याज्ञवल्क्यः—

ऋत्विजां दीक्षितानां च यज्ञियं कर्म कुर्वताम् ।
सत्रिव्रतिब्रह्मचारिदातृब्रह्मविदां तथा ॥
दाने विवाहे यज्ञे च संग्रामे देशविप्लवे ॥
आपद्यपि च कष्टायां सद्यश्शौचं विधीयते ॥

इति । तत्रर्त्विक्पदार्थो मनुनोक्तः—

अग्न्याधेयं पाकयज्ञमग्निष्टोमादिकान् मखान् ।
यः करोति वृतो यस्य स तस्यर्त्विगिहोच्यते ॥

इति । वृतो वरणेन संस्कृत इत्यर्थः । स च वरणसंस्कारोऽग्न्याधेयादौ वरणप्रभृति प्रयोगपरिसमाप्तिपर्यन्तमनुवर्तत इति तदनुवृत्तिपर्यन्तमृत्विजां दीर्घकालाशौचमध्ये सद्यश्शौचं विधीयत इति संबन्धः । दीक्षितो दीक्षाख्यसंस्कारवान् । ॱ च संस्कारो दीक्षणीयेष्ट्यादिभिरुत्पद्यते अवभृथस्नानेना- ॊ । तथाच पद्मपुराणम्—

तावद्गृहीतदीक्षस्य त्रैविद्यस्य महामखे ।
स्नानं त्ववभृथे यावत्तावत्तस्य न सूतकम् ॥

एतदुक्तं भवति—दीक्षणीयादिभिरुत्पन्नो दीक्षाख्यसंस्कारो यावद्यजमाने पत्न्यां चानुवर्तते तावत्तयोः दीर्घकालाशौच

मध्येऽपि तदाशौचं न विद्यते, सद्यश्शौचविधानादिति। सत्रि-व्रतिदातृशब्दानामर्थास्संग्रहकारेण दर्शिताः—

सत्री गृहीतनियमो यज्ञे दाने च दीक्षितः।
चान्द्रायणाद्यनुष्ठाता व्रती तु ब्रह्मचार्यपि॥

श्राद्धे गृहीतसंकल्पो व्रती भोक्ता च कीर्तितः।
दाता नित्यमनादाता वानप्रस्थः प्रकीर्तितः॥

इति। यज्ञे सोमयागादौ दाने सततान्नदाने गृहीतनियमः कृतसंकल्पः सत्रीत्यनेनोक्तः। यज्ञे गृहीतनियमो दीक्षितोपि भवति, तथाऽपि पुरस्तादुक्तदीक्षितसंकीर्तनाद्गोबलीवर्दन्यायेनात्र सत्रिशब्दो दीक्षितावस्थेतरयजमाने वर्तत इति दर्शयितुं 'यज्ञे दाने च दीक्षितः' इत्युक्तम्। व्रतीत्यनेन चान्द्रायणाद्यनुष्ठाता चान्द्रायणादौ कृतसंकल्पः, श्राद्धे गृहीतसंकल्पः पुत्रादिः, भोक्ता श्राद्धकर्मणि भोजनार्थं निमन्त्रितविप्रोऽपि कीर्तितः। तयोरपि व्रतयोगवत्त्वेन व्रतिशब्दप्रवृत्तिनिमित्तसद्भावात्। यद्यप्युपनीतब्रह्मचारिण्यपि प्रवृत्तिनिमित्तसद्भावेन व्रतिनि व्रतशब्दो वर्तते, तथाऽपि ब्रह्मचारीति ब्रह्मचारिसान्निधानाद्गोबलीवर्दन्यायेन व्रतिशब्दो ब्रह्मचारिव्यतिरिक्तेषु व्रतिषु वर्तत इति दर्शयितुं ब्रह्मचारीत्युक्तम्। दातृशब्देनात्र वानप्रस्था व्यपदिश्यन्ते, 'असाधारण्येन व्यपदेशा भवन्ति' इति न्यायात्। तदभिसंधायोक्तं—'दाता

नित्यमनादाता वानप्रस्थः प्रकीर्तितः' इति । अनादाता न प्रतिग्रहीता । ब्रह्मवित् परिव्राजकः, तस्मिन् प्रायेण ब्रह्मज्ञानसद्भावात् । अत्र व्रतिषु व्रतनिवृत्तिपर्यन्तं प्राप्तदीर्घाशौचापवादेन सद्यश्शौचं विधीयते । ब्रह्मचार्यादिषु तत्तदाश्रमे यावत् स्थितः तावत्सद्यश्शौचं प्राप्तदीर्घकालाशौचबाधेन विधीयत इत्यवगन्तव्यम् । ननु सत्रिशब्देनैव दाने यज्ञे च सद्यश्शौचं सिद्धं, तेन 'दाने विवाहे यज्ञे च' इति दानयज्ञयोः पुनरभिधानं व्यर्थम्। उच्यते—दाने तावदन्नदानादन्यत्रापि दानविशेषे क्वचित्सद्यश्शौचविधानार्थं पुनर्दानवचनं, असंकल्पितयज्ञेऽपि क्वचित्सद्यश्शौचाविधानार्थं पुनर्यज्ञवचनमिति न वैयर्थ्यम् । तथा च संग्रहकारः—

दाने विशिष्ट आर्तस्य व्याधिना शुद्धतोच्यते ।
[1]अनित्यतोपि यो वस्तु [2]दातुं होमादि वाञ्छति ॥
यज्ञे संभृतसंभारे........................................ ॥

इत्यादि । व्याधिना आर्तस्य विशिष्टे दाने व्याधिपरिहारार्थं महिष्यादिदाने, धर्मोपचयार्थदाने च शुद्धतोच्यते सद्यश्शौचमुच्यत इत्यर्थः । 'यज्ञे संभृतसंभारे' इत्येतदुपरिष्टात्प्रपञ्च्यते । विवाहे सद्यश्शौचं कस्येत्यपेक्षिते ब्रह्मपुराणं—

......................... कन्यादाने च नो भवेत् ।
विवाहे कन्यकायाश्च लाजहोमादिकर्मणि ॥

---

[1] अनिच्छतोऽपि. [2] दातुर्होमादि.

इति । कन्यादाने विवाहकर्मणि कन्याया दातुस्तत्परिग्रहीतुश्च कन्यावरणप्रभृति विवाहनिवृत्तिपर्यन्तं दीर्घप्राप्ताशौचमपि तदाशौचं नो भवेत् न विद्यते, विवाहविषयेऽपि सद्यश्शौचविधानादित्यर्थः । संग्रामे युद्धे । 'संबाधे राजानं संनाहयेत्' इत्याश्वलायनोक्तसंनाहनादिविधौ प्रास्थानिकशान्तिहोमे वाऽऽशौचे सद्यश्शुद्धिः । देशस्य विस्फोटादिभिरुपद्रवे राजभयाद्वा विप्लवे तदुपशमनार्थं शान्तिकर्मणि सद्यश्शुद्धिः । तथा कष्टायामप्यापदि संकुचितवृत्तेः क्षुत्परिश्रान्तमातापित्रादिबहुकुटुम्बस्य तद्रक्षोपयोगिनि प्रतिग्रहे सद्यश्शुद्धिरित्यर्थः । स्मृत्यन्तरेऽपि—

नरेन्द्रसत्रिव्रतिनां विवाहोपप्लवादिषु ।
सद्यश्शौचं समाख्यातं कान्तारापदि संयति ॥

इति । नरेन्द्रस्य कस्मिन् कर्मणि सद्यश्शौचमित्यपेक्षिते ब्रह्मपुराणं—

राज्यनाशस्तु येन स्याद्विना राज्ञः स्वमण्डले ।
प्रयास्यतश्च संग्रामे होमे प्रास्थानिके सति ॥
मन्त्रादितर्पणे वाऽपि प्रजानां शान्तिकर्मणि ।
गोमङ्गलादौ वैश्यानां कृषिकालात्यये सति ॥
आशौचं न भवेल्लोके सर्वत्रान्यत्र विद्यते ॥

इति । अस्यार्थः—राज्ञः राष्ट्रे येन कर्मणा विना यत्कर्माकरणे प्रजापालनादिराज्यनाशः तस्मिन् कर्मणि प्रक्रान्ते,

तथा संग्रामे प्रयास्यतः प्रास्थानिके प्रस्थाननिमित्ते होमे प्रस्तुते सति, तथा मन्त्रादिभिः मन्त्रपूर्वकपूजोपहारैर्दुष्टग्रह तर्पणे प्रस्तुते, तथा सांसर्गिकेऽपि प्रजानां शान्तिकर्मणि प्रस्तुते, तथा वैश्यानां लोकाचारसिद्धगोमङ्गलादिकर्मणि प्रस्तुते, तथा कृष्यादिकर्मार्थे विनायकपूजादिकर्मणि प्रस्तुते, राज्ञां वैश्यानां चाशौचं दीर्घकालतया न विद्यते, सद्यश्शौचविधानात्। अन्यत्र पूर्वोक्तकर्मविषयेभ्योऽन्यत्र वैश्वदेवादिकर्मसु सर्वत्राशौचं विद्यते, तत्र सद्यश्शौचविधानाभावादिति। यत्त्वङ्गिरोवचनं—

जनने मरणे चैव त्रिष्वाशौचं न विद्यते।
यज्ञे विवाहकाले च देवयागे तथैव च॥

इति। यज्ञः सोमयागादिर्वैदिकः। देवयागः मातृकादिदेवताको लौकिको गणयागः। यदपि पैठीनसिवचनं—

विवाहयज्ञदुर्गेषु यात्रायां तीर्थकर्मणि।
न तत्र सूतकं तद्वत्कर्म यज्ञादि कारयेत्॥

इति। यदपि ब्रह्मपुराणवचनं—

इष्टे देवप्रतिष्ठायां गणयागादिकर्मणि।
श्राद्धादौ पितृयज्ञे च कन्यादाने च नो भवेत्॥

इति। एतान्युपक्रान्तयज्ञादिकर्मविषयाणि वचोभङ्ग्या सद्यश्शौचविधायकानीति मन्तव्यम्। अत एव ब्रह्मपुराणे क्वचिदस्यापवाद उक्तः—

यज्ञार्थं बहुसम्भारसम्भृतस्यापि कुत्रचित् ।

आशौचं न भवेत् ........................ ॥

इति । ततश्चायमर्थः—यज्ञार्थं संभृतसंभारस्य कल्पितसमस्तयज्ञसाधनपदार्थस्याप्यकृतसंकल्पस्याशौचापगमादूर्ध्वं वसन्तान्तर्गतकर्मकालासंभवेन तस्मिन्वत्सरे करिष्यमाणयज्ञातिक्रमविषये यज्ञसंकल्पात्पूर्वक्षणे शुद्धिर्भवतीति । यज्ञग्रहणं प्रतिष्ठादेरुपलक्षणार्थम् । अत एव विष्णुः—'न देवप्रतिष्ठाविवाहयोः पुनस्संभृतयोः' इति । देवप्रतिष्ठाविवाहयोः संभृतबहुसंभारयोरुपक्रमात्प्रागपि न तत्कर्तुराशौचं भवतीत्यर्थः । एतदुक्तं भवति—यावति काले संभृतबहुसंभारधारणं कर्तुं शक्यते तावत्कालमध्ये प्रतिष्ठाद्यङ्गभूतं कालान्तरं यत्र न लभ्यते तद्विषय एव संकल्पात्प्रागाशौचाभाव इति । स्मृत्यन्तरेऽपि—

यज्ञे संभृतसंभारे विवाहे श्राद्धकर्मणि ।

इति । संभृतसंभार इति सर्वत्र संबध्यते । अत्रापि वैष्णववचनसमानविषयत्वमेव मन्तव्यम् । श्राद्धे संभृतसंभारत्वं पक्वद्रव्याभिप्रायं, आमद्रव्यभिप्राये वक्ष्यमाणस्मृत्यन्तरवचनाविरोधापत्तेः । तथाहि—

श्राद्धविघ्ने समुत्पन्ने त्वन्तरा मृतसूतके ।

अमावास्यां प्रकुर्वीत शुद्धावेके मनीषिणः ॥

इति । अयमर्थः—आमद्रव्योपकल्पनसंकल्पयोर्मध्ये दैवान्मानुषाद्वा समुत्पन्ने श्राद्धविघ्ने मृतके सूतके वाऽमावास्यायामा

शौचापगमादनन्तरं वा श्राद्धं कुर्वीत। पक्वद्रव्योपकल्पनसंकल्पयोर्मध्ये सूतके मृतके वा समुत्पन्ने पूर्वोक्तसद्यश्शौचविधिबलात् तस्मिन्नेव काले श्राद्धं कर्तव्यमित्यवगन्तव्यम् । विप्रनिमन्त्रणात्प्राग्विप्रस्याशौचे प्राप्ते विप्रान्तरमामन्त्र्य श्राद्धं कर्तव्यम् । निमन्त्रणादूर्ध्वं विप्रस्याशौचे प्राप्ते तस्य शुद्धिर्ब्रह्मपुराणे दर्शिता—

निमन्त्रितस्य विप्रस्य स्वाध्यायानिरतस्य च ।
देहे पितृषु तिष्ठत्सु नाशौचं विद्यते क्वचित् ॥

इति । यत्तु स्मृत्यन्तरेऽभिहितं—

द्रव्याणि स्वामिसंबन्धात्तदघे त्वशुचीनि च ।
स्वामिशुद्ध्यैव शुध्यन्ति वारिणा प्रोक्षितान्यपि ॥

इति । तदाशौचोत्पत्तेः पूर्वं यज्ञार्थमसंकल्पितद्रव्यविषयं,

पूर्वसंकल्पितं द्रव्यं दीयमानं न दुष्यति ।

इति क्रतुस्मरणात् । आशौचोत्पत्तेः पूर्वं संकल्पितं द्रव्यं देवतायै दीयमानं ब्राह्मणेभ्यो वा दीयमानं न दुष्यतीत्यर्थः । कानिचिद्वचनानि द्रव्याणि पूर्वमसंकल्पितान्यपि न दुष्यन्तीत्याहुः—

लवणे मधुमांसे च पुष्पमूलफलेषु च ।
शाककाष्ठतृणेष्वप्सु दधिसर्पिःपयस्सु च ॥
तिलौषधाजिने चैव पक्वापक्वस्वयंग्रहे ।
पण्येषु चैव सर्वेषु नाशौचं मृतसूतके ॥

इति । पक्वशब्देनान्नादिव्यतिरिक्तं भक्ष्यादिकमभिप्रेतं, पक्वान्ने दोषश्रवणात् । तथाऽऽहाङ्गिराः—

अन्नसत्रप्रवृत्तानामाममन्नमगर्हितम् ।
भुक्त्वा पक्वान्नमेतेषां त्रिरात्रं तु पयः पिबेत् ॥

इति । एतेषां आशौचनिमित्तमरणादिज्ञातॄणामिति शेषः । तथाच षट्त्रिंशन्मते —

उभाभ्यामपरिज्ञातमाशौचं नैव दोषकृत् ।
एकेनापि परिज्ञाते भोक्तुर्दोषमुपावहेत् ॥

इति । पक्वभक्ष्यादिकमपि स्वाम्याशौचे स्वेष्टं भोक्तुर्दोषमावहति । अत एव मरीचिवचने स्वयंग्रह इत्युक्तम् । स्वाम्यनुज्ञया भोक्ता स्वयमेव गृह्णीयादिति तस्यार्थः । अन्नसत्रप्रवृत्तानामिति यज्ञविवाहप्रवृत्तानामुपलक्षणार्थं, तस्याशौचसंपर्कस्य निषिद्धत्वात् ।

तथाच स्मृत्यन्तरं—

विवाहोत्सवयज्ञादावन्तरा मृतसूतके ।
शेषमन्नं परैर्देयं दातॄन् भोक्तॄंश्च न स्पृशेत् ॥

इति । भोजनमध्ये शावाशौचानिमित्ते परिज्ञाते भोक्तॄणां कथं शुद्धिर्भवेदित्यपेक्षिते षट्त्रिंशन्मते स्मृतं—

भुञ्जानेषु च विप्रेषु त्वन्तरा मृतसूतके ।
अन्यगेहोदकाचान्तास्सर्वे ते शुचयः स्मृताः ॥ इति ॥

इति स्मृतिचन्द्रिकायामाशौचापवादः ॥

---

## अथाशौचिनियमाः.

तत्र जाबालिः—

सन्ध्यां पञ्च महायज्ञान् नैत्यकं स्मृतिकर्म च ।
तन्मध्ये हापयेदेव दशाहान्ते पुनःक्रिया ॥

इति । पञ्चमहायज्ञानां साहचर्यान्नैत्यकशब्देनात्र नित्यश्राद्धमुच्यते । स्मृतिकर्म स्मृत्युक्तं कर्म देवतार्चनादिकम् । तन्मध्ये-आशौचमध्ये । हापयेत् त्यजेत् । तेषां सन्ध्यादीनां दशाहान्ते आशौचान्ते पुनःक्रिया पुनरनुष्ठानम् । सन्ध्यां त्यजेदित्येतन्मन्त्रोच्चारणसन्ध्याभिप्रायेणोक्तं न तु सन्ध्यामात्राभिप्रायेण । यदाह पुलस्त्यः—

सन्ध्यामिष्टिं चरुं होमं यावज्जीवं समाचरेत् ।
न त्यजेत्सूतके वाऽपि त्यजन् गच्छेदधो द्विजः ॥
सूतके मृतके चैव सन्ध्याकर्म समाचरेत् ।
मनसोच्चारयेन्मन्त्रान् प्राणायाममृते द्विजः ॥

इति । अस्यायमर्थः—प्राणायामव्यतिरिक्तमन्त्रान् मनसोच्चारयेत् । प्राणायाममन्त्रांस्तु मनसाऽपि नोच्चारयेत् । अमन्त्रकमेव प्राणायामं कुर्यादिति यावत् । मनसोच्चारयेदित्येतदञ्जलिप्रक्षेपव्यातिरिक्तविषयम् । अत एव पैठीनसिः—'सूतके सावित्र्याऽञ्जलिं प्रक्षिप्य प्रदक्षिणीकृत्य सूर्यं ध्यायन्नमस्कुर्यात्'

इति । सन्ध्याविधावुक्तसावित्रीमन्त्रस्यैव पुनर्वचनं मनसोच्चारणनिवृत्त्यर्थम् । तेन सावित्रीमन्त्रस्योच्चारणं वाचा कर्तव्यम् । विष्णुरपि त्याज्यकर्माण्याह—'आशौचे होमदानप्रतिग्रहस्वाध्याया निवर्तन्ते नाशौचे कस्यचिदन्नमश्नीयात्' इति । होमोऽत्र वैश्वदेवोऽभिप्रेतः,

विप्रो दशाहमासीत वैश्वदेवविवर्जितः ।

इति संवर्तेन विशेषतोऽभिधानात् । वैश्वदेवाभिप्रायेण शङ्खोपि—

दानं प्रतिग्रहो होमः स्वाध्यायः पितृकर्म च ।
प्रेतपिण्डक्रियावर्जमाशौचे विनिवर्तयेत् ॥

पितृकर्म अमावास्याश्राद्धादिकम् । न च होम इति सामान्योक्तिबलादग्निहोत्रौपासनादिकमपि निवर्तनीयमिति शङ्कनीयम् । यत आह याज्ञवल्क्यः—

वैतानौपासनाः कार्याः क्रियाश्च श्रुतिचोदिताः ।

इति । वैतानाः गार्हपत्यादिवह्न्यग्निसाध्याः 'यावज्जीवमग्निहोत्रं जुहोति, यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इत्यादिश्रुतिचोदिताः । तथा गृह्यैकाग्निसाध्याः औपासनाः औपासनहोमपार्वणस्थालीपाकाद्याश्च कार्या इत्यर्थः । स्मृत्यन्तरं च—

कुर्याद्वैतानिकं कर्म स्नात्वोपस्पर्शनात्स्वयम् ।

इति । आशौचप्राप्त्यनन्तरं स्नात्वाऽऽचम्य वैतानिकं कर्म अग्निहोत्रादिकं तत्काले स्वयं कुर्यादित्यर्थः । न चात्र धर्मा-

योग्यत्वलक्षण आशौचे स्थिते कथं वैतानिके कर्मणि विधि-र्घटत इति वाच्यं, यतो विधिबलादेव धर्मयोग्यत्वमवगम्यते। उक्तं च गोभिलेन—

अग्निहोत्रे तु होमार्थं शुद्धिस्तात्कालिकी स्मृता।
पञ्चयज्ञान्न कुर्वीत अशुद्धः पुनरेव सः ॥

इति। अग्निहोत्रादिके कर्मणि यत्राशौचमध्ये विधिरस्ति तत्र तात्कालिकी शुद्धिः। कर्मसंकल्पात्पूर्वक्षणमारभ्य वैतानिकानुष्ठानपर्यन्तं धर्मयोग्यत्वलक्षणशुद्धिर्वेदितव्या। तत्र पुनः पञ्च महायज्ञाः तदाशौचे कर्तव्या इति विधिर्नास्ति, तत्र शुद्धि-ज्ञापकविध्यभावात् कर्मायोग्यत्वमेवेत्यर्थः। एवं विधिाज्ञापिते कर्मयोग्यत्वे सत्यपि यो नरो न जुहोति तस्य प्रायश्चित्तं कर्तव्यम्। अतएव मनुः—

दर्शं च पूर्णमासं च कर्म वैतानिकं च यत्।
सूतकेऽपि त्यजेन्मोहात्प्रायश्चित्तीयते हि सः॥

इति। वैतानिकग्रहणं स्मार्तस्याप्याशौचविहितकर्मण उपलक्षणार्थम्। अत एव जातूकर्ण्यः—

सूतके तु समुत्पन्ने स्मार्तं कर्म कथं भवेत्।
पिण्डयज्ञं चरुं होममसगोत्रेण कारयेत् ॥

पिण्डयज्ञः पिण्डपितृयज्ञः। चरुः पार्वणस्थालीपाकः। होमः प्रतिदिनौपासनहोमः। कारयेदिति विधिबलात् स्मार्ते कर्मणि

त्वेकत्यागात्मककर्मण्येव धर्मायोग्यत्वलक्षणाशुद्धिः नान्यत्रेति गम्यते । अत एव बृहस्पतिः—

सूतके मृतके चैव त्वशक्तौ श्राद्धभोजने ।
प्रवासादिनिमित्तेषु हावयेन्न तु क्षपयेत् ॥

न हापयेत् न त्यजेदित्यर्थः । तथाच जाबालिः—

जन्महान्योर्वितानस्य कर्मत्यागो न विद्यते ।
शालाग्नौ केवलो होमः कार्य एवान्यगोत्रजैः ॥

शालाग्नौ होम औपासनाख्यः, सोऽन्यगोत्रजैः कार्य इति नियमात् वैतानिकाग्नौ क्रियमाणाग्निहोत्रादिहोमोऽन्यगोत्रजैः-कार्य इत्यनियमात्स्वयं कुर्यादित्यवगम्यते ।

वर्जयेत्सूतके कर्म नित्यनैमित्तिकादिकम् ।
आहिताग्नेस्तदा शुद्धिस्सद्य एव विधीयते ॥

इति । तत्र पूर्वार्धमाशौचे कर्तव्यानित्यनैमित्तिकादिविषयं, उत्तरार्धं त्वाहिताग्निविषयमित्यवगन्तव्यम् । एवमेव 'नित्यानि निवर्तेरन् वैतानवर्जम्' इति पैठीनसिवचनस्यापि विषयो बोद्धव्यः, श्रौतस्मार्तानां त्याग एवेति प्रतिप्रसवे विध्यभावात् । श्रौतानामप्यग्निहोत्रादीनां प्रथमारम्भकाले आशौचे त्याग एव, प्रतिप्रसवविधीनां प्रथमारम्भोत्तरकालानुष्ठेयाग्निहोत्रादिविषयत्वात् । नित्यं नैमित्तिकमित्यनुवृत्तौ काम्ये प्रतिप्रसवार्थमाह पुलस्त्यः—

सन्निहत्यामुपस्पृश्य राहुग्रस्ते दिवाकरे ।
सत्रधर्मप्रविष्टस्य दानकर्मफलैषिणः ॥

अयमर्थः—दानकर्मफलकामिनोपि सन्निहत्यामुपस्पृश्य तीर्थविशेष स्नात्वा दाने प्रवृत्तस्य सद्यश्शौचं, अन्नसत्रधर्मे प्रवृत्तस्य तद्दानफलार्थिनोऽपि सद्यश्शौचमिति । नैमित्तिकेऽपि कचित्प्रतिप्रसवार्थमाह वृद्धबृहस्पतिः—

कन्याविवाहे संक्रान्ते सूतकं न कदाचन ।

इति । नित्यनैमित्तिककाम्येष्वपि प्रतिप्रसवार्थमाह जामदग्न्यः—

सूतके मृतके वाऽपि जाह्नव्यास्सलिलाप्लुतः ।
नाभिमात्रे जले स्थित्वा कुर्याद्दानजपादिकम् ।
नित्यं नैमित्तिकं चापि काम्यं वाऽपि विशेषतः ॥

इति । यत्तु मार्कण्डेयपुराणं—

नित्यस्य कर्मणो हानिं न कुर्वीत कदाचन ।
तस्य त्वकरणे बन्धः केवलं मृतजन्म च ॥

इति, तत् सूत्याद्याशौचेऽपि विहिताग्निहोत्ररूपकर्महानिविषयम् । न तत् तथाविधिरहिततर्पणादिनित्यकर्मविषयम्, पूर्वोक्तवचनविरोधापत्तेः । यदपि तेनैवोक्तं—

दशाहं ब्राह्मणस्तिष्ठेद्दानहोमादिवर्जितः ।
क्षत्रियो द्वादशाहं च वैश्यो मासार्धमेव च ।
शूद्रश्च मासमासीत नित्यकर्मविवर्जितः ॥

इति । तत् वयोऽवस्थाप्रयुक्तसंपूर्णाशौचकालानामप्युपलक्षणा-र्थम् । यत्तु हारीतेनोक्तं—

ततस्त्वेकादशदिने यज्ञः स्वाध्याय एव च ।
प्रवर्तन्ते क्रियाश्चैव इत्येतन्मनुरब्रवीत् ॥

इति । 'ततस्त्वेकादशदिने' इत्येतदाशौचान्त्यदिनानन्तरदिनो-पलक्षणार्थम् । ब्रह्मचारिणं प्रत्याह कात्यायनः—

न त्यजेत्सूतके कर्म न त्यजेत्तु क्वचिद्व्रती ।

इति । गृहस्थवदस्य सूतकाभावः प्रायश्चित्तं नित्य इति ॥

इति स्मृतिचन्द्रिकायामाशौचनियमाः.

---

अथ मुमूर्षोः कर्तव्यानि । व्यासः—

म्रियमाणं नरं दृष्ट्वा कर्ता भूम्यां शुचिस्थले ।
देवालये नदीतीरे गङ्गाम्भसि वनस्पतेः ॥
उत्तानं दक्षिणाग्रीवं तमुद्दिश्य च गां सजेत् ।
हिरण्यं भूमिदानं च तिलान् शक्त्या च दापयेत् ॥
कुटुम्बिने दरिद्राय श्रोत्रियाय तपस्विने ।
यद्दानं दीयते तस्मै तद्दानं स्वर्गसाधनम् ॥
आतुरो वाऽथ पुत्रो वा दद्युरासन्नबान्धवाः ।
कर्णे जपेदीशवाक्यं शास्त्रादिभिरुदीरितम् ॥

शातातपश्च—

आतुरस्य भिषङ्मित्रं दानं मित्रं मरिष्यतः ।
अन्नपानाश्वगोवस्त्रभूशय्याद्यासनानि च ॥

प्रेतलोके प्रशस्तानि दानान्यष्टौ विशेषतः ।
तस्माद्दानं तु कर्तव्यं मृतिकाले कथंचन ॥ इति ॥

इति स्मृतिचन्द्रिकायां मुमूर्षोः कर्तव्यानि.

---

## अथाग्निनिर्णयः

उपनयनादूर्ध्वं मरणेऽग्न्युदकदानविधिमाह याज्ञवल्क्यः—

स दग्धव्य उपेतश्चेदाहिताग्न्यावृताऽर्थवत् ।

इति । उपनीतश्चेन्मृतः अहिताग्न्यावृता अहिताग्निसंस्कारप्रकारेण अर्थवत् प्रयोजनवद्यथा भवति तथा दग्धव्यः । अयमभिप्रायः—येषां भूशोधनदर्भास्तरणप्रोक्षणादीनामाहिताग्निविहितसंस्काराणां द्वारकार्यरूपं प्रयोजनमस्ति तान्यनुष्ठेयानि । लुप्तार्थानि पात्रसंयोजनादीनि त्वननुष्ठेयानि, यथा—कृष्णलेष्वातिदेशप्राप्तेषु अवघातप्रोक्षणादिषु द्वारलोपादवघातादीनामननुष्ठानं प्रोक्षणादीनां त्वनुष्ठानमिति । सान्तातिके चैवं, मैत्रावरुणविधानात् । सान्ततिकामिति जातकर्मप्रभृति योऽग्निर्धार्यते तस्मिन्नेव सर्वाणि कर्माणि क्रियन्ते कुमारस्य चौलप्रभृत्यरण्योस्समारोपणमा विवाहात् । ब्रह्मचार्यनुपनीतकन्यानां लौकिकेन कापालने वा दहनम् । तस्योत्पत्तिररण्योरुत्पत्तिवत् । लौकिकाग्निग्रहणं जातारण्योरभावेन । तत्सद्भावे तु तत्र मथित्वाऽग्निर्ग्राह्य इति ।

तथाच यज्ञपार्श्वः—

बालस्य दहनं कार्यं कपालेनैव वह्निना ।

लौकिकेनापरे प्राहुः जातारण्योस्तथा परे ॥

इति । कात्यायनोऽपि—

दहनं ब्रह्मचारिणां मृतानां त्यक्तवह्निनाम् ।

विधुराणां यतीनां च पतितानां च योषिताम् ॥

कपालवह्निना दाहस्स्वशाखोक्तविधानतः ।

गृहस्थं प्रदहेदेवं विवाहोत्पन्नवह्निना ॥

त्रेताग्निभिश्चाहिताग्निमिति याज्ञिकसंमतम् ॥

इति । वसिष्ठः—'कपालमग्निवर्णं तप्त्वाऽन्तरे करीषादि निक्षिप्य तत्र जातो योऽग्निस्स कपालाग्निः' इति । गृह्यकारिका—

विहीनभार्यस्य मृतस्य वह्निः

उत्तापनस्स्यादथ लौकिको वा ।

अभर्तृकायाश्च तथा स्त्रियश्च

पाणिग्रहात्पूर्वमृतौ शिशोश्च ॥

इति । वृद्धयाज्ञवल्क्यः—

आहिताग्निर्यथान्यायं दग्धव्यस्त्रिभिरग्निभिः ।

अनाहिताग्निरेकेन लौकिकेनापरे जनाः ॥

वृद्धवसिष्ठोऽपि—

तुषाग्निना दहेत्कन्यां व्रीहिभिर्वा यवेन वा ।

अथवोत्तपनीयेन कापालेनानलेन वा ॥

यतिं च ब्रह्मचारिणं दहेत्कापालवह्निना ।
अथवोत्तपनीयेन तुषेणैवापरे विदुः ॥
दर्भेष्वग्निं समारोप्य पुनर्दर्भेषु संस्थितः ।
पुनर्दर्भतृतीयेषु वह्निरुत्तापनस्स्मृतः ॥
कपालमग्नौ निक्षिप्य तप्ते चैव तुषं क्षिपेत् ।
करीषं वा समुत्पन्नस्तुषे तु तुषपावकः ॥
यावत्तप्तकपालेन केवलेनाग्निसंभवः ।
तावत्कपालसंभूतः पावकः परिकीर्तितः ॥
यस्मिन् देशे स्थितो वह्निस्ततोऽन्यत्र मृतो यदि ।
चरुः पाथिकृतः कार्यः पूर्णाहुतिरथापि वा ॥

औपासनाग्निसमीपस्थानं नीत्वा तस्मिन्नग्नौ पाथिकृतेष्टिं पूर्णाहुतिं वा हुत्वा प्रेतसंस्कारं कुर्यात् सर्वथाऽन्यदेशे विधिना दहेत् । तद्विषये प्रेताधानं कार्यम् । तावन्तं कालमग्नेः का गतिः ? उच्यते—

अन्यदीयेन वत्सेन या गोः स्नुतपयोधरा ।
आ शरीराहुतेस्तस्याः पयसा होम इष्यते ॥
अन्यस्या अपि होतव्यं पयसा तदभावतः ।
यस्त्वनौपासनादग्धस्तं विध्युक्ताग्निना दहेत् ॥

इति । स्वशाखाव्यतिरिक्तविधिना दग्धमपि पुनस्स्वशाखोक्तविधिना दहेत् । तथा—

संस्कुर्यात्तु पुनर्दग्धमनौपास्येन वह्निना ।
अनात्मीयेन शास्त्रेण यो दग्धस्तं च शास्त्रतः ॥

इति । यत्तु वचनम्—

देशान्तरास्थिते वह्नौ दूरदेशस्थितो मृतः ।
अग्निमुत्पाद्य कर्तव्यं प्रेतकृत्यं द्विजोत्तमैः ॥

इति, तच्छिष्टैरादृतम् । प्रेतो विच्छिन्नाग्निश्चेद्विधिना संधाय द्वादशगृहीतं जुहुयात् । तदुक्तमापस्तम्बेन—"यद्याहिताग्निर्विच्छिन्नाग्निर्विधुराग्निरुत्सृष्टाग्निर्वा म्रियेत न तमन्येन त्रेताग्निभ्यो दहन्तीति तस्य प्राचीनावीत्यग्न्यायतनान्युद्धृत्यावोक्ष्य यजमानायतने प्रेतं निधायापरेण गार्हपत्यमरणी सन्निधाय मन्थति 'येऽस्याग्नयो जुह्वतो मा॰ंसकामास्संकल्पयन्ते यजमानमा॰ंसं । जानन्तु तेऽस्मै हविषे सादिताय स्वर्गं लोकमिमं प्रेतं नयन्तु' इति तूष्णीं विहृत्य द्वादशगृहीतेन स्रुचं पूरयित्वा तूष्णीं हुत्वा प्रेतेऽमास्या इत्येतदादि कर्म प्रतिपद्यते" इति । आत्मादिसमारूढेष्वग्निषु यजमानमरणे तेनैवोक्तं—"यद्यात्मन्यरण्योर्वा समारूढेष्वग्निषु यजमानो म्रियेत पूर्ववदग्न्यायतनान्युद्धृत्यावोक्ष्य यजमानायतने प्रेतं निधाय गार्हपत्यायतनेऽग्निमुपसमाधाय प्रेतस्य दक्षिणं पाणिमभिसंगृह्य तत्पुत्रो भ्राताऽन्यो वा प्रत्यासन्नबन्धुः उपावरोहेति जपत्यरण्योर्वोपावरोह्य मन्थेद्यद्यरण्योस्समारूढस्स्यान्निर्वर्तमाने प्रेतमन्वारम्भयित्वेमं मन्त्रं जपेत्" इति । तथाच स्मृत्यन्तरं—

यद्यात्मनि समारूढो मृतोऽयं श्रुतिरुच्यते ।
मृतस्य दक्षिणं पाणिमन्वारभ्य जपेदिमम् ॥
उपावरोह जातवेदो यद्यरण्योस्तथा जपेत् ।
मथित्वाऽग्निं समाधाय वह्नेर्दक्षिणतः परे ॥

इति । यदा युगपज्जायापत्योर्मरणं तदा सहैव पितृमेधः । तदुक्तमापस्तम्बेन—'सहैव प्रेते सहैव पितृमेधः' इति । अत्र विभज्याग्निप्रदानं केचिदिच्छन्ति तदसदिति भाष्यकारेणोक्तम् । सर्वाधाने बहुभार्यस्य पूर्वं ज्येष्ठामरणे तत्राग्नीनुत्सृज्य द्वितीयया सहाधानादि । पुनस्तन्मरणे तत्राग्नीनुत्सृज्य पत्न्यन्तरेण सहाधानम् । पत्न्यन्तराभावे पुनः परिणीय तया सहाधानादि । परिणयनासामर्थ्ये आत्मार्थमग्न्याधानम् । तथाऽऽह शौनकः—

पत्न्योरेका यदि मृता दग्ध्वा तेनैव तां पुनः ।
आदधीतान्यया सार्धमाधानविधिना गृही ॥

इति । आपस्तम्बकल्पभाष्यार्थकारोऽपि—

भार्याद्वयत्वेऽपि मृते कळत्रे
तां दहेयुस्साहिताग्निनैव ।
ततः परस्तादनयोस्सहैव
आधानमग्नेर्विधिना पुनश्च ॥

स्मृत्यन्तरेऽपि—

बहुपत्नीकपक्षे तु ज्येष्ठा चेत्पूर्वमारिणी ।

तां दहेदग्निहोत्रेण पुनराधानमन्यथा ॥
कनिष्ठां तु मृतां पूर्वं दहेन्निर्मन्थ्यवह्निना ।
निर्मन्थ्य एव सर्वासामाहरेयुर्न केवले ॥

तत्रैव पूर्वं यजमानमरणे तस्याग्निहोत्रत्रेतायां पितृमेधः । पत्नीनां तु प्रेताधानमेव पूर्ववत् । अर्धाधाने त्वेकभार्यस्य पूर्वं यजमानस्य मरणे तस्याग्नित्रेतायां पितृमेधः । पत्न्या औपासनेन, 'तयोर्यः पूर्वं म्रियेत तस्याग्नित्रेतायां पितृमेधस्संपद्यते यः पश्चात्तस्यौपासनेन' इत्यापस्तम्बस्मरणात् । अत्रैव पूर्वं पत्नीमरणे तत्राग्निहोत्रमौपासनं चोत्सृज्य पुनः परणीय तया सहाधानम् । 'अथैनमुपोषति' इत्यारभ्य 'पुरस्तात्सभ्यावसथ्याभ्यामौपासनेन च' इत्यौपासनस्यापि प्रतिपत्तिविधानात् । पुनस्तन्मरणे तत्राप्ययमेव न्यायः । पुनर्ग्रहणासामर्थ्ये अत्मार्थमग्न्याधानादीति । अर्धाधाने त्वनेकभार्यस्य पूर्वं यजमानस्य मरणे तस्याग्नित्रेतायां पितृमेधः । पत्नीनां तु स्वैस्स्वैरौपासनाग्निभिः । तथाच त्रिकाण्डिः—

आहिताग्निर्यथान्यायं दग्धव्यस्त्रिभिरग्निभिः ।
अनाहिताग्निरेकेन यः पूर्वं पतिभार्ययोः ॥
स्याद्भार्ययोरन्यतरा मृता वा
दग्ध्वाऽखिलौपासनवह्निनैव ।
................ग्नेर्विधिवत्प्रदानं
कृत्वाऽन्यमौपासनमाददीत ॥

लौक्यानले वा यदि च द्विभार्य-
संगृह्यवह्निस्तु विभज्य दद्यात् ।
भागान्तरं वह्निमथाददीत-
नष्टे तु पूर्वाग्निमवाप्य पश्चात् ॥ इति ॥

इति स्मृतिचान्द्रिकायामग्निनिर्णयः.

## अथ संस्कर्तृनिरूपणम्.

तत्र पुत्रबहुत्वेऽग्निप्रदानं सर्वैर्न कर्तव्यं, अपितु ज्येष्ठेनैव कर्तव्यम् । तथाच मरीचिः—

सर्वैरनुमतिं कृत्वा ज्येष्ठेनैव तु यत्कृतम् ।
द्रव्येण चाविभक्तेन तत्सर्वैस्तु कृतं भवेत् ॥

इति । मत्स्यपुराणेऽपि—

प्रेतस्य पुत्रो दाहादि कुर्यादेवौरसस्सुतः ।
बहुत्वे तु गुणी दद्यात्समत्वे ज्येष्ठ एव तु ॥

इति । ऋष्यश्रृङ्गोऽपि—

पुत्राणां मध्यमो वाऽपि कनिष्ठो ज्येष्ठ एव वा ।
पितुर्यश्च प्रियतमस्सर्वं तेनैव कारयेत् ॥
पुत्रास्सर्वे पितृद्विष्टाः पत्नी भ्राता सखाऽपि वा ।
अग्निदाहादिकर्माणि कुर्युः पुत्रादयः पितुः ॥

इति । अग्निदानाधिकारी रोगादिनाऽशक्तश्चेदाह जमदग्निः—

ज्येष्ठपुत्रेण कर्तव्याः पिण्डदानोदकक्रियाः ।
अशक्तोऽप्यग्निदः पुत्रश्शेषमन्येन कारयेत् ॥

वसिष्ठोऽपि—

ज्येष्ठे सन्निहिते चार्ते वर्तमाने क्रियान्तरे ।
पित्रोः पुत्रेण कर्तव्यं द्वितीयेनानुजेन वा ॥
पित्रोस्सपिण्डीकरणं ज्येष्ठेनाकरणं यदि ।
पुनर्ज्येष्ठेन कर्तव्यं पिण्डनिर्वापणे कृते ॥
दम्पत्योर्मरणे मासे दशाहाभ्यन्तरे यदि ।
ज्येष्ठेनैव तु कर्तव्यं मातापित्रोस्तु तत्क्रियाः ॥

तथा पुत्राभावे सपिण्डादिना कर्तव्यम् । तथाऽऽह पारस्करः—

पुत्रो भ्राताऽथ दौहित्रो ज्ञातिजामातृकोऽपि वा ।
प्रथमेऽहनि यो दद्यात्स दशाहं समापयेत् ॥

पुत्राभावे पितृसपिण्डाश्शिष्याश्च । तदभावे ऋत्विगाचार्यादिः ।

भृगुरपि—

असगोत्रस्सगोत्रो वा यदि स्त्री यदि वा पुमान् ।
प्रथमेऽहनि यो दद्यात्स दशाहं समापयेत् ॥
अस्थिसंचयनादर्वागागतो यदि पुत्रकः ।
तदादि कर्म कुर्वीत दाहको विसृजेच्च तत् ॥
अस्थिसंचयनादूर्ध्वमागतो यदि पुत्रकः ।
प्रथमेऽहनि यो दद्यात्स दशाहं समापयेत् ॥

इति। तथा प्रथमेऽहनि यद्द्रव्यं पिण्डार्थं दशाहान्तं तदेवा-
द्रव्यम्। तदुक्तं शुनःपुच्छेन—

शालिना सक्तुभिर्वाऽपि शाकेनाप्यथ निर्वपेत्।
प्रथमेऽहनि यद्द्रव्य दशाहान्तं च तद्भवेत्॥

यज्ञपार्श्वः—

अपुत्रस्य तदासन्नो दद्यात्पिण्डोदकादिकम्।
आ समाप्तेः प्रतिदिनं त्वन्यथा किल्बिषी भवेत्॥

पित्रोस्संस्कारे ज्येष्ठ एव कर्ता, तदभावेऽसन्निधौ चानुजः। पुत्राभावे प्रत्यासन्नस्सपिण्डादिः। तदसन्निधानेऽनन्तरस्संस्करोति तथा, यथा दशाहमध्ये प्रत्यासन्नसान्निध्येऽपि स दशाहं समापयेत्, नोर्ध्वम्। यदि रोगादिना पुत्रादिरसमर्थो भवति तदा दशाहान्तमन्येन कारयेत्, आर्ते प्रतिनिधिदर्शना त्प्रायश्चित्तादर्शनाच्च। यदा तु 'असगोत्रस्सगोत्रः' इत्यादिना शाखान्तरकर्ता तदा स्वशाखया पितृमेधः। अन्यथा चेत्पुनस्संस्करणं कर्तव्यम्। तदाह कात्यायनः—

प्रक्रिया त्रिविधा प्रोक्ता विद्वद्भिः कार्यकारिभिः।
अक्रिया च परोक्ता च तृतीया चायथाक्रिया॥
स्वशाखाविधिमुत्सृज्य परशाखाश्रयं तु तत्।
कर्तुमर्हति दुर्मेधा मोघं तस्य च तत्फलम्॥
यन्नाम्नातं स्वशाखायां पारक्यमविरोधि यत्।
विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत्॥

यत्कर्मणि द्रव्यविधिर्यथोक्तस्तथैव कर्ता यदि चान्यथा स्यात् ।
तत्कर्म कुर्वीत पुनर्यथोक्तं तन्त्रस्य लोपे न पुनः क्रिया स्यात् ॥

प्रधानस्याक्रियायां तु साङ्गं तत्क्रियते पुनः ।
तदङ्गाकरणे कुर्यात्प्रायश्चित्तं न कर्म तत् ॥

इति । अत्र प्रधानस्य कर्मणोऽकरणे तत्साङ्गमेव पुनः कर्तव्यम् । तदङ्गाकरणे तस्याङ्गस्य नावृत्तिः । नापि तावन्मात्रस्याङ्गस्य करणं, किंतु प्रायश्चित्तमेव कार्यम् ॥

अथ स्त्रीणामग्निप्रवेशकर्मोच्यते.

*प्रवेशश्चानुगमनं स्त्रीणामेव विधीयते ।
अमन्त्रकं तु शूद्राणां प्रवेशविधिरुच्यते ॥

यस्यकस्यचिद्ब्राह्मणस्य मरणकाले संप्राप्ते तत्पत्नी मङ्गळस्नानं कृत्वा धौतवस्त्रं परिधायाचम्य गन्धपुष्पादीनि धृत्वा भर्तुस्समीपं गत्वा ब्राह्मणानाहूय 'पूर्वोक्तैवंगुणविशेषणविशिष्टायां पुण्यतीथौ विष्णुरूपेण भर्त्रा सह ब्रह्मलोके निवाससिद्ध्यर्थं भर्त्रा सहानुगमनं करिष्ये' इति संकल्प्य दर्भाक्षतसहितं जलं धृत्वा पतिव्रता पूर्वाभिमुखी समासीना—

सर्वकामप्रदायास्मै पतिरूपाय विष्णवे ।
मम देहं प्रदास्यामि स्थातुं वै स्वर्गमन्दिरे ॥
भूमिर्वियज्जलं तेजो वायुश्च जगदीश्वराः ।
सप्तर्षयश्च कालश्च साक्षिणस्सर्वदेवताः ॥

---

* कोशद्वयमध्ये एकस्मिन्नेव कोशे सहगमनप्रयोगोऽयमुपलभ्यते.

मत्कृतं पातकं यच्च मनोवाक्कायसंभवम् ।
तत्सर्वं नाशमाप्नोतु वह्नौ देहं विसर्जये ॥

अस्मै भर्त्रे श्रीमहाविष्णुस्वरूपाय मदीयब्रह्मलोकनिवाससिद्धिं कामयमानाऽमुकगोत्राय तुभ्यमहं संप्रददे न ममेति प्राणदानं कुर्यात् । कर्ता आसन्द्यां दक्षिणाग्रान् दर्भानास्तीर्य तत्र शवं निधाय शवस्य वामभागे तत्पत्नीं निधाय 'संगच्छध्वम्' इति दर्भरज्जुना प्रेतपत्नीं चाबध्य वाहकैर्नीयमानं प्रेतमनुगत्वा चितेर्दक्षिणभागे अग्निं प्रतिष्ठाप्य आज्यभागान्ते चितिमध्ये दक्षिणाशिरसं शवं निधाय पत्नीं तस्य वामभागे निक्षिप्य तयोर्भुजयोर्मध्ये 'मैनमग्ने' इत्यग्निं दत्त्वा ततः कर्ता प्राचीनावीती दर्भपाणिरञ्जलिं बध्वा 'सूर्यं ते चक्षुश्शरीरैरग्ने...............' इत्यनुमन्त्र्य स्रुवेणाज्यं गृहीत्वा 'य एतयोः पथो गोप्तारस्स्वाहा' इति हुत्वा दहेत् ॥ इत्यनुगमनविधिः ॥

अथाग्निप्रवेशप्रकार उच्यते.

यदा भर्तरि मृते सति पत्नी अनुगमनं कर्तुमसमर्था सती अग्निप्रवेशेन देहत्यागं कर्तुं वाञ्छति तदा पुत्रादिः कर्ता तां पतिव्रतामग्निं प्रवेशयेत् । मृते भर्तरि सति तत्पूर्वं पतिव्रता स्नात्वाऽऽचम्य भर्तुः प्राणदानं कृत्वा वाहकैर्नीयमानं प्रेतमनुमन्त्र्य स्मशानदेशं गत्वा भर्तुस्संस्कारान्ते तटाके वा

नद्यां वा स्नात्वा हरिद्रानुलेपनं गन्धपुष्पभूषणानि धृत्वा हरिद्रावस्त्रं च परिधायाचम्य भर्तुस्समीपं गच्छेत्। ततः पुत्रादिः कर्ता चितेरुत्तरभागे दक्षिणाग्रान् दर्भानास्तीर्य तत्र तामुपवेश्य दक्षिणाभिमुखं कृत्वा 'आप्यायस्व' इति तां पञ्चगव्या मार्जयित्वा 'आपोहिष्ठा मयो भुवः' इति 'हिरण्यवर्णाः' इति च मार्जयित्वा ततः प्रेतपत्नीं प्रेतसमीपे निधाय प्रेतभुजाग्नौ 'य एतस्य' इत्यादिनाऽऽज्याहुतीः पूर्णाहुतिं च हुत्वा आज्यस्थालीं स्रुवमग्निं प्रेतपत्नीं चितेः पश्चात् प्राङ्मुखमुपवेश्य पुनराज्यमानीय तस्याश्शिरसि दर्भाग्रेण धाराकारेण 'भूस्स्वाहा भुवस्स्वाहा सुवस्स्वाहा भूर्भुवस्सुवस्स्वाहा' इत्याज्यहोमं कुर्यात्। ततः प्रेतपत्नी चितेरुत्तरभागे दक्षिणाभिमुखी स्थित्वा साक्षतोदकमञ्जलिं गृहीत्वा—

त्रयीमय त्रिमूर्त्यात्मन् त्रैलोक्यैकप्रदीपक।
ग्रहनायक सप्ताश्व गृहाणार्घ्यं नमोस्तु ते॥

इति सूर्यायार्घ्यं दत्त्वा—

मनोवाक्कायजं भर्तुर्वाग्विलङ्घनजं च यत्।
तत्पापं नाशयाशु मां सप्तार्चिः नमोऽस्तु ते॥

इत्यग्नौ फलमेकं दत्त्वा प्रदक्षिणादिपूर्वकमग्निप्रवेशं कुर्यात्। एवं प्रेतं दग्ध्वाऽनन्तरं ज्ञातयस्सर्वान् केशान् वापयेयुः। अन्यकर्तुर्विषये यथाकृतकर्तृविशेषवचनानि श्राद्धप्रकरणगतानि॥

इति स्मृतिचन्द्रिकायां संस्कर्तृनिरूपणम्.

# अथ प्रेतदाहादिविषयाणि.

---

तत्र त्रिकाण्डीमण्डनः—

प्रत्यक्षे चाप्रतिहतौ संस्कारेण च शोधनम् ।
कुर्यात्तत्राधरोच्छिष्टे प्राजापत्यत्रयं चरेत् ॥
ऊर्ध्वोच्छिष्टेऽपिच तथा प्राजापत्यान् षडाचरेत् ।
पराशरस्तु त्रीन् प्राह भृगुः पञ्च षडङ्गिराः ॥
अस्पृश्यस्पृष्टमरणे कृच्छ्रान् षड्गौतमोऽब्रवीत् ।
प्रायश्चित्तं तु सर्वस्य शक्तो द्वादशवार्षिकम् ॥
विप्रवाक्यानुसारेण प्रत्याचार्यविधिर्यथा ।
कृत्वा तु दहनं कुर्यादन्यथा किल्बिषी भवेत् ॥
कर्ताऽधिकारसिद्ध्यर्थं त्रीन् कृच्छ्रान् पञ्च सप्त वा ।
चरेद्यद्वा तु दानाद्यैः पैतृमेधिकमाचरेत् ॥

त । दाहादिकं स्नपनानन्तरमेव कार्यम् । तदाह कात्यायनः—

दुर्बलं स्नापयित्वा तु शुद्धचेलाभिसंवृतम् ।
दक्षिणाशिरसं भूमौ बर्हिष्मत्यां निवेशयेत् ॥
घृतेनाभ्यक्तमाप्लाव्य सवस्त्रमुपवीतिनम् ।
चन्दनोक्षितसर्वाङ्गं सुमनोभिर्विभूषितम् ॥
तथा नळमयीं मालामाबध्य च विभूषितम् ।
हिरण्यशकलान्यस्य क्षिप्त्वा छिद्रेषु सप्तसु ॥

मुखे वस्त्रं पिधायैनं निर्हरेयुस्सुतादयः ।
प्राचीनावीतिनो भूत्वा गच्छेयुर्मौनमाश्रिताः ॥

इति । अत्र ब्राह्मणादिशवनिर्हरणे दिङ्नियमो मनुना दर्शितः—

दक्षिणेन मृतं शूद्रं पूर्वद्वारेण निर्हरेत् ।
पश्चिमोत्तरपूर्वेषु यथायोगं द्विजन्मनः ॥

इति । वसिष्ठः—

औदुम्बर्यामथासन्द्यां वहेदूर्ध्वमुखं शवम् ।
न ग्रामाभिमुखं नाधो नयेयुर्याम्यशीर्षकम् ॥
वृद्धाः प्रेतस्य पुरतः स्त्रियो बालाश्च पृष्ठतः ।
अधःकृतोत्तरीयास्स्युः प्रविमुक्तशिरोरुहाः ॥
गच्छेयुर्बान्धवाः पश्चात्राग्नेः प्रेतस्य चान्तरे ॥

इति । कात्यायनः—

आमपात्रेऽन्नमादाय प्रेतमग्निपुरस्सरम् ।
एकोऽनुगच्छेत्तस्यार्धमर्धं पथ्युत्सृजेद्भुवि ॥
अर्धमादहनं प्राप्त आसीनो दक्षिणामुखः ।
सव्यं जान्वाच्य शनकैस्सतिलं पिण्डदानवत् ॥

इति । पिण्डदानविधिना आदहनात् श्मशानपर्यन्तमासीनो भुवि निक्षिपेदित्यर्थः । गौतमः—

आग्नेय्यां वाऽथ नैर्ऋत्यां दाहदेशं प्रकल्पयेत् ।
उद्वास्य कण्टकान् वृक्षान् वानस्पत्यौषधीरपि ॥

ऊर्ध्वबाहुमितं गाम्यं खातं प्राग्दक्षिणायतम् ।
पञ्चारत्निमितं कुर्युरधस्ताद्द्वादशाङ्गुलम् ॥
दक्षिणाग्रान् कुशान् स्तीर्य तिलान् क्षिप्त्वाऽथ यावकान् ।
काष्ठैरूर्ध्वमुखं दद्यान्न नग्नं तु यथा हविः ॥

इति । व्याघ्रोऽपि—

नाधोमुखं न नग्नं च दहेयुर्मलदूषितम् ।
अयज्ञियसमिद्भिश्च चण्डालपतिताहृतैः ॥
क्रिमिकीटादिदुष्टैश्च न दहेत्तु चिरन्तनैः ।
वस्त्रं परित्यजेदर्धमर्धं तु परिधापयेत् ॥

प्रचेताश्च—

स्नानं प्रेतस्य पुत्राद्यैर्विधेयं पूजनं ततः ।
न नग्नं तु दहेद्वस्त्रं किंचिद्देयं परित्यजेत् ॥

अर्धं श्मशानवासिने देयमित्यर्थः । वृद्धपराशरः—

प्रेतस्पर्शनसंस्कारे ब्राह्मणो नैव दुष्यति ।
वोढा चैवाग्निदाता च सद्यस्स्नात्वा विशुध्यति ॥

तदनाथब्राह्मणविषयं,

अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजातयः ।
पदे पदे यज्ञफलमानुपूर्व्याल्लभन्ति ते ॥
न तेषामशुभं किंचित्पापं वा शुभकर्मणाम् ।
जलावगाहनात्तेषां सद्यश्शौचं विधीयते ॥

इत्युक्तत्वात् । यत्तु देवलेनोक्तं—

अह्नि चेद्दहनं कुर्यादूर्ध्वमस्तमयाद्रवेः ।
स्नात्वा गृहं विशेद्विप्रो रात्रौ चेदुदयाद्रवेः ॥

इति, यदपि हारीतेनोक्तं—'प्रेतस्पर्शे न ग्रामं प्रविशेयुरा नक्षत्रदर्शनाद्रात्रौ चेदादित्यस्य' इति, तन्मोहादिनाऽकरणीये वेदितव्यम् । यत्त्वङ्गिरसा—

यःकश्चिन्निर्हरेत्प्रेतमसपिण्डः कथंचन ।
स्नात्वा सचेलं स्पृष्ट्वाऽग्निं तस्मिन्नेवाह्नि वै शुचिः ॥

इति, तद्धनलोभादिना श्रोत्रियब्राह्मणनिर्हरणं कुर्वतोऽसपिण्डस्याशौचमस्तीत्येवंपरम् । तथाच मनुः—

असपिण्डं द्विजं प्रेतं विप्रो निर्हृत्य बन्धुवत् ।
विशुद्ध्यति त्रिरात्रेण मातुराप्तांश्च बान्धवान् ॥
यद्यन्नमत्ति तेषां हि स दशाहेन शुध्यति ।
अनदन्नन्नमह्नैव न चेत्तस्मिन् गृहे वसेत् ॥

इति । यस्तु प्रेतनिर्हरणं कृत्वा तस्मिन्नेव गृहे वसति न च तत्रान्नमश्नाति तत्र त्रिरात्रमाशौचं कार्यम् । गौतमः—'अवरश्चेद्वर्णः पूर्ववर्णमुपस्पृशेत्पूर्वो वाऽवरं तत्र शवोक्तमाशौचम्' इति । उपस्पर्शनं निर्हरणम् । ब्राह्मणस्य शूद्रशवनिर्हरणे दशरात्रमाशौचं भवतीत्यर्थः । यस्त्वर्थलोभादसवर्णशवनिर्हरणं करोति तस्य द्विगुणमाशौचं व्याघ्र आह—

अवरश्चेत्परं वर्णं परो वाऽप्यवरं यदि ।
वहेच्छवं तदाशौचं दृष्टार्थे द्विगुणं भवेत् ॥

इति । असवर्णे तु निर्हरणे यदुक्तमाशौचं तद्दृष्टार्थे द्विगुणमाशौचं भवतीत्यर्थः । यत्त्वादिपुराणं—

असवर्णं तु मूल्येन नीत्वा चैव दहेन्नरः ।
आशौचं तु भवेत्तस्य प्रेतजातिसमं सदा ॥

इति, तदापद्विषयम् । यस्तु सपिण्डमेव प्रेतं निर्हरति न तस्याशौचाधिक्यं, प्रेतनिर्हरणस्य विहितत्वात् । तथाऽऽह देवलः—

विहितं तु सपिण्डानां प्रेतनिर्हरणादिकम् ।
तेषां करोति यःकश्चित्तस्याधिक्यं न विद्यते ॥

आधिक्यं आशौचाधिक्यमित्यर्थः । समानोदकनिर्हरणे दशाहम् । तदाह स एव—

यस्समानोदकं प्रेतं वहेद्वाऽथ दहेत वा ।
तस्याशौचं दशाहं स्यादन्येषां तु त्र्यहं विदुः ॥

इति । ब्रह्मचारिणः प्रेतनिर्हरणे व्रतलोपोऽस्त्येव । तथाऽऽह देवलः—

ब्रह्मचारी न कुर्वीत शवदाहादिकाः क्रियाः ।
यदि कुर्याच्चरेत्कृच्छ्रं पुनस्संस्कारमेव च ॥

इति । पित्रादिशवदहने तु न दोषः । तदाहतुर्मनुदेवलौ—

आचार्यं स्वमुपाध्यायं पितरं मातरं गुरुम् ।
निर्हृत्य तु ब्रह्मचारी न व्रतेन वियुज्यते ॥

इति । ब्राह्मणशववहनादौ शूद्रं न नियोजयेत् । तदाह मनुः—

न विप्रं स्वेषु तिष्ठत्सु मृतं शूद्रेण वाहयेत् ।
अस्वर्ग्या ह्याहुतिस्सा स्याच्छूद्रसंस्पर्शदूषिता ॥

अत्र स्वेषु तिष्ठत्स्विति वचनं न विवक्षितं, अस्वर्ग्यत्वदोषश्रवणात् । मृतं द्विजं न शूद्रो निर्हरेच्छूद्रमपि न द्विज इति ॥

इति स्मृतिचन्द्रिकायां प्रेतदाहादिविषयाणि.

---

अथ दहनानन्तरकर्तव्यमाह याज्ञवल्क्यः—

सप्तमाद्दशमाद्वाऽपि ज्ञातयोऽभ्युपयन्त्यपः ।
अपनश्शोशुचदघमनेन पितृदिङ्मुखाः ॥

इति । सप्तमादिवसादर्वाग्दशमदिवसाद्वा ज्ञातयः समानगोत्रास्सपिण्डास्समानोदकाश्च 'अपनश्शोशुचदघं' इत्यनेन मन्त्रेण दक्षिणामुखा अपः अभ्युपयन्तीत्यर्थः । एतच्चायुग्मासु तिथिषु कार्यं 'प्रथमतृतीयपञ्चमसप्तमनवमेषूदकक्रिया' इति गौतमस्मरणात् । प्रचेतास्तु यावदाशौचं तावदित्याह—

दिनेदिनेऽञ्जलीन् पूर्णान् प्रदद्युः प्रेतकारणात् ।
तावद्वृद्धिः प्रकर्तव्या यावात्पिण्डस्समाप्यते ॥

तावदञ्जलिवृद्धिः कार्येत्यर्थः । अत्र प्रेतोपकारविशेषापेक्षया यावन्त्याशौचदिनानि तावदुदकदानावृत्तिः कार्या । ज्ञातिव्यतिरिक्तानामप्युदकदानं कर्तव्यमित्याह याज्ञवल्क्यः—

एवं मातामहाचार्यप्रेतानामुदकक्रिया ।
कामोदकं सखिप्रत्तास्वस्रीयश्वशुरर्त्विजाम् ॥

इति । प्रत्ता परिणीता दुहिता भगिनी च । स्वस्रीयो भागिनेयः । अत्र प्रेतानां मातामहादीनामसपिण्डानामुदकदानं नित्यं कार्यं, अकरणे प्रत्यवायश्रवणात् । सख्यादीनां तु कामतः, करणेऽभ्युदयः, अकरणे न प्रत्यवायः ॥

अत्र उदकदानविधिः.

सकृत्प्रसिञ्चन्त्युदकं नामगोत्रेण वाग्यताः ।

सपिण्डास्समानोदका बान्धवाश्च वृद्धपूर्वा अमुकनामा प्रेतोऽमुकगोत्रस्तृप्यत्विति सकृदेवोदकं सिञ्चेयुः प्रत्यहम् । ब्रह्मपुराणेऽपि—

शवं दग्ध्वा यथान्यायं दृष्ट्वा ज्योतींषि बान्धवाः ।
तिलाङ्गारान्* पुरस्कृत्य गच्छेयुः पुत्रसंयुताः ॥
शुद्धमस्फुटितं श्लक्ष्णं श्यामं लोहितमेव वा ।
पाषाणं तत आदाय गत्वा तत्र महाजलम् ॥
सचेलं दण्डवत्स्नात्वा मलं प्रक्षाल्य वर्ष्मजम् ।
महाजलं संप्रविश्य वस्त्रं संशोध्य वारिणा ॥

* बालान् दारान्. पा.

पुनस्सचेलं स्नात्वाऽथ वाग्यतास्सुसमाहिताः ।
वृद्धपूर्वास्सगोत्राश्च बान्धवाश्च समोदकाः ॥
सपिण्डाश्च क्रमात्पुत्राः प्राचीनावीतिनस्तथा ।
दक्षिणाभिमुखास्सर्वे दक्षिणाग्रकुशेषु हि ॥
पाषाणं तत्र निक्षिप्य कृत्वा तु पुरतोऽवटम् ।
नामगोत्रे समुच्चार्य प्रेतस्तृप्यत्विति ब्रुवन् ॥
गर्ते सकृत्प्रसिञ्चेयुस्तिलपूर्णं जलाञ्जलिम् ।
पित्रोस्तु यावदाशौचं तावत्कुर्याज्जलाञ्जलीन् ॥
यद्वा शताञ्जलीन् दद्यात्प्रथमेऽह्न्येकमञ्जलिम् ।
द्वितीये त्रीनञ्जलींश्च तृतीये पञ्च सप्त च ॥
चतुर्थे पञ्चमेऽह्न्येव नव दद्याज्जलाञ्जलीन् ।
एकादशाञ्जलीन् षष्ठे सप्तमे तु त्रयोदश ॥
पञ्चदशाष्टमे चैव ततस्सप्तदशाञ्जलीन् ।
एकोनविंशतिं दद्युर्दशमे तु शताञ्जलीन् ॥
सप्तत्यञ्जलयः केचित्त्रीणि सप्त च पञ्च वा ।
सप्ताष्टनवसंख्यास्स्युर्द्विदिने तु दशैव तु ॥
त्रिरात्राशौचिनः कुर्युः प्रथमे त्रिंशदञ्जलीन् ।
चत्वारिंशाद्द्वितीयेऽह्नि त्रिंशद्द्यादतश्शुचिः ॥
सप्तत्यञ्जलिपक्षे तु प्रथमेऽह्नि द्वितीयके ।
एकैकविंशतिं दद्यात्तृतीये शेषतश्शुचिः ॥

इति । प्रचेता अपि—

दिनेदिनेऽञ्जलीन् पूर्णान् प्रदद्यात्प्रेतकारणात् ।
तावद्वृद्धिः प्रकर्तव्या यावत्पिण्डस्समाप्यते ॥

तावदञ्जलिवृद्धिः कार्येत्यर्थः । पैठीनसिः—'स्नात्वा शुचिः प्रेतं मनसा ध्यायन् दक्षिणाभिमुखस्त्रीनुदकाञ्जलीन्निनयेच्छ- हप्रभृत्येकादशेऽह्नि विरमेत्' इति । वसिष्ठः—'शरीरम- ा संस्कृत्यानवेक्षमाणा अपोऽभ्यवयन्ति सव्येतराभ्यां गभ्यामुदकक्रियां कुर्वीरन्नयुग्मासु दक्षिणामुखाः' इति । ारीतः—'निर्हृत्य संस्कर्ताऽपो गत्वाऽऽप्लाव्य असौ तृप्यता- मित्युदकाञ्जलिं निनयति' इति । शङ्खलिखितौ—'अथोदक- क्रिया प्रेतस्य बान्धवा यथावृद्धमुदकमवतीर्य नोत्कर्षेयुरपः* प्रसिञ्चेरन् सकृद्दक्षिणामुखाः ब्राह्मणस्य उदङ्मखाः प्राङ्मु- खाश्च राजन्यवैश्ययोरपसव्यवासोयज्ञोपवीतिन एतच्च तत' इति । कात्यायनः—

तथाऽनवेक्षमेत्यापस्सर्व एव शवस्पृशः ।
स्नात्वा सचेलमाचम्य दद्युरस्योदकं स्थले ॥
गोत्रनामानुवादान्ते तर्पयामीत्यनन्तरम् ।
दक्षिणाग्रान् कुशान् कृत्वा सतिलं च पृथक्पृथक् ॥
दिनेदिनेऽञ्जलिं पूर्णं प्रदद्यात्प्रेतकारणात् ।
तावद्वृद्धिश्च कर्तव्या यावत्पिण्डस्समाप्यते ॥

* नोद्वर्षेयुरपः.

इति । प्रचेताः—

नदीकूलं तथा गत्वा शौचं कृत्वा यथार्थवत् ।
वस्त्रं संशोधयेदादौ ततः स्नानं समाचरेत् ॥
सचेलस्तु पुनस्स्नात्वा शुचिः प्रयतमानसः ।
पाषाणं तत आदाय विप्रो दद्याद्दशाञ्जलीन् ॥
द्वादश क्षत्रियो दद्याद्वैश्ये पञ्चदश स्मृताः ।
त्रिंशच्छूद्रस्य दातव्यास्ततस्त्वं प्रविशेद्गृहम् ॥
ततस्स्नानं पुनः कार्यं गृहशौचं च कारयेत् ।

इति । बालानामकृतनामधेयानां न किंचित्कर्तव्यमित्याह मनुः—

अजातदन्ता ये बाला ये च गर्भाद्विनिस्सृताः ।
न तेषामग्निसंस्कारो न विधिर्नोदकक्रिया ॥

इति । आपस्तम्बः—"मातुश्च योनिसंबन्धिभ्यः पितुश्चासप्तमात्पुरुषाद्यावतां संबन्धो ज्ञायते तेषां प्रयतेषूदकोपस्पर्शनं गर्भं परिहाप्योपरिसंवत्सरान्मातापितरावेव कर्तारश्च भार्यायां परमगुरुसंस्थायां वाऽऽकालमभोजनमातुरव्यञ्जनानि कुर्वीरन् केशान् प्रकीर्य पांसूनोप्यैकवाससो दक्षिणामुखास्सकृदुपमज्ज्योत्तीर्य वासः पीडयित्वोपविशन्त्येवं त्रिस्तत्प्रत्ययं तिलमिश्रमुदकं सगोत्रं नामधेयमुच्चार्योत्सिच्याप्रतीक्षास्तूष्णीं ग्राममेस यत्स्त्रिय आहुस्तत्कुर्वन्तीतरेषु चैतदेके" इति । अमुकगोत्रायामुकशर्मणे एतत्तिलोदकं ददामीति प्रयोगः । एव-

मुदकं दत्त्वा पृष्ठतोऽनवेक्षमाणा ग्राममभ्येत्य गृहं प्रविश्य यत्स्त्रिय आहुस्तत्कुर्वन्ति । इतरेषु भार्यादिभ्योऽन्येष्वपि मृतेष्वाकालम-भोजनं कर्तव्यमित्येके आचार्या अतिदिशन्ति, स्वमतं तु मातापितृगुरुष्वेव । एवमुक्तविधानेनोदकदानानन्तरं पिण्ड-दानं कर्तव्यम् । तदुक्तं ब्रह्मपुराणे—

ग्रामाद्बहिश्शुचौ देशे गोमयेनोपलेपिते ।
लौकिकाग्निं प्रतिष्ठाप्य स्नात्वा पात्रेण तेजसा ॥
मृन्मयेनापि कर्तव्यं श्रपणं पितृयज्ञवत् ।
अभिघार्य तमुद्वास्य पुनरप्यभिघार्य च ॥
पाषाणं पुरतस्स्थाप्य वाग्यतो दक्षिणामुखः ।
दक्षिणाग्रान् कुशान् स्तीर्य दद्यात्तेषूदकं सकृत् ॥
नामगोत्रे समुच्चार्य पिण्डं दद्यात्समन्त्रकम् ।
पुनस्तिलोदकं दद्यादेवं दशादिनेषु तु ॥
अशक्तौ प्रथमेऽह्नि स्यात्पञ्चमे दशमेऽपि वा ।
त्रिरात्राशौच उत्पन्ने त्रयः पिण्डा दशैव वा ॥
उदकं पिण्डदानं च पुनरप्युदकं नयेत् ।
वायसेभ्यो बलिं दद्याद्दिवस्वतवरं स्मरन् ॥
अग्नौ जले वा निक्षिप्य स्नात्वा शश्वद्गृहं व्रजेत् ।
ब्राह्मणे दश पिण्डास्स्युः क्षत्रिये द्वादश स्मृताः ॥
वैश्ये पञ्चदश प्रोक्ताः शूद्रे त्रिंशत्प्रकीर्तिताः ॥

इति । शातातपोऽपि—

आशौचस्य तु निर्ह्रासे पिण्डान् दद्युर्दशैव तु ।

इति । दशपिण्डनियमनं ब्राह्मणविषयम् । अत्र पिण्डसंख्यानियमविशेषो यमेन दर्शितः—

दश पिण्डा ब्राह्मणस्य द्वादश क्षत्रियस्य तु ।
दश पञ्च च वैश्यस्य शूद्रस्य त्रिंशदेव तु ॥

इति । स्मृत्यन्तरेऽपि—

नवभिर्दिवसैर्दद्यान्नव पिण्डान् समाहितः ।
दशमं पिण्डमुत्सृज्य रात्रिशेषे शुचिर्भवेत् ॥

इति । यत्तु स्मृत्यन्तरं—

सायं प्रातर्द्विजाग्र्याणां पिण्डमप्युदकं ततः ।
विंशतिं पिण्डमुत्सृज्य ब्राह्मणश्शुचितामियात् ॥

इति, तत् येषां शाखिनां गृह्ये सायं प्रातरित्युक्तं तच्छाखिनामेव, नान्येषाम् । आशौचनिर्ह्रासपक्षे पारस्करः—

प्रथमे दिवसे दद्यात्त्रीन् पिण्डान् सुसमाहितः ।
द्वितीये चतुरो दद्यादस्थिसंचयनं ततः ॥

त्रींस्तु दद्यात्तृतीयेऽह्नि वस्त्रादीन् क्षाळयेत्ततः ।

इति । विष्णुः—'प्रेतस्योदकनिर्वापणं कृत्वैकपिण्डं कुशेषु दद्युः' इति । प्रत्येकमिति शेषः । दद्युरित्युदकदानोपलक्षणं पिण्डदानम् । तिलोदकपिण्डदाने विशेषमाह विष्णुः—

तिलोदकं तथा पिण्डं नवश्राद्धं तथैव च ।
रात्रौ न कुर्यात्सन्ध्यायां यदि कुर्यान्निरर्थकम् ॥

इति । अत्रापकर्षमाह पारस्करः—

गृहीत्वा प्रेतपाषाणं गच्छेद्देशविपर्यये ।
अपकृष्यापि कुर्वीत न त्वेतदवशेषयेत् ॥
उदकं पिण्डदानं च दशाहाभ्यन्तरं तु यत् ।
कार्यमेतद्दशाहे तत्सर्वं पूर्ववदाचरेत् ॥

इति । शिलादिविपर्यये स्मृत्यन्तरं—

आशौचमध्ये पाषाणो यदि नश्येच्छिलान्तरे ।
पूर्वदत्ताञ्जलीन् दद्यात्पिण्डदानं समापयेत् ॥
प्रथमेऽहनि यः कर्ता नारी वा पुरुषोऽथवा ।
आ दशाहं प्रकुर्वीत पिण्डदानोदकक्रियाः ॥
यदि भ्रष्टो मृतो वाऽपि कर्ता अन्यस्समापयेत् ।
तेनैव कारयेत्पिण्डानुदकं तु सपिण्डकैः ॥

इति । अन्तर्दशाहे दर्शादिसंभवे ऋश्यशृङ्गः—

आशौचमन्तरा दर्शो यदि स्यात्सर्ववर्णिनः ।
समाप्तिं प्रेततन्त्रस्य कुर्युरित्याह गौतमः ॥

इति । भविष्यत्पुराणे—

प्रवृत्ताशौचतन्त्रस्तु यदि दर्शं प्रपद्यते ।
समाप्य चोदकं पिण्डं स्नानमात्रं समाचरेत् ॥

इति । पैठीनसिः—

आर्धेन्दवे तु कर्तव्याः पिण्डदानोदकक्रियाः ।
द्विरैन्दवे तु कुर्वाणः पुनश्शावं समश्नुते ॥
त्रयोदश्यां कलामात्रतिथौ यस्य मृतिर्भवेत् ।
नातिक्रम्य सिनीवालीं कुर्यात्तस्योदकक्रियाः ॥

अङ्गिराः—

चतुर्दशीक्षणमृतस्ततः प्राप्तोत्तमातिथिः ।
पिण्डोदकं दशाहान्तं तस्मिन्नेवाहनि क्षिपेत् ।
एकादशेऽहनि श्राद्धं कुर्यादित्यङ्गिरोऽब्रवीत् ॥

इति । एतत्सर्वं मातापितृव्यतिरिक्तविषयम् । तिथिद्वये विशेषमाह गालवः—

पित्रोराशौचमध्ये तु यदि दर्शस्समापतेत् ।
तावदेवोत्तरं तन्त्रं पर्यवस्येत्र्यहात्परम् ॥

इति । स्मृत्यन्तरेऽपि—

पित्रोराशौचमध्ये तु दर्शश्चेत्त्रिदिनात्परम् ।
तावदेवोत्तरं तन्त्रं समाप्यमिति निश्चयः ॥
दशाहमध्ये दर्शश्चेत्पिण्डदानं तिलोदकम् ।
पितृभ्यां तु विनाऽन्येषां दर्शेनैव समापयेत् ॥

इति । वसिष्ठः—

अन्तर्दशाहे दर्शश्चेत्तन्त्रं सर्वं समापयेत् ।
पित्रोस्तु यावदाशौचं तावत्कुर्यादतन्द्रितः ॥

दर्शस्संक्रमणं वाऽपि दशाहान्तर्यदा भवेत् ।
अन्येषां प्रेतकार्याणि समाप्यानीति चापरे ।
सा तिथिर्यद्यतिक्रान्ता प्रेतत्वं न च मोचयेत् ॥

इति । गालवः—

अशौचमन्तरा दर्शो यदि स्यात्सर्ववर्णिनः ।
पिण्डदानोदकं सर्वमपकृष्य समापयेत् ॥
दद्यादपस्सपिण्डानां समानोदकिनां तथा ।
द्विचन्द्रदर्शनात्सद्यः सकलं कर्म नश्यति ॥ इति ॥

इति स्मृतिचन्द्रिकायां दहनान्तरकर्तव्यनिरूपणम् ॥

---

एवमुदकदानानन्तरं बान्धवैराश्वासनं कार्यमित्याह याज्ञवल्क्यः—

कृतोदकान् समुत्तीर्णान् मृदुशाद्वलसंस्थितान् ।
स्नातानपवदेयुस्तानितिहासैः पुरातनैः ॥

इति । कात्यायनोपि—

एवं कृतोदकान् सम्यक् सर्वान् शाद्वलसंस्थितान् ।
आप्लुत्य पुनराचान्तान् वदेयुस्तेऽनुयायिनः ॥
मा शोकं कुरुतानित्ये सर्वस्मिन् प्राणिधर्मिणि ।
धर्मं कुरुत यत्नेन यो वस्सह गमिष्यति ॥
मानुष्ये कदलीस्तम्भनिस्सारे सारमार्गणम् ।
यः करोति स सम्मूढो जलबुद्बुदसंनिभे ॥
पञ्चधा संभृतः कायो यदि पञ्चत्वमागतः ।
कर्मभिस्स्वशरीरोत्थैः का तत्र परिदेवना ॥

अयमर्थः—जन्मान्तरात्मीयशरीरजनितैः कर्मभिः स्वैः स्वफलोपभोगार्थं पृथिव्यादिपञ्चमहाभूतात्मतया पञ्चप्रकारसंभृतो निर्मितः कायः यदि फलभोगनिवृत्तौ पञ्चत्वमापन्नः पृथिव्यादिरूपतां प्राप्तः तत्र भवतां किमर्थं परिवेदना, निष्प्रयोजनत्वान्न कार्या। किंच—

गन्त्री वसुमती नाशमुदधिर्दैवतानि च।
फेनप्रख्यः कथं नाशं मर्त्यलोको न यास्यति॥

उचितमेव शरीराणां मरणमतश्शोको निष्प्रयोजन इत्यर्थः। रोदने दोषमाह स एव—

श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः।
अतो न रोदितव्यं हि क्रियाः कार्याः प्रयत्नतः॥

इति। बान्धवादीनामन्येषां रोदने दोषमाह पारस्करः—

अस्थिसंचयनादर्वाग्रुदित्वा स्नानमाचरेत्।
अन्तर्दशाहे विप्रस्य ऊर्ध्वमाचमनं स्मृतम्॥

विप्रस्य मृतस्य दशाहाभ्यन्तरेऽस्थिसंचयनादर्वाग्ब्राह्मणक्षत्रियादी रुदित्वा स्नानमाचरेत्।

मृतस्य यावदस्थीनि ब्राह्मणस्य हृतानि तु।
तावद्यो बान्धवस्तत्र रौति तद्बान्धवैस्सह॥
तस्य स्नानाद्भवेच्छुद्धिः ततस्त्वाचमनं स्मृतम्।
सचेलस्नानमन्येषामकृते त्वस्थिसंचये॥
कृते तु केवलं स्नानं क्षत्रविट्शूद्रजन्मनाम्॥

ब्राह्मणस्य क्षत्रियवैश्यशूद्रमरणविषये रोदने अस्थिसंचयना-दर्वागेकाहमाशौचं सचेलस्नानं च। अत ऊर्ध्वं स्नानमात्रम्। तथाऽऽह पारस्करः—

अस्थिसंचयने विप्रो रौति क्षत्रियवैश्ययोः।
तदा स्नातस्सचेलस्तु द्वितीयेऽहनि शुद्ध्यति॥
कृते तु संचये विप्रः स्नानेनैव शुचिर्भवेत्॥

ब्रह्मपुराणेऽपि—

अस्थिसंचयनादर्वाग्यदि विप्रोऽश्रु पातयेत्।
मृते शूद्रे गृहं गत्वा त्रिरात्रमशुचिर्भवेत्॥
अस्थिसंचयनादूर्ध्वं मासि यावद्द्विजातयः।
अहोरात्रेण शुद्ध्यन्ति वासःप्रक्षाळनेन च॥
अज्ञाते दिवसेनैव द्व्यहात् क्षत्रियवैश्ययोः।
स्पृशन् विनाऽनुगमनं शूद्रो नक्तेन शुध्यति॥
एतत्सर्वं सपिण्डानां विहितत्वाद्यथाविधि।
विहितं तु सपिण्डस्य प्रेतनिर्हरणादिकम्॥
दोषस्स्यादसपिण्डस्य तत्रानाथक्रियां विना।
सपिण्डानामदोषस्स्यादा स्मशानात्तु रोदने॥
ऊर्ध्वं प्रेतस्य दोषोऽस्ति त्रिरात्रेणैव बान्धवाः।

इति। शवानुगमने दोषमाह याज्ञवल्क्यः—

ब्राह्मणेनानुगन्तव्यो न शूद्रो न क्वचिद्द्विजः।
अनुगम्याम्भसि स्नात्वा स्पृष्ट्वाऽग्निं घृतभुक्छुचिः॥

इति । तदा घृतप्राशनस्य भोजनकार्यविधानेन प्रमाणाभावाच्च भोजनप्रतिषेधः । उक्तं ब्रह्मपुराणे—

सवर्णमुत्तमं वाऽपि प्रेतस्नेहादिना यदि ।
कृतेऽनुगमने स्नात्वा स्पृष्ट्वाऽग्निं घृतभुक्छुचिः ॥
विप्रस्तु क्षत्रियं प्रेतमनुगम्य तु बन्धुवत् ।
ततस्स्नात्वाऽनलं स्पृष्ट्वा घृतं प्राश्य दिनं क्षपेत् ॥
वैश्यानुगमनं कृत्वा पक्षिण्याशौचमाचरेत् ।
शूद्रानुगमनं कृत्वा त्रिरात्रेण विशुध्यति ॥

इति । विप्रश्शूद्रानुगमने त्रिरात्रमाशौचं कृत्वा समुद्रगायां नद्यां स्नात्वा प्राणायामशतं कृत्वा घृतं प्राश्य शुध्येत् । क्षत्रियवैश्यानुगमने त्वेकाहमाशौचं, क्षत्रियस्य शूद्रानुगमने पक्षिणी, वैश्यस्य शूद्रानुगमने त्वेकाहं रोदने चैवमिति ॥

इति स्मृतिचन्द्रिकायामातुराश्वासनादिनिरूपणम्.

---

## अथास्थिसंचयनम्.

---

तत्र संवर्तः—

प्रथमेऽह्नि तृतीये वा सप्तमे नवमेऽपि वा ।
अस्थिसंचयनं कार्यं दिवा तद्गोत्रजैस्सह ॥

इति । पारस्करोऽपि—

प्रथमेऽह्नि तृतीये वा पञ्चमे सप्तमे तथा ।
अस्थिसंचयनं कार्यं ज्ञातिभिस्सह बान्धवैः ॥

इति । विष्णुः—'चतुर्थे ह्यस्थिसंचयनं कुर्यात्तेषां गङ्गाम्भसि प्रक्षेपः' इति । कात्यायनः—

अपरेद्युस्तृतीये वा पञ्चमे सप्तमेऽपि वा ।
नवमे दशमे वाऽपि ह्यस्थिसंचयनं भवेत् ॥
यस्तत्र विधिरादिष्टः ऋषिभिस्सोऽधुनोच्यते ।
स्नानान्तं पूर्ववत्कृत्वा गव्येन पयसा ततः ।
सिञ्चेदस्थीनि सर्वाणि प्राचीनावीत्यभाषयन् ॥
शमीपलाशशाखाभ्यामुद्धृत्यास्थीनि भस्मतः ।
आज्येनाभ्यज्य गव्येन सेचयेद्गन्धवारिणा ॥
मृत्पात्रसंपुटे कृत्वा सूत्रेण परिवेष्ट्य च ।
श्वभ्रं खात्वा शुचौ भूमौ निखनेद्दक्षिणामुखः ॥
पूरयित्वाऽवटं पङ्कपिण्डशैवालसंयुतम् ।
दत्त्वोपरि समं शेषं कुर्यात्पूर्वाह्णकर्मणा ॥
एष एव गृहीताग्नेः प्रेतस्य विधिरुच्यते ।
अस्थिसंचयनं यागो देवतानां प्रकीर्तितः ॥
प्रेतीभूतं तथोद्दिश्य यश्शुचिर्न करोति चेत् ।
देवतानां तु यजनं तं शपन्त्यथ देवताः ॥
पूर्वं दग्धास्स्मशानेषु देवताः परिकीर्तिताः ।

तूष्णीं प्रत्येकं पुष्पं च धूपं दीपं तथैव च ॥
अञ्जनाभ्यञ्जने चैव पानीयमनुलेपनम् ॥

इति । अस्थिसंचयने वारनक्षत्रतिथिविशेषो यमेनोक्तः—

भौमार्कमन्दवारेषु तिथियुग्मेषु चैव हि ।
वर्जयेदेकपादर्क्षे त्रिपादर्क्षेऽस्थिसंचयम् ॥
प्रदातृजन्मनक्षत्रे त्रिपादर्क्षे विशेषतः ॥

इति । ब्रह्मपुराणे—

अनाहिताग्नेर्मरणादाहिताग्नेस्तु दाहतः ।
अस्थिसंचयनं कार्यं स्वशाखोक्तविधानतः ॥
विभज्य च त्रिधाऽऽशौचं पूर्वभागे तु कारयेत् ।
मध्यमो मध्यभागस्स्यात्तृतीयस्त्वधमस्स्मृतः ।
अपराह्णं च रात्रिं च वर्जयेत्सर्वथा द्विजः ॥
चन्द्रज्ञवारौ शुभदौ मध्यमौ शुक्रसूर्यजौ ।
शेषास्त्वशुभदा वारा द्विपदानि तु मध्यमाः ॥
त्रिपदर्क्षाणि वर्ज्यानि भद्रयोगा तिथिस्तथा ।
गच्छेद्वृद्धं पुरस्कृत्य स्मशाने दक्षिणामुखः ॥
क्षीरमिश्रोदकैः प्रोक्ष्य शाखया हि शमीजया ।
अङ्गुष्ठोपकनिष्ठाभ्यां पादानां मस्तकावधि ॥
अस्थीन्यादाय कुम्भे वा स्थाप्य गर्ते विनिक्षिपेत् ।
अस्थ्नां कृत्वा तु संशुद्धिं केशवाद्यैश्च नामभिः ॥
प्रक्षाल्य पञ्चगव्येन पुष्पाद्यैस्संप्रपूजयेत् ॥

द्विजानुज्ञामवाप्यैव गङ्गायां सुसमाहितः ।
उच्चरेद्गोत्रनामानि संकल्पं च यथाविधि ॥
अघमर्षणसूक्तेन धर्मायैव नमोऽस्त्विति ।
विसर्जयेज्जलेऽस्थीनि यावदस्थीनि तज्जपेत् ॥
यावदस्थि मनुष्याणां गङ्गातोयेषु तिष्ठति ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥
अजिनाविकसूत्रैश्च क्षौमकौशेयपट्टकैः ।
कुशरज्ज्वा दृढं बद्ध्वा पूर्वोक्तविधिना क्षिपेत् ॥

इति । मत्स्यपुराणे—

साङ्गसंस्कारमारभ्य दाहाद्भृत्यान्तरस्य तु ।
प्रथमेऽह्नि द्वितीये वा तृतीये वा चतुर्थके ॥
पञ्चमे सप्तमे वाऽपि नवमे वा शुभे दिने ।
ज्योतिर्विदोक्तसमये स्वशाखोक्तविधानतः ॥
अस्थिसंचयनं कृत्वा तथा तद्भस्मवेदिकाम् ।
यवगोधूमपिष्टैर्वा शालिपिष्टैर्मृदाऽपि वा ॥
चित्रवर्णैस्तु कुर्वीत पूजयेत्तु शिलात्रयम् ।
तत्सखिभ्योऽपरः पितृक्रमादप्युदकाञ्जलीन् ॥
दत्वाऽस्थीनि च गङ्गायां प्रक्षिपेत् भुवि वा क्षिपेत्
तीर्थान्तरे शुद्धदेशे कुरुक्षेत्रे विसर्जयेत् ॥ इति ॥

इति स्मृतिचन्द्रिकायामस्थिसंचयनम्.

अथ वपनम् । तच्च दशमेऽहनि कार्यम् । तदाह देवलः—

दशमेऽहनि संप्राप्ते स्नानं ग्रामाद्बहिर्भवेत् ।
तत्र त्याज्यानि वासांसि केशश्मश्रुनखानि च ॥

इति । पारस्करोऽपि—

द्वितीयेऽहनि कर्तव्यं क्षौरकर्म प्रयत्नतः ।
तृतीये पञ्चमे वाऽपि सप्तमे वाऽऽप्रदानतः ॥

इति । प्रदानमेकादशाहादिकं श्राद्धम् । प्रदानवचनानियमोऽवगम्यते । बोधायनः—

अनुप्तकेशो यः पूर्वं श्रुत्वा केशान् प्रवापयेत् ।
प्रथमेऽह्नि तृतीये वा पञ्चमे सप्तमेऽपि वा ॥
यावच्छ्राद्धं प्रदीयेत तावदित्यपरं मतम् ॥

इति । अत्र पुत्राणां वपनं नियतम्,

गङ्गायां भास्करक्षेत्रे मातापित्रोर्गुरोर्मृतौ ।
आधानकाले सोमे च वपनं सप्तसु स्मृतम् ॥

इति वचनात् । तत्र च—

पुत्राभावे तु पौत्रो वा तत्पुत्रः पुत्रिकासुतः ।
केशानां वपनं कृत्वा पैतृमेधिकमाचरेत् ॥

अत्र सपिण्डानां वपनमैच्छिकम् । आपस्तम्बः—'अनुभाविनां च परिवापनम्' इति । अनु पश्चाद्भवन्ति जायन्त इत्यनुभाविनो भ्रातरः । तेषां श्राद्धदिनादर्वाक्परिवापनं कर्तव्यम् । उक्तं स्याद्गृह्यकारेण—

केशान् प्रकीर्य वा पांसूनावपेयुस्सनाभयः ।
शिरसो वपनं कर्तुरूर्ध्वं तेषां यथेच्छया ॥

इति । तेषां सपिण्डानाम् । गृह्यपरिशिष्टे—

प्रकीर्य केशानित्याहुराचार्यास्तैत्तिरीयकाः ।
तत्क्रिया सामगैर्नोक्ता बह्वृचानां यथा श्रुतिः ॥
बह्वृचानां सपिण्डानामिच्छया केशवापनम् ।
दशमेऽहनि सर्वेषां क्षुरकर्म प्रशस्यते ॥

इति । वपनस्नानमुक्तं स्मृत्यन्तरे—

कूले चतुष्पथे वाऽपि महावृक्षस्य सन्निधौ ।
केशश्मश्र्वादिवपनं कुर्युरत्रानुभाविनः ॥

इति । विशेष उक्तस्स्मृत्यन्तरे—

मातामहापितृव्याणां मातुलाग्रजयोर्मृतौ ।
श्वशुराचार्ययोश्चैषां पत्नीनां च पितृष्वसुः ॥
मातृष्वसुर्भगिन्याश्च गर्भवानपि वापयेत् ।
विदेशेऽपि मृतिं पित्रोः श्रुत्वा चैवं गुरोर्मृतिम् ।
कुर्याच्च वपनं सद्यः सचेलस्नानमाचरेत् ॥

इति । यत्तु वचनं—

नोदन्वदम्भसि स्नानं न च श्मश्रुनिकृन्तनम् ।
अन्तर्वत्न्याः पतिः कुर्वन् व्रजेत नरकं ध्रुवम् ॥
व्यक्ते गर्भे च सीमन्ते विवाहे क्षौरमाचरेत् ।
क्षौरमा प्रसवान्नोक्तमन्यत्र वचनाद्भवेत् ॥

न विवाहदिने क्षौरं प्रशस्तं निशि काम्यया ।
पूर्वे कर्त्राऽथ कर्तव्यं पश्चाद्वा पञ्चमेऽहनि ॥

इति, तत् पित्रादिमरणव्यतिरिक्तविषयम् ।

यत्किंचन कृतं पापं नृणां केशेषु तिष्ठति ।
तस्मात्तु वपनं कार्यं श्राद्धमावश्यकं ततः ॥

इति स्मृतिचन्द्रिकायां वपनविषयः.

## दशमाहकृत्यम्.

अत्र दशमेऽहनि क्रियाविशेषाः पारस्करेण दर्शिताः—

दशमेऽहनि पूर्वाह्णे क्षुरकर्म यथाश्रुति ।
स्नानं सचेलमाचम्य गृहाशौचं यथोदितम् ॥
ज्ञातिबन्धुजनैस्सार्धं गत्वा तत्र महाजलम् ।
स्नात्वा धर्मोदकं तूष्णीं पितृयज्ञविधानतः ॥
दद्यात्पिण्डत्रयं चाधो दक्षिणो यमदैवतः ।
मध्ये प्रेताय चोत्सृज्य रौद्रमुत्तरबर्हिषि ॥
अञ्जनाभ्यञ्जने चैव छत्रोपानत्स्रगादिकान् ।
देवताभ्यस्समुत्सृज्य वारिपूर्णं नवं घटम् ॥
प्रार्थयेच्च ततो बन्धून् प्रार्थिताश्चोदकाञ्जलीन् ।
नामगोत्रे समुच्चार्य दद्युस्त्रिरपि वा दश ॥

पाषाणं पुरतस्स्थाप्य यद्वा दर्भास्तृते भुवि ।
उपवीतिन उत्थाय पाषाणं तु विनिक्षिपेत् ॥
जलमध्ये महावृक्षमूले वाऽथ चतुष्पथे ।
कुर्युरभ्यञ्जनं सर्वे वासांसि कुसुमानि च ॥
गन्धांश्च मङ्गळान्यन्यान् वृद्धस्त्रीकलशादिकान् ।
पुरस्कृत्य गृहं गत्वा प्राशयेयुर्यवौदनम् ॥
यदि नष्टो हृतो वाऽपि पाषाणश्च प्रमादतः ।
पाषाणमन्यमादाय पूर्वदत्ताम्बु निक्षिपेत् ॥
नवश्राद्धेषु पूर्णेषु कीकसानां च संस्कृतौ ।
पूर्वं दशाहादुत्कृष्य पुनर्दहनमाचरेत् ॥
एकादशाहमारभ्य यावद्द्वादशमासिकम् ।
कुर्याच्च षोडशश्राद्धं मातुरूर्ध्वं पुनःक्रिया ॥
एकादशेऽहनि श्राद्धमेकोद्दिष्टं समाचरेत् ।
यदि कार्यं न कुर्वीत पुनस्संस्कारमर्हति ॥ इति ॥

इति स्मृतिचन्द्रिकायां दशमाहकृत्यनिरूपणम्.

---

मरणविधिवैशिष्ट्यमुक्तं महाभारते—

स्यादुत्तरायणे यस्य मृतिस्तस्योत्तमा गतिः ।
शुक्लपक्षे च मध्याह्ने कृष्णेऽप्येकादशीदिने ॥

इति । मार्कण्डेयोऽपि—

उत्तरायणगे सूर्ये उत्तमा गतिरुच्यते ।
शुक्लपक्षे मृतिस्तत्र श्रेष्ठा चाह्नि मृतिश्शुभा ॥

श्रेष्ठा तत्रापि मध्याह्ने उभयोरपि पक्षयोः ।
एकादश्यां मृतिश्श्रेष्ठा मोक्षदा सर्वकामदा ॥
यदि भद्रान्विताऽन्याऽपि भानुभौमशनैश्वरैः ।
त्रिपादर्क्षैश्च संयोगे स त्रियोगास्त्रिपुष्करम् ॥
तत्त्रिपुष्करयोगे तु मृतिर्मृत्यन्तरावहा ॥

इति । गर्गः—

कुजार्कार्कियुता भद्राद्वित्रिपादर्क्षसंयुता ।
त्रिपुष्करं भवेत्तेषां यद्वाभ्यां तद्द्विपुष्करम् ॥
द्वादश्यर्कसमायुक्ता विशाखैकादशीन्दुना ।
कुजद्वादशके चैव द्वितीया भृगुरोहिणी ॥
तृतीया बुधमूलेन गुरुषष्ठी शतोडुना ।
अषाढशनिसप्तम्यां सप्तयोगास्त्रिपुष्कराः ॥
यस्मिंश्च पुष्करे योगे धनिष्ठर्क्षादिपञ्चसु ।
ज्येष्ठा त्रिपुष्करे योगे दोषभाग्दहने मृतौ ॥
तद्दोषपरिहाराय स्वर्णदानं समाचरेत् ।
शवस्य हृदयं स्पृष्ट्वा ततो दहनपार्श्वतः ॥
हुत्वा तेषु मुखेष्वाज्यं हिरण्यशकलं क्षिपेत् ।
यदि न क्रियते शान्तिस्तत्फलेनाशु नश्यति ॥

इति । ज्योतिःपराशरः—

भद्रे त्रिपादनक्षत्रे भृग्वङ्गारबृहस्पतौ ।
मरणे दहने चैव तत्कर्म त्रिगुणं भवेत् ॥

भद्रे तु भूमिदानं स्यात्तूपदर्शे हिरण्यकम् ।
वारे वाराधिदैवत्यं वस्त्रदानं प्रशस्यते ॥ इति ॥

इति स्मृतिचन्द्रिकायां मरणविधिवैशिष्ट्यनिरूपणम्.

---

अथ दिनाद्याशौचं प्रति कालनिर्णयः पारस्करेणाभिहितः—

दिवा यदि रजन्यां वा जननं मरणं तथा ।
तद्दिनादिकमाशौचं रजनी त्रिदिनं स्मृतम् ॥
जाते चैव मृते चैव दशरात्रं विशोधनम् ।
भूपतेर्द्वादशाहोभिः विशः पञ्चदश स्मृताः ॥
त्रिंशद्दिनानि शूद्रस्य तदर्धं न्यायवर्तिनः ।
निशां भागत्रयं कुर्याद्द्वौ भागौ पूर्ववासरः ।
शेषः परदिनं ग्राह्यं जाते पाके मृते समम् ॥

पाके स्थालीपाके ।

अर्धरात्रादधस्स्रावे जनने मरणेऽपि वा ।
पूर्वमेव दिनं ग्राह्यमित्याह भगवान् यमः ॥
ओदयादुदयं यावद्दिनमित्यभिधीयते ।
तद्दिनादिकमाशौचमिति वेदविदो विदुः ॥
रजोदृष्टिस्तु रात्रौ चेद्विभज्य त्रिविधां निशाम् ।
पूर्वभागद्वये पूर्वमूर्ध्वं चेदुत्तरेऽहनि ॥
जनने मरणेऽप्येवं प्राप्ते स्रावे तथैव च ।
अर्धरात्रादधस्ताच्चेत्सूतके मृतके तथा ॥

पूर्वमेव दिनं ग्राह्यमूर्ध्वं चेदुत्तरेऽहनि ।
रात्रावेव समुत्पन्ने मृते रजसि सूतके ।
पूर्वमेव दिनं ग्राह्यं यावन्नाभ्युदितो रविः ॥
रात्रिं कुर्यात्त्रिभागां तु द्वौ भागौ पूर्ववासरः ।
उत्तरांशः परादिनं जातेषु च मृतेषु च ॥

इति । काश्यपः—

अर्धरात्रादधस्ताच्चेन्मृतिः प्रसव एव वा ।
पूर्वमेव दिनं ग्राह्यमूर्ध्वं चेदुत्तरेऽहनि ॥

इति । वसिष्ठः—

उदिते तु यदा सूर्ये नारीणां दृश्यते रजः ।
जननं वा विपत्तिर्वा यस्याहस्तस्य शर्वरी ॥

इति । रात्रौ रजस्स्रावे जनने मरणे वा सति रात्रिं त्रिधा विभज्य पूर्वभागद्वये तत्पूर्वमेव दिनमित्येकः पक्षः । अर्धरात्रादधस्ताच्चेत्पूर्वमेव दिनमित्यन्यः पक्षः । सूर्योदयात्पूर्वं चेत्पूर्वमेव दिनमित्यपरः पक्षः । स्मृतीनां समबलत्वाद्देशाचारतोऽत्र व्यवस्था ॥

इति स्मृतिचन्द्रिकायामाशौचं प्रति कालनिर्णयविषयाणि.

## उदकदानानर्हाः.

अथोदकदानानर्हानाह—

पाषण्ड्यनाश्रितस्तेनभर्तृघ्न्यः कामुकादिकाः ।
सुराप्य आत्मत्यागिन्यो नाशौचोदकभाजनाः ॥

इति । वेदबाह्यलिङ्गेन पाषण्ड्यनर्हः । अनाश्रितः सत्यप्यधिकारे अकृताश्रमविशेषपरिग्रहः, आनाश्रमीति यावत् । स्तेनः सुवर्णादेर्हर्ता । भर्तृघ्नी पतिघातिनी । कामुका कुलटा । सुरापी सुरापानरता । आत्मत्यागिनी कामादिदोषोद्बन्धनादिभिः प्राणत्यागिनी । मनुः—

वृथासंकरजातानां प्रव्रज्यासु च तिष्ठताम् ।
आत्मनस्त्यागिनां चैव निवर्तेतोदकक्रिया ॥
पाषण्डमाश्रितानां च चरन्तीनां च कामतः ।
गर्भभर्तृद्रुहां चैव सुरापीनां च योषिताम् ॥

इति । परभार्यास्वधर्मोत्पादिता वृथासंकरजाताः । प्रव्रज्या पित्रादिबहिष्कारेण स्वेच्छयैव वृत्तिः । तथा यमः—

वृथासंकरजातानामाश्रमान्तस्थिताश्च ये ।
दत्तानां चैव कन्यानां निवर्तेतोदकक्रिया ॥
चण्डालादुदकात्सर्पाद्ब्राह्मणाद्विद्युतस्तथा ।
दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मणाम् ॥
उदकं पिण्डदानं च प्रेतेभ्यो यत्प्रदीयते ।
नोपतिष्ठति तत्सर्वमन्तरिक्षे विनश्यति ॥
नाशौचं नोदकं तेषां न दाहाद्यन्त्यकर्म च ।
ब्रह्मदण्डहतानां च न कुर्यात्कटधारणम् ॥

ब्रह्मदण्डो ब्रह्मशापः अभिचारो वा । कटशब्देन शववहनोपयोगि खट्वादिकमभिधीयते । आपस्तम्बः—

व्यापादयेद्य आत्मानं स्वयमग्न्युदकादिभिः ।
विहितं तस्य नाशौचं नापि कार्योदकक्रिया ॥

इति । विष्णुः—'आत्मत्यागिनो नाशौचोदकभागिनः' इति । गौतमः—'गोब्राह्मणहतानामन्वक्षं राजक्रोधाच्चायुद्धे प्रायोऽनाशकशस्त्राग्निविषोदकोद्बन्धनप्रपतनैश्चेच्छताम्' इति । प्रायो महाप्रस्थानम् । अनाशकमनशनम् । ब्रह्मपुराणे—

शृङ्गिदंष्ट्रिनखिव्याळविषवह्निमहाजलैः ।
सुदूरात्परिहर्तव्यैः कुर्वन् क्रीडां मृतस्तु यः ॥
नागानां विप्रियं कुर्वन् दग्धश्चाप्यथ विद्युता ।
निगृहीताश्च ये राज्ञा चौर्यदोषेण कर्हिचित् ॥
परादारान् हरन्तश्च रोषात्तत्पतिभिर्हताः ।
असमानैश्च संकीर्णैश्चण्डालाद्यैश्च विग्रहम् ॥
कृत्वा तैर्निहतास्तद्वच्चण्डालांश्च समाश्रिताः ।
क्रोधात्प्रायं विषं वह्निं शस्त्रमुद्बन्धनं जलम् ॥
गिरिवृक्षप्रपातं वा ये कुर्वन्ति नराधमाः ।
ब्रह्मदण्डहता ये च ये चैव ब्राह्मणैर्हताः ॥
महापातकिनो ये च पतितास्ते प्रकीर्तिताः ।
पतितानां न दाहस्स्यान्नाशौचं नान्त्यकर्म च ।
न चाश्रुपातः पिण्डो वा कार्यं श्राद्धादिकं च न ॥

इति। चण्डालादिहतानामयमग्निसंस्कारनिषेधोऽनाहिताग्निविषयः। आहिताग्निविषये च 'आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च'

इति विहिताग्नियज्ञपात्रैः प्रतिपत्तिलोपप्रसङ्गात्। स्मृत्यन्तरे चण्डालादिहताहिताग्निसंबन्धिनामग्नीनां यज्ञपात्राणां च प्रतिपत्तिपर्यन्तं विधानात्।

वैतानं प्रक्षिपेदप्सु ह्यावसथ्यं चतुष्पथे।
पात्राणि तु दहेदग्नौ यजमाने वृथाहते॥
आत्मनस्त्यागिनां नास्ति पतितानां तथा क्रिया।
तेषामपि तथा गङ्गातोये संस्थापनं मतम्॥

इति। वह्निपुराणे—

पाषण्डपतितानां च चण्डालाद्यैर्हतस्य च।
शृङ्गिदंष्ट्र्यग्निसर्पाद्यैर्मृतानां बुद्धिपूर्वकम्॥
न कुर्याद्दहनाशौचं कृतं चेन्नोपतिष्ठति।
तेषां शरीरं गङ्गायां महानद्यां विनिक्षिपेत्॥
प्रेताग्नीनप्सु निक्षिप्य गृह्याग्निं च चतुष्पथे।
दहेत्तु यज्ञपात्राणि शवानां स्पर्शने सति॥
स्नानालङ्कारवस्त्रार्थरज्जुच्छेदाश्रुपातने।
महासान्तपनाच्छुद्धिर्ज्ञानात्तप्तं विशोधनम्॥
मत्याऽभ्यासे तु चान्द्रं च पराकं पादकृच्छ्रकम्।
एतेष्वेकैककरणे पादकृच्छ्रं विशोधनम्।
अज्ञानादुपवासस्स्यात्सचेलं स्नानमेव च॥

इति। तस्मात्सर्वेषामात्मघातकादीनामविशेषेण दाहोदकपिण्ड

श्राद्धनिषेधो यावत्संवत्सरम्। पूर्णे संवत्सरे पुत्रादिः प्रेतस्य श्राद्धादिकं कुर्यात्। तथा चाह—

विषोद्बन्धनशस्त्राद्यैरात्मनस्त्यागिनामपि।
विधिं विनैवानशनतोयाग्निपतनैरपि।
ऊर्ध्वं संवत्सरात्कुर्यात्सर्वमेवौर्ध्वदैहिकम्॥

इति। संवत्सरादूर्ध्वमपि नारायणबलिं कृत्वा कुर्यात्। तथाच व्यासः—

ये मृताः पापमार्गेण तेषां संवत्सरात्परम्।
नारायणबलिं कृत्वा कुर्यादूर्ध्वक्रियां द्विजः॥ इति॥

इति स्मृतिचन्द्रिकायामुदकदानानर्हनिरूपणम्.

---

अथ पुनस्संस्कारकालनिर्णयः—

बाले वा यदि वा वृद्धे शुक्रे चास्तमुपागते।
अपूर्वदेवयात्रां च प्रेतकार्याणि वर्जयेत्॥
बाले वा यदि वा वृद्धे शुक्रे चास्तमुपागते।
प्रेतकर्म न कार्यं स्यादस्ते च गुरुशुक्रयोः॥
अतीतकालं श्राद्धं चेत्पुनस्संस्कारमर्हति।
अर्वाक्त्रिपक्षात्प्रेतस्य पुनर्दहनकर्मणि॥
न कालनियमो ज्ञेयो न मौढ्यं गुरुशुक्रयोः।
सपिण्डनक्रियाकालेऽप्यौर्ध्वदैहिकमाचरेत्।
गुरुभार्गवमौढ्यादिदोषस्तत्र न विद्यते॥

एतत् मृतसंवत्सरविषयम्—

चतुर्दशीं तिथिं नन्दां भद्रां शुक्रारवासरौ ।
त्रिपुष्करादिदुष्टर्क्षान् द्व्यङ्घ्रिभं त्रिपमाङ्घ्रिभम् ॥
वसूत्तरार्धतः पञ्च त्रिपदर्क्षे द्विपुष्करे ।
पौष्णब्रह्मभयोर्भूयाद्दहनात्कुलनाशनम् ॥
दिनोत्तरार्धे तत्कर्तुश्चन्द्रताराबलान्विते ।
यत्पुनर्दहनं चोक्त्वा श्राद्धकालमथोच्यते ॥
त्रिपक्षे वा त्रिमासे वा षण्मासे युग्मपक्षके ।
एष्वेव कालेष्वेतान्यप्येकोद्दिष्टानि षोडश ॥

श्राद्धकालाविरोधेन पुनस्संस्कारकर्मापि कार्यमेव—

कृत्तिकासु च नन्दायां भृगुवारे त्रिजन्मसु ।
प्रेतकार्यं न कर्तव्यं कुलक्षयकरं भवेत् ॥
सकृन्महालये काम्ये न्यूनश्राद्धे नवेषु च ।
अतीतकालविषये चैतत्सर्वं विचिन्तयेत् ॥

इति स्मृतिचन्द्रिकायां पुनस्संस्कारकालनियमः.

## अथ पालाशविधिः.

तत्र स्मृत्यन्तरम्—

शरीराणि न विन्देरन् देशान्तरमृतस्य चेत् ।
पलाशपर्णवृन्तैस्तु कुर्यात्तत्प्रतिरूपकम् ॥

दद्याच्छिरस्यशीत्यर्धं ग्रीवायां तु दशैव तु ।
उरसि त्रिंशतं दद्याद्विंशतिं जठरे तथा ॥
बाह्वोर्द्वयोश्शतं दद्याद्दश बाह्वङ्गुलीषु च ।
द्वादशार्धं वृषणयोरष्टार्धं शिश्न एव तु ॥
ऊर्वोर्द्वयोश्शतं दद्यात् षष्ट्यर्धं जानुजङ्घयोः ।
दश पादाङ्गुलीषु स्युरूर्णासूत्रेण बन्धयेत् ॥
स्नाप्यालंकृत्य तद्रूपं कुर्यात्तस्याभिमर्शनम् ।
दद्यात्पुत्रोऽथवा भ्राताऽप्यन्यो वाऽपि च बान्धवः ।
यथा दहनसंस्कारस्तथा कार्यं विचक्षणैः ॥

इति । हारीतेनापि पलाशवृन्तसंख्या दर्शिता—

देशान्तरगते विप्रे विपन्ने कालपर्ययात् ।
शरीरनाशकल्पस्स्यादाहिताग्नेर्विशेषतः ॥
कृष्णाजिनमथास्तीर्य पुरुषाकृतिमेव च ।
त्रीणि षष्टिशतं वृन्ताः पलाशानां समाहिताः ॥
दद्याच्छिरस्यशीत्यर्धं ग्रीवायां च दशैव तु ।
बाहुभ्यां तु शतं दद्यादङ्गुल्योर्दश चैव तु ॥
उरसि त्रिंशतं दद्याज्जठरे विंशतिं तथा ।
दद्यादष्टौ वृषणयोः पञ्च मेढ्रे तु विन्यसेत् ॥
ऊरुभ्यां तु शतं दद्यात्त्रिंशतं जानुजङ्घयोः ।
दश पादाङ्गुलीषु स्युरेतत्प्रेतविकल्पनम् ॥
पात्राणां चमसादीनां निर्णयः कथ्यतेऽधुना ।

अनुलोमानि सर्वाणि पात्राणि प्रयुनक्ति हि ॥
ध्रुवां तु दक्षिणे हस्ते स्फ्यं जुहूं च निधापयेत् ।
क्षिपेदुपभृतं सव्य उरसि स्रुक्स्रुवारणीन् ॥
मुखेऽग्निहोत्रहवणीं क्षिपेन्नासिकयोस्स्रुवौ ।
अक्ष्णोर्हिरण्यशकले स्रुचौ वा कर्णयोः क्षिपेत् ॥
प्राशित्रं.............................हन्वोरुलूखलम् ।
मुसलं च तथा दत्सु ग्राव्णो यदि भवेत्तदा ॥
कपालानि विनिक्षिप्य शिरस्येकं ललाटके ।
पिष्टसंयमनीं पात्रीमुदरे तु विनिक्षिपेत् ॥
आज्यस्थालीं क्षिपेन्नाभ्यां शूर्पं छित्त्वा तु पार्श्वयोः ।
पक्षयोश्चैव साम्नाय्यकुम्भौ यदि हि संनयेत् ॥
शिश्नेऽश्मानं ततो दद्याद्दण्डयोर्दृषदुपले ।
स्थापयेत्पृष्ठतश्शम्यां दक्षिणस्थानपादतः ॥
स्थालीं चैवाग्निहोत्रस्य अन्वाहार्यस्य चैव हि ।
उत्तरस्यां विनिक्षिप्य कूर्चं च शिरसि क्षिपेत् ।
दाहात्तु शवसंस्कारे पुनः कार्ये त्वयं विधिः ॥

इति । आहिताग्निमरणग्रहणमनाहिताग्नेरप्युपलक्षणम् । उक्तं च कात्यायनेन —

आहिताग्निर्यथान्यायं दग्धव्यस्त्रिभिरग्निभिः ।
अनाहिताग्निरप्येवं स्वेनौपास्येन वह्निना ॥
पात्राणां चयनस्थाने होमपात्रं विनिक्षिपेत् ॥

इति । पराशरगौतमादिभिरुक्तन्यूनाधिकयोर्विकल्पः । आहिताग्न्यादीनां पलाशवृन्तसंख्याव्यवस्थापकहेत्वभावाद्विकल्पो द्रष्टव्यः ॥

इति स्मृतिचन्द्रिकायां पालाशविधिः.

---

दुर्मृतस्याहिताग्नेर्विशेषमाह पारस्करः—

चण्डालेन श्वपाकेन गोभिर्विप्रैर्हतो यदि ।
आहिताग्निश्च यो विप्रो विषेणाकर्षितोपि वा ॥
दहेत्तं ब्राह्मणं विप्रो लोकाग्नौ मन्त्रवर्जितम् ।
दग्धमस्थि पुनर्गृह्य क्षीरैः प्रक्षाळयेत्ततः ।
पुनर्दहेत्स्वाग्निना तु स्वतन्त्रेण यथाविधि ॥

स्वतन्त्रेण स्वशास्त्रोक्तेन विधिना । हारीतः—

ब्राह्मणेन वधे प्राप्ते चण्डालस्य करेण वा ।
आत्मना शस्त्रनिर्घाते शूद्रवद्दाहयेद्द्विजम् ॥
दग्धमस्थि पुनर्गृह्य विप्राणामनुशासनात् ।
क्षीरैः प्रक्षाळनं कृत्वा तदस्थि प्रेतवद्दहेत् ॥
पुनर्दहनमन्त्रैश्च यथाविधि समाचरेत् ।
एवमेव विधिं कुर्यान्मरणे गर्हितस्य च ॥
प्राजापत्यत्रयं कुर्यात्पुत्रादिः प्रेतशुद्धये ।
प्रक्षाळ्य स्नापयित्वा तु स्वधर्मेण दाहयेत् ॥

कुशैः पलाशैर्बध्वा तं प्रच्छाद्यैव च वाससा ।
नीत्वा श्मशानं कुर्वीत पात्रसंचयनादिकम् ॥
बान्धवैस्तु यथान्यायं द्वितीये सञ्चयस्स्मृतः ।
तृतीये तूदकं दत्त्वा चतुर्थे श्राद्धमाचरेत् ॥

इति । इदं कृच्छ्रत्रयं प्रमादमृतस्यात्यन्ताशक्तपुत्रविषयम् । शक्तस्य तु—

ब्राह्मणादुदकात्सर्पाद्रोभिः पशुमृगादिभिः ।
उद्बन्धनोदकविषैस्सर्पाद्युपलवैद्युतैः ॥
प्रमादमरणे चान्द्रं तप्तकृच्छ्रत्रयं तथा ।
यद्वा षण्मासकृच्छ्राणि गा दद्यादश पञ्च वा ॥
विधिवद्दहनं कुर्यादुदकं श्राद्धमेव च ॥

इति । पुत्रादिः कृत्वेति शेषः । इत्यादिदुर्मृतिप्रायश्चित्तविषयक-बहुवचनविरोधप्रसंगाद्विकल्पः । द्वितीयेऽस्थिसंचयनं, त्रिरात्राशौचमित्याद्याहिताग्निमातापितृव्यतिरिक्तविषयम् । आहिताग्नेस्संस्कारमारभ्याशौचग्रहणं कार्यं अनाहिताग्नेर्मरणप्रभृति। तदुक्तं—

अनग्निमत उत्क्रान्तेस्साग्नेस्संस्कारकर्मणः ।
शुद्धिस्संचयनं दाहान्मृताहात्तु यथाविधि ॥

इति । 'साग्नेस्संस्कारकर्मणः' इति श्रवणादाहिताग्नौ पितरि देशान्तरमृते सति यावद्विधिना संस्कारस्तावत्पुत्रादीनां संध्यादिलोपो नास्त्येव । अनेन वचनेनाहिताग्नेर्विधिवद्दहनाभावे आशौचग्रहणं नास्त्येवेत्यनुसंधेयं, दाहादारभ्येति वचनात् ॥

अनग्निमत उत्क्रान्तेराशौचं हि द्विजातिषु ।
दाहादग्निमतो विद्याद्विदेशस्थे मृते सति ॥

तथा—

विदेशस्थे मृते यावद्विधिना नैव संस्कृतिः ।
पुत्रादीनां तु संध्यादिकर्मलोपो न विद्यते ॥
आहिताग्नेस्तु विधिवद्दाहान्तं नास्ति चेत्तदा ।
आशौचग्रहणं नास्ति दाहाद्याशौचमिष्यते ॥

पारस्करोऽपि—

आहिताग्नेस्तु दहनाद्दशाहाशौचमिष्यते ।
अनाहिताग्नेर्मरणात्पुनर्दाहो यदा भवेत् ॥
अशौचे वर्तमाने चेत्तच्छेषेण विशुध्यति ।
गते त्वाशौचदिवसे पुनर्दाहो यदा भवेत् ॥
मरणादि गृहीतस्य त्रिरात्राच्छुद्धिरिष्यते ।
अगृहीतस्य पुत्रस्य संपूर्णाशौचमेव हि ॥
दुर्मृतानां द्विजातीनां दशाहान्तर्बहिस्तु वा ।
नाशुद्धिर्नैव चाशौचं शुद्धिं लब्ध्वा प्रदाहयेत् ॥
तदादि चोदकं पिण्डमाशौचं श्राद्धमेव च ॥

इति । बृहस्पतिः—

आशौचे वर्तमाने तु पुनर्दाहक्रिया यदि ।
तच्छेषेणैव शुद्धिस्स्यादतीते सूतकं भवेत् ॥

दशाहादि यथावर्णं पित्रोराशौचमाचरेत् ।
सपत्नीनां मिथो ज्ञेयं दम्पत्योश्च परस्परम् ।
सपिण्डानां त्रिरात्रं स्यादित्युवाच प्रजापतिः ॥

इति । वसिष्ठः—

प्रमीतपितृकः पुत्र और्ध्वदैहिकमाचरेत् ।
यदि कर्तुमशक्तश्चेदाशौचनियमान्वितः ॥
आ दशाहादथोर्ध्वं वा यदा कार्यक्षमस्तदा ।
त्रिरात्रं समतिक्रम्य श्राद्धं कुर्याद्यथाविधि ॥
दाहकस्यैतदाशौचमितरेषां न विद्यते ।
कालातिपत्तिविषये यद्यर्वागपि तत्समम् ॥

इति । अर्वाक् सूतकादर्वाक् शेषाशौचसमकालमित्यर्थः । सपत्नीनां दम्पत्योश्च मिथ इति यदुक्तं तत्पुत्रहीनविषयमित्यनुसंधेयम् । पराशरः—

ऊर्ध्वोच्छिष्टमधोच्छिष्टमन्तरिक्षमृतौ तथा ।
कृच्छ्रत्रयं प्रकुर्वीत आशौचमरणेऽपि च ॥
निमित्तद्वितये प्राप्ते प्राजापत्यार्धमाचरेत् ।
सर्वेष्वपि निमित्तेषु कुर्यात्पञ्चदशापि च ॥

इति । अन्यत्सर्वमात्मघातप्रायश्चित्ते वक्ष्यते ॥

इति स्मृतिचन्द्रिकायामाहिताग्निदुर्मरणादिविषयाणि.

---

देशान्तरमृतस्य मृताहाद्यपरिज्ञाने कर्तव्यमाह पराशरः—

देशान्तरगतो विप्रः प्रवासात्कालकारितात् ।
देहनाशमनुप्राप्तः स्थितिर्न ज्ञायते यदि ॥
कृष्णाष्टमी त्वमावास्या कृष्णा चैकादशी च या ।
उदकं पिण्डदानं च तत्र श्राद्धं समाचरेत् ॥

इति । दहनाशौचं विना कृष्णाष्टम्यादिषु त्रिषु पिण्डोदकदानासंभवाद्दहनाशौचस्वीकारोपि तत्र विवक्षित इति गम्यते । द्विविधो हि देशान्तरमृतः, कृतसंस्कारोऽकृतसंस्कारश्चेति । कृतसंस्कारश्चाशौचान्ते वक्ष्यते । अकृतसंस्कारोऽपि द्विविधः, मरणदिवसज्ञानाज्ञानभेदात् । यस्य हि मरणदिवसो ज्ञातः तस्य प्रत्याब्दिकादिश्राद्धं तद्दिन एव कर्तव्यम् । अन्यदिवसे पुनर्दहनमाशौचग्रहणं च । पिण्डोदकादिदानं त्वनिषिद्धदिननक्षत्रवारादिकं प्रत्यालोच्य तत्रानुष्ठेयं, स्मृतिपुराणशिष्टाचाराणां तथा प्रवृत्तत्वात् । स्मृत्यन्तरे—

महागुरुनिपाते तु आर्द्रवस्त्रोपवासिना ।
अतीतेऽब्देऽपि कर्तव्यं प्रेतकार्यं यथाविधि ॥
गृहीत्वाऽऽशौचनियमं केशश्मश्रुनिकृन्तनम् ।
आदशाहात्प्रतिदिनं यथाविध्युदकाच्छुचिः ॥
एकादशाहे संप्राप्ते सपिण्डीकरणं भवेत् ।
अन्येषां भ्रातृपूर्वाणां प्रतिश्राद्धं तिलोदकम् ॥

कृतसंस्कारकस्येदमकृतस्याधुनोच्यते ।
समीपस्यासमीपस्य प्रेतकर्म द्विधा स्मृतम् ॥
समीपस्य च संस्कारे दिनं नैव विशोधयेत् ।
आशौचदिनमध्ये तु पुनस्संस्कारमाचरेत् ॥
शोधनीयं दिनं तत्र यथासम्भवमादरात् ।
आशौचविनिवृत्तौ चेत्पुनस्संस्क्रियते मृतः ॥
संशोध्यैव दिनं ग्राह्यमूर्ध्वं संवत्सराद्यदि ।
प्रेतकार्याणि कुर्वन् स्याच्छ्रेयस्तत्रोत्तरायणम् ।
कृष्णपक्षश्च हि तथा वर्जयेत्त्रिपदर्क्षकान् ॥

इति । कात्यायनः—

प्रत्यक्षशवसंस्कारे दिनं नैव विशोधयेत् ।
निर्दिष्टकालवीक्षायां शवः पर्युषितो भवेत् ॥
दग्धः पर्युषितो यैस्तु पुत्रमित्रैश्च बन्धुभिः ।
महाभयप्रदस्तेषां तिथ्यादीन्नैव शोधयेत् ॥
दिवा वा यदि वा रात्रौ शवास्तिष्ठति कुत्रचित् ।
तत्पर्युषितमित्याहुर्दहने तस्य का गतिः ॥
पञ्चगव्येन संस्नाप्य प्राजापत्यं समाचरेत् ।
पूतिगन्धैस्तथा क्लिन्ने स्नाप्य गोमयवारिणा ॥
ब्राह्मणैरभ्यनुज्ञातस्तप्तकृच्छ्रं समाचरेत् ।
क्रिमिरुत्पद्यते यस्य श्वपाकैश्चापि दूषितः ॥
कृत्वा तु पूर्ववत्स्नानं सर्पिषा मधुना ततः ।

पुण्याद्भिरभिषिच्याथ सेचयेद्गन्धवारिणा ॥
गां दत्त्वा द्विजमुख्याय तप्तकृच्छ्रं समाचरेत् ।
इति । एतत्सर्वं दुर्मरणप्रायश्चित्ते वक्ष्यते ॥

इति स्मृतिचन्द्रिकायां मृताहाद्यपरिज्ञानविधिः.

---

अथाशौचानन्तरं पुण्याहवाचनं कार्यम् । संवर्तः—

आशौचे निर्गते कुर्याद्गृहमार्जनलेपने ।
सवासा जलमाप्लुत्य शुद्धः पुण्याहवाचनैः ॥

वसिष्ठोऽपि—

आशौचान्ते तु कर्तव्यं ब्राह्मणस्याभिषेचनम् ।
ऋग्भिर्यजुर्भिश्छन्दोगैरब्लिङ्गैः पावमानिकैः ।
आशिषश्च गृहीत्वाऽथ श्राद्धकर्म समाचरेत् ॥

इति । व्यासोऽपि—

संपूज्य गन्धपुष्पाद्यैर्ब्राह्मणान् स्वस्ति वाचयेत् ।
धर्मकर्मणि संकल्पे संग्रामेऽद्भुतदर्शने ॥
यज्ञार्थे च प्रतिष्ठादौ सर्वसंस्कारकर्मसु ।
शुद्धिकामस्तुष्टिकामश्श्रेयःकामश्च नित्यशः ॥

इति । यमोऽपि—

पुण्याहवाचनं चैवं ब्राह्मणस्य विधीयते ।
एतदेव त्रिरोङ्कारं कुर्यात् क्षत्रियवैश्ययोः ॥

मन्त्रवर्जं तु शूद्राणां कुर्यात्पुण्याहमस्त्विति ।
वचनेनैव विप्रस्य वृद्धिरस्ति त्रिवाचकम् ॥

इति । काश्यपापस्तम्बौ—'लोकेषु भूतिकर्मस्वेव तदानीं च वाक्यानि स्युः पुण्याहं स्वस्त्यृद्धिरस्त्विति' इति । एतत्सर्वं गृह्यसूत्रे स्पष्टं चोदीरितम् ॥

इति स्मृतिचन्द्रिकायामाशौचान्ते पुण्याहवाचनविधिः.

## अथैकोद्दिष्टविधिः.

तत्र मरीचिः—

आशौचान्ते ततस्सम्यक्पिण्डदानं समापयेत् ।
तत्र श्राद्धं प्रदातव्यं सर्ववर्णेष्वयं विधिः ॥

इति । ततः आशौचानन्तरमेकादशेऽहनि ब्राह्मण एकोद्दिष्टं कुर्यात् । एकादशेऽहन्येकोद्दिष्टं कुर्यादित्ययं विधिः क्षत्रियादिष्वपि वर्णेषु समान इत्यर्थः । नन्वाशौचसमाप्त्यनन्तरमेकोद्दिष्टविधिः सर्वेष्वपि वर्णेषु किं न स्यात्? एकादशेऽहनि क्षत्रियादीनामधिककालाशौचिनां शुद्ध्यभावात् । 'शुचिना कर्म कर्तव्यम्' इति शुद्धेः कर्माङ्गत्वविधानात् । अथ—

आशौचे निर्गते कुर्याद्गृहमार्जनलेपने ।

इत्याशौचानन्तरं गृहशुद्धिः । मैवं, सूतकान्ते पुण्याहवाचन

मिति साधारण्येनोपक्रम्य एकादशेऽहन्येकोद्दिष्टस्य विष्णुनाऽभिहितत्वात्। तथा—

आद्यं श्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनि।
कर्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः॥

इति शङ्खवचनेन आशौचमध्य एकादशेऽहन्येकोद्दिष्टविधानाच्च। नन्विदमसमञ्जसं—

एकादशेऽह्नि यच्छ्राद्धं तत्सामान्यमुदाहृतम्।
चतुर्णामपि वर्णानां सूतकं तु पृथक्पृथक्॥

अस्यायमर्थः—आशौचानन्तरदिने यच्छ्राद्धं विहितं तच्चतुर्णामपि वर्णानां साधारणं न ब्राह्मणस्यैवेति। कथं तर्ह्येकादशाहशब्दस्योपपत्तिरिति चेत्, लक्षणयाऽऽशौचानन्तरदिनपरत्वोपपत्तेः। अत्रोच्यते—एकादशाहकालविशिष्टैकोद्दिष्टश्राद्धं चतुर्णामपि वर्णानां विधीयते 'न विधौ परश्शब्दार्थः' इति न्यायेनैकादशाहशब्दस्य लक्षणया आशौचानन्तरदिनपरत्वानुपपत्तेः, सति मुख्ये वृत्त्यन्तरकल्पनाया अन्याय्यत्वाच्चैकादशाह एव क्षत्रियादिभिरप्येकोद्दिष्टश्राद्धं कर्तव्यम्। नन्वेकादशेऽहनि क्षत्रियादीनां शुद्ध्यभावाच्छ्राद्धाधिकारो नास्तीति चेत्, न, 'कर्तुस्तात्कालिकी शुद्धिः' इति तात्कालिक्याशुद्धेस्सत्त्वात्। यत्तु शङ्खवचनस्य आशौचमध्ये आशौचान्तरप्राप्तावेकोद्दिष्टमेकादशेऽहन्यशुद्धोपि कुर्यादिति विषयविशेषे तात्पर्यमुच्यते, तन्न, तत्रापि शुद्ध्यभावादित्यस्य चोद्यस्य

समानत्वात् । सामान्येन प्रवृत्तस्य शङ्खवचनस्य विना कारणं विशेषपरत्वे संकोचकाभावाच्च । यदुक्तं—'अथाशौचापगमे' इति सामान्येन प्रक्रम्य विष्णुनैकोद्दिष्टविधानादाशौचानन्तरमेव सर्वैरेकोद्दिष्टं कर्तव्यमेवेति । तन्न, विष्णुवचनस्य दशाहाशौचिब्राह्मणविषयत्वेनोपपत्तेः । तस्मादेकादशाहे क्षत्रियादिभिरप्येकोद्दिष्टश्राद्धं कर्तव्यमिति सुष्ठूक्तम् ।

व्यासः—

सूतकानन्तरं कुर्यादेकोद्दिष्टद्वयं बुधः ।
सूतके पतिते चापि स्वतन्त्रं नातिलङ्घयेत् ॥

इति । स्वतन्त्रं नवश्राद्धादन्यत्, नवश्राद्धं च नवमिश्रद्वयम् । गौतमश्च—

ब्राह्मणं भोजयेदात्रे होतव्यमनलेऽपि वा ।
पुनश्च भोजयेद्विप्रं द्विरावृत्तिर्भवेदिति ॥

स्वतन्त्रैकोद्दिष्टमाशौचमध्येऽपि कार्यमेव । यत्तु—

पित्रोस्तु पितृपूर्वत्वं सर्वत्र श्राद्धकर्मणि ।

इति, तत् स्वतन्त्रैकोद्दिष्टव्यतिरिक्तनवमिश्रादिसर्वश्राद्धविषयम् । एकादशेऽहनीत्यनेनैकादशाहव्यतिरिक्तनवमिश्रादि आशौचविघ्नसंभवे विघ्नोपशमनानन्तरमेव कार्यम् । एकादशेऽहनि स्वतन्त्रैकोद्दिष्टातिक्रमे दोषो बृहस्पतिना दर्शितः—

एकादशाहे यच्छ्राद्धमेकोद्दिष्टं समाचरेत् ।
यदि कार्यं न कुर्वीत पुनस्संस्कारमर्हति ॥

इति । एकादशेऽहनि षोडशानामाद्यस्य तु कालान्तरविधाना-
दाशौचविघ्नसंभवे न कर्तव्यम् ।

एकादशाहे त्वाद्यस्य संकटं तु यदा भवेत् ।
द्वादशाहेऽपि कर्तव्यं त्रयोविंशाद्दिनेऽपि वा ॥

इति । अत्रैकादशेऽहन्येकादशब्राह्मणभोजनं प्रेतोद्देशेन कर्तव्यम् । तदाह सत्यव्रतः—"एकादशेऽहनि प्रेतार्थं ब्राह्मणानेकादशामन्त्र्य नानाभक्ष्यान्नरसविन्यासैराशयित्वा विधिवत्पिण्डदानं वासोहिरण्यकांस्योपानच्छत्रोदकुम्भदक्षिणां गुणवति विप्रे वा दद्यात्' इति । विप्राभावेऽग्नौ कार्यम् । तथाऽऽह काश्यपः—

एकोद्दिष्टे तु संप्राप्ते विप्राभावे कथं भवेत् ।
अभ्यर्च्य सुसमिद्धेऽग्नौ पायसं जुहुयाद्धविः ॥
पौरुषेण तु सूक्तेन द्वात्रिंशद्ग्राससंमितम् ॥

इति । व्यासोऽपि—

एकादशभ्यो विप्रेभ्यो दद्यादेकादशेऽहनि ।
रुद्रमुद्दिश्य कर्तव्यं रुद्रप्रीतिकरं हि तत् ॥

इति । अस्य देशाचारतो व्यवस्था । शातातपश्च—

एकादशसु विप्रेषु रुद्रमुद्दिश्य भोजयेत् ।
प्रेतत्वस्य विमोकार्थं मधुक्षीरघृताशनैः ॥

इति । अस्य विषयान्तरमाह प्रचेताः—

विहिते च वृषोत्सर्गे त्वलाभे शक्त्यसंभवे ।
प्रेतत्वस्य विमोकार्थं रुद्रानेकादशाशयेत् ॥ इति ॥

इति स्मृतिचन्द्रिकायामेकोद्दिष्टविधिः.

## वृषोत्सर्गविधिः

एकादशेऽहनि वृषोत्सर्गः कर्तव्यः । तत्र पुराणम्—

उत्सृजेत्संभवे नीलं लोहितं कृष्णमेव वा ।
मृतो न पश्येन्नरकं गोघाती ब्रह्महाऽपि वा ॥
पुत्रो वा भ्रातृपुत्रो वा मृतस्यैकादशेऽहनि ।
उत्सृजेद्वृषभं नीलं यथावर्णमसंभवे ॥
प्रेतत्वात्प्रविमुच्यन्ते महापातकिनो नराः ।

इति । व्यासः—

एकादशेऽह्नि संप्राप्ते प्रेतस्य स्वर्गसाधनम् ।
वृषमेकं समुत्सृज्य श्राद्धे विप्रांश्च भोजयेत् ॥

इति । काश्यपः—

नीलं वाऽप्यथवा कृष्णं मृतस्यैकादशेऽहनि ।
वृषं पापविशुद्ध्यर्थं रुद्राणामनुशासनात् ॥
होमकर्मसमायुक्तं रुद्रप्रीतिकरं त्यजेत् ।
विप्रो वा क्षत्रियो वाऽपि वैश्यश्शूद्रोऽपि वा तथा ॥
वृषहीनो मृतो याति रौरवं तमसाऽऽवृतम् ।
पतिपुत्रवती नारी मृता चेज्जीवभर्तृका ॥
पातिव्रत्येन तल्लोकं वृषहीना न गच्छति ।
सप्तजन्मकृतं पापं यद्बाल्ये यच्च वार्धके ॥

तत्क्षणादेव नश्येत वृषोत्सर्गे पितुः कृते ।
अशौचे निर्गते पुत्रो नीलं वृषमलंकृतम् ॥
पितॄनुद्दिश्य रुद्राय होमकर्मसमन्वितम् ।
उत्सृजेदथ रुद्रस्य लोकं यात्यत्र मानवः ॥

इति । यत्तु वचनं—

पतिपुत्रवती नारी म्रियते चेद्द्वयोः पुरा ।
वृषं नैवोत्सृजेत्तस्या गामेकां तु समुत्सृजेत् ॥

इति, तत् वृषं गां चोत्सृजेदिति शक्तविषयम् । अशक्तः पतिपुत्रवतीविषये वृषोत्सर्गमेव कुर्यात् । व्यासः—

पतिव्रता बन्धुमती पुत्रिणी सुभगा मृता ।
नोत्सृजेद्वृषमेकं तु सहगामुत्सृजेद्वृषम् ।
वृषमेकं तु नीलं वा रुद्रमुद्दिश्य संत्यजेत् ॥

इति । वसिष्ठः—

एकादशेऽह्नि संप्राप्ते यस्य नोत्सृज्यते वृषः ।
पिशाचत्वं स्थिरं तस्य दत्तैः श्राद्धशतैरपि ॥

इति । लोकाक्षिः—

एकादशे वृषोत्सर्गमह्नि कुर्वीत यत्नतः ।
पतिपुत्रवती नारी म्रियते चेद्द्वयोः पुरा ॥
वृषं नैवोत्सृजेत्तस्या इति यत्तदसांप्रतम् ।
न स्त्रियश्च वृषोत्सर्गं भर्ता कुर्यात्कदाचन ॥
संस्कर्ता तु स्वयं चेत्स्यात्पुत्रहीना भवेद्यदि ।

अन्यो वा तन्नियोगेन दाहादि श्राद्धमाचरेत् ॥
वृषं रुद्रान् वसूंस्त्यक्त्वा सपिण्डीकरणावधि ।
तत्कुर्याद्यदि मोहेन कुलक्षयकरं भवेत् ॥
संस्कर्ता यदि पुत्रस्स्याद्वृषं नीलं समुत्सृजेत् ॥

इति । अत्र पुत्रग्रहणं भ्रातृपुत्रविषयम् । नीलवृषलक्षणमुक्तं शातातपेन—

लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डरः ।
श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते ॥
शूलं चक्रं तथाऽन्यद्वा लाञ्छनं तस्य कारयेत् ।
यस्य देवस्य यो भक्तस्स तच्चिह्नं च कारयेत् ॥
स्वर्गकामो वृषोत्सर्गे नान्दीमुखविधानतः ।
प्रेतत्वस्य विमोकार्थं रुद्रं वा वृद्धिरूपतः ॥
ब्राह्मणान् भोजयेदष्टौ हिरण्येनोदकेन वा ॥

इति । एतत् कालान्तरे पुनः पितृप्रीत्या कृतवृषोत्सर्गविषयम् ॥

इति स्मृतिचन्द्रिकायां वृषोत्सर्गविधिः.

---

## षोडशश्राद्धनिरूपणम्.

---

द्वादश प्रतिमास्यानि ऊनषाण्मासिकं तथा ।
त्रैपक्षिकमथोनाब्दं तथा चैवोनमासिकम् ॥
सपिण्डीकरणं चैवेत्येवं श्राद्धानि षोडश ।
एकादशेऽह्नि मास्यून आद्ये षष्ठे तथाऽन्तिमे ॥

प्रतिमासं मृतेऽह्न्यब्दं स्युस्त्रिपक्षे च षोडश ।
नृणां तु त्यक्तदेहानां श्राद्धं दद्यात्तु षोडश ॥
चतुर्थे पञ्चमे चैव नवमैकादशे तथा ।
तत्र द्वादशभिर्मासैः श्राद्धं द्वादशसंख्यया ॥
कर्तव्यं श्रुतितस्तेषां तत्र विप्रांश्च तर्पयेत् ।

गालवः—

ऊनषाण्मासिकं षष्ठे मास्यूनेऽप्यूनमासिकम् ।
त्रैपक्षिकं त्रिपक्षे स्यात्प्रवृत्ते विषमे दिने ॥
प्रतिमासं मृताहे तु न्यूनाब्दं चेति षोडश ।

इति । भृगुरपि—

आद्यमेकादशेऽह्नि स्याद्द्वादशे न्यूनमासिकम् ।
एकद्वित्रिदिनैरूने त्रिभागे वाऽपि वा भवेत् ॥
ऊनाब्दिकं तथैव स्यादूनषाण्मासिकं तथा ।
त्रैपाक्षिकं त्रिपक्षे स्यान्मृताहे त्वितराणि तु ॥

इति । अङ्गिराः—

एकादशे भवेदाद्यं मास्यूने ह्यूनमासिकम् ।
त्रैपक्षिकं त्रिपक्षे तु भवेच्च विषमे दिने ॥
ऊनषष्ठं तथोनाब्दं मृताहे त्वितराणि तु ॥

इति । यदा संवत्सरादर्वाक् द्वादशाहादिषु सपिण्डीकरणं क्रियते तदैकादशाहादिषु षोडश श्राद्धानि दत्त्वैव कार्यम् । तदाह दक्षः—

श्राद्धानि षोडशापाद्य विदधीत सपिण्डनम् ।

इति । पैठीनसिः—

अर्वाक्सपिण्डीकरणात्कुर्याच्छ्राद्धानि षोडश ।
श्राद्धानि षोडशादत्त्वा नैव कुर्यात्सपिण्डनाम् ॥
द्वादशाहे यदा कुर्यात्सपिण्डीकरणं सुतः ।
मध्याह्ने नैव सर्वाणि कुर्याच्छ्राद्धानि षोडश ॥

इति । यदा त्रिपक्षादौ श्राद्धानि दत्त्वा सपिण्डीकरणं क्रियते तदा तदर्वाग्भाविमासिकानां न पुनः कृतिः, स्वकाले कृतत्वात् । ऊर्ध्वभाविमासिकानामेव पुनःकरणम् । तथाऽऽह गालवः—

त्रिपक्षादिषु कालेषु सापिण्ड्यं यश्चकीर्षति ।
शिष्टानां मासिकानांच यथाकालं पुनः क्रिया ॥
एकादशे कृतानां तु यथाकालं पुनःकृतिः ।
तान्येव तु पुनः कुर्यात्स्वेस्वे काले यथाविधि ॥

इति । अत्रैव विशेषमाह गालवः—

त्रिपक्षात्पूर्वतस्साग्नेर्भवेत्संस्कारवासरे ।
ऊर्ध्वं मृतदिनेऽनग्नेस्सर्वाण्येव मृताहनः ॥

इति । जातूकर्ण्यः—

ऊर्ध्वं त्रिपक्षाद्यच्छ्राद्धं मृताहन्येव तद्भवेत् ।
अधस्तु कारयेद्दाहादाहिताग्नेर्द्विजन्मनः ॥

इति । सपिण्डीकरणादूर्ध्वभाविमासिकनियममाह प्रजापतिः—

सपिण्डीकरणारभ्य दशमैकादशेऽपि वा ।
ऊनत्रिदिवसं कुर्यात्कर्तव्यं तूनमासिकम् ॥
त्रिपक्षे द्वादशे पक्षे चतुर्विंशतिपक्षके ।
पक्षत्रिपञ्चकं कृत्वा अन्तमध्यादिषु क्रमात् ॥
त्रिभिर्द्वाभ्यामुतैकेन मास्यूने ह्यूनमासिकम् ।
त्रिभागशेषे मासे तु कुर्यादिति हि केचन ॥
त्रैपक्षिकं त्रिपक्षे तु प्रवृत्ते विषमे दिने ।
एकादशे भवेदाद्यमिति मासिकनिर्णयः ॥

दशाहादूर्ध्वमित्यर्थः ।

आशौचनिर्गमात्कुर्यादाद्यमेकादशेऽहनि ।
त्रयोविंशादिने वाऽपि सप्तविंशादिनेऽपि वा ॥
ऊनं चैव त्रिपक्षे स्यात् पक्षान्ते विषमेऽहनि ।
ऊनषष्ठं तथोनाब्दं कुर्याच्चैवोपमानतः ॥
प्रतिमासं मृताहेषु मासिकान्यपराणि हि ॥

इति । सपिण्डीकरणादूर्ध्वं मासिकानामपकर्षमाह गौतम —

प्रेतसंस्कारकार्याणि यानि श्राद्धानि षोडश ।
यथाकाले तु कार्याणि नान्यथा मुच्यते ततः ॥
देशकालादिवैषम्यान्मृत्युरोगादिशङ्कया ।
एकादशेऽह्नि कार्याणि ह्यपकृष्यापि षोडश ॥
यथोक्तकालकार्याणि पुनश्श्राद्धानि षोडश ।

वृद्धौ तान्यपकृष्यापि चरेत्तन्मृतवासरे ॥

इति । शाट्यायनिः—

सपिण्डीकरणादर्वागपकृष्य कृतान्यपि ।
पुनरप्यपकृष्यन्ते वृद्ध्युत्तरनिषेधनात् ॥

इति । विष्णुः—

प्रेतश्राद्धानि सर्वाणि सपिण्डीकरणादनु ।
अपकृष्यापि कुर्वीत कर्ता नान्दीमुखे द्विजः ॥
यः कर्ता तु विना वृद्धिं प्रेतश्राद्धानि कर्षति ।
स श्राद्धी नरके घोरे पितृभिस्सह मज्जति ॥
निर्वर्त्य वृद्धितन्त्रं यो मासिकानि समाचरेत् ।
अयातयामं मरणं भवेत्तस्य न संशयः ॥
वृद्धिश्राद्धादिहीनस्तु यश्श्राद्धान्यपकर्षति ।
स श्राद्धी नरके घोरे पितृभिस्सह मज्जति ॥

इति। अनुपस्थितायां वृद्धौ प्रेतश्राद्धं नापकर्षयेदित्यर्थः। प्रचेताः—

श्राद्धानि षोडशानीह कुर्यादेकादशेऽहनि ।
सपिण्डीकरणं कुर्याद्द्वादशाहे तु यत्नतः ॥
मासिकानि च सर्वाणि यथाकालं समाचरेत् ।
अपकृष्यापि वा कुर्याद्वृद्धिश्राद्ध उपस्थिते ॥
न च जन्मर्क्षके कुर्यान्नन्दासु न भृगोर्दिने ।
न भानुभौमदिवसे न दोषोऽस्ति मृतेऽहनि ॥

इति । शातातपः—

मासिकान्यपकृष्यापि चरेत्तन्मृतवासरे ।
त्रिपुष्करे च नन्दासु दर्शे भार्गववासरे ॥
चतुर्दश्यां न कुर्वीत ह्यूनानि त्रीणि वह्निभे ॥

इति । दक्षः—

त्रिपुष्करे च नन्दासु सिनीवाल्यां भृगोर्दिने ।
चतुर्दश्यां च नोनानि कृत्तिकासु त्रिपुष्करे ॥

इति । विष्णुः—

सिनीवाल्यां च नोनानि कृत्तिकासु च पुष्करे ।

इति । सपिण्डीकरणात्पूर्वं मासिकान्येकोद्दिष्टविधिना कुर्यात् । सपिण्डीकरणादूर्ध्वं भ्रातृपत्न्यादीनामेकोद्दिष्टविधानेनैव । मातापितृज्येष्ठभ्रातॄणां पार्वणविधिनैव । तदाह दक्षः—

पत्नीभ्रातृपितृव्याणां सपिण्डीकरणात्परम् ।
एकोद्दिष्टविधानेन मासिकानां पुनःक्रिया ॥
पितृमात्रग्रजादीनां पार्वणेन पुनः क्रिया ॥

इति । पैठीनसिः—

सपिण्डीकरणादर्वाग्यानि श्राद्धानि षोडश ।
एकोद्दिष्टविधानेन कुर्याच्छ्राद्धानि तानि हि ॥
सपिण्डीकरणादूर्ध्वं यदा कुर्यात्तदा पुनः ।
प्रत्यब्दं यो यथा कुर्यात्तथा कुर्यात्कृतान्यपि ॥

इति । यथा पुत्रादिः पित्रादीनां प्रत्यब्दं पार्वणविधिना

कुर्यात्तथा मासिकान्यपि सपिण्डीकरणादूर्ध्वं कुर्यात् । यथाऽनुजपुत्रपत्नीगुर्वादीनां प्रत्यब्दमेकोदिष्टविधिना कुर्यात्तथा मासिकान्यपि सपिण्डीकरणादूर्ध्वं कुर्यादित्यर्थः । अपराह्णे पार्वणश्राद्धं कर्तव्यमित्युक्तं प्राक् । त्रिविधेष्वेकोद्दिष्टेषु तिथिद्वैधे मध्याह्ने कर्तव्यमित्याह मनुः—

एकोद्दिष्टं तु मध्याह्ने नवश्राद्धादिकं चरेत् ।
न सन्ध्यायां तु कर्तव्यं नैव रात्रौ कदाचन ॥

इत्यादिवचनादत्र मृतस्य न दहनादनन्तरं कर्तव्यं नवश्राद्धं नग्नप्रच्छादनं च; किंतु परेऽहनि मध्याह्ने कर्तव्यम् ।

तिलोदकं तथा पिण्डं नग्नप्रच्छादनं नवम् ।
रात्रौ न कुर्यात्संध्यायां यदि कुर्यान्निरर्थकम् ॥

इति जातूकर्णिवचनाच्च । नवमिश्रसंज्ञकषोडशैकोद्दिष्टेष्वपराह्णव्यापिनी तिथिर्ग्राह्या? किं वा सायाह्नव्यापिनी? इति तिथिसन्देहे सामान्येन सायाह्नव्यापिनी तिथिर्ग्राह्या पित्रर्थे चापराह्णिकीति ।

आपराह्णिकास्तु तिथयः पित्रर्थे तु शुभावहाः ।
अपराह्णः पितॄणां तु याऽपराह्णानुयायिनी ॥
सा ग्राह्या पितृकार्येषु न पूर्वाह्णानुयायिनी ।

इति । वृद्धमनुरपि—

यस्यामस्तं रविर्याति पितरस्तामुपासते ।
तिथिस्तेभ्यो यथा दत्तो ह्यपराह्णस्स्वयंभुवा ॥

इति । सामान्यशास्त्रं विधिमात्रोपजीवनेन प्रवृत्तत्वादपि सामान्यम् । अपराह्णस्त्रिमुहूर्तास्तमयव्यापी । पक्षत्रयं नैकोद्दिष्टविषयं पित्र्यकर्मसामान्यमुपजीव्य प्रवृत्तत्वात् । एकोद्दिष्टश्राद्धे मध्याह्नव्यापी पक्षो वाचनिकः ।

शिवराघवसंवादे—

मध्याह्नव्यापिनी या स्यात्सैकोद्दिष्टे तिथिर्भवेत् ।
अपराह्णव्यापिनी या पार्वणे सा तिथिर्भवेत् ॥

इति । हारीतशातातपौ—

आमश्राद्धं तु पूर्वाह्ने एकोद्दिष्टं तु मध्यमे ।
पार्वणं चापराह्णे स्यात्प्रातर्वृद्धिनिमित्तकम् ॥
एकमुद्दिश्य यच्छ्राद्धं दैवहीनं विधीयते ।
एकोद्दिष्टं तु तत्प्रोक्तं मध्याह्ने तत्प्रकीर्तितम् ॥

इति । स तु गान्धर्वकुतपरौहिणसंज्ञको मध्याह्नस्त्रिमुहूर्तकः । तस्योपक्रमे कुतपपूर्वोत्तरभागाविच्छया विकल्पितौ । तदाह व्यासः—

कुतपप्रथमे भाग एकोद्दिष्टमुपक्रमेत् ।
आवर्तनसमीपे वा तत्रैव नियतात्मवान् ॥

इति । समाप्तिकालमाह गौतमः —

आरभ्य कुतपे श्राद्धं कुर्यादारौहिणं बुधः ।
विधिज्ञो विधिमास्थाय रौहिणं तु न लङ्घयेत् ॥

उभयत्र गान्धर्वव्यापित्वे पूर्वविद्धा ग्राह्या पूर्वा हि सायाह्नास्तमयव्यापित्वात् । सामान्यशास्त्रबलात् उभयत्र त्रिमुहूर्तव्यापित्वे पूर्वैव ; सामान्यापराह्णनिर्णयवत् ॥

इति स्मृतिचन्द्रिकायां षोडशश्राद्धादिनिरूपणम्.

## अथ सपिण्डीकरणकालाः.

तत्राश्वलायनः—'अथ सापिण्डीकरणं संवत्सरे पूर्णे द्वादशाहे वा' इति । कात्यायनः—'अथ सापिण्डीकरणं संवत्सरे पूर्णे द्वादशाहे त्रिपक्षे वा' इति । बोधायनः—'अथ सापिण्डीकरणं पूर्णे संवत्सरे त्रिपक्षे तृतीये मासि द्वादशाह एकादशाहे वा' इति । व्यासः—

श्राद्धानि षोडशादत्त्वा नैव कुर्यात्सपिण्डनम् ।
असपिण्डीकृते प्रेते पितृत्वं नोपपद्यते ॥
अकृतस्य तु पुत्रस्य शुभं किंचिन्न विद्यते ।
न च नैमित्तिकं काम्यमिष्टापूर्तादिकं न च ॥
नासपिण्डीकृतौ पित्रोरन्येषां श्राद्धमेव च ।
एकादशे द्वादशे वा त्रयोविंशद्दिनेऽपि वा ॥
त्रिपक्षे वा त्रिमासे वा षष्ठे चैकादशेऽपि वा ॥

इति । गौतमः—

एकादशे द्वादशेऽह्नि त्रिपक्षे वा त्रिमासके ।

षष्ठे वैकादशे वाऽब्दे संपूर्णे वा शुभागमे ॥
सपिण्डकरणस्येमे अष्टौ कालाः प्रकीर्तिताः ।
साग्नौ कर्तर्युभावाद्यौ प्रेते साग्नावनन्तरः ।
अनग्नेस्तु द्वितीयाद्यास्सप्त काला उदीरिताः ॥

इति । अत्रैकादशाहे सपिण्डीकरणस्य प्रयोजनमाह हारीतः—

या तु पूर्वममावास्या मृताहाद्दशमी भवेत् ।
सपिण्डीकरणं तस्यां कुर्यादेव सुतोऽग्निमान् ॥

इति । मृताहादूर्ध्वं द्वितीयादिपरिगणने यदा अमावास्यैकादशाहो भवति तस्मिन्नित्यर्थः । वृद्धवसिष्ठः—

प्रथमा स्यादमावास्या मृताहाद्दशमेऽहनि ।
सपिण्डीकरणं तत्र कुर्यादेव सुतोऽग्निमान् ॥

इति । मृताहादिति मर्यादायां पञ्चमी । मृताहादूर्ध्वदिनमारभ्येत्यर्थः । कार्ष्णाजिनिरपि—

सपिण्डीकरणं कुर्यात्पूर्ववच्चाग्निमान् सुतः ।
परतो दशरात्राच्चेत्कुहूरब्दोपरीतरः ॥

इति । यद्येकादशेऽह्नि सपिण्डीकरणं क्रियते तदा पूर्वाह्णे सपिण्डीकरणादधोभाविनवश्राद्धादीनि दत्त्वा मध्याह्ने सपिण्डीकरणं कृत्वा अपराह्णे पिण्डपितृयज्ञं चरेत् । तदाह सत्यव्रतः—

एकादशेऽह्नि कुर्वाणः पूर्वाह्णे सर्वमाचरेत् ।
मध्याह्ने चैव सापिण्ड्यं कुर्यादित्याह शाण्डिलः ॥

इति । भृगुः—

या तु पूर्वममावास्या मृताहाद्दशमी भवेत् ।
सपिण्डीकरणं तत्र कुर्यादेवाग्निमान् सुतः ॥
सापिण्ड्यं तु विना पुत्रः पितृयज्ञं न चाश्रयेत् ।
न पार्वणं नाभ्युदयं कुर्वन्न लभते फलम् ॥

इति । देवलः—

सपिण्डीकरणात्प्रेते पैतृकं पदमास्थिते ।
आहिताग्नेस्सिनीवाल्यां पितृयज्ञः प्रवर्तते ॥

इति । यदा दीक्षितस्य पितुर्मृताहाद्द्वादशाहे अमावास्या भवति तत्रैकादशाहे सपिण्डीकरणं कृत्वाऽमावास्यायामपराह्णे पिण्डपितृयज्ञं कुर्यात् । तथाऽऽह जाबालिः—

द्वादशाहादिकालेषु सपिण्डीकरणेष्विमे ।
साग्न्यनग्नित्वविधयः कर्तुरेव नियामकाः ॥
एकादशाहे कुर्वीत द्वादशे यद्यमा भवेत् ।
सपिण्डीकरणं कृत्वा पितृयज्ञं समाश्रयेत् ॥

इति । एकादशाहद्वादशाहकुहूव्यतिरिक्तविषये साग्निकोऽनग्निको वाऽपि द्वादशाहादिसप्तसु कालेषु सपिण्डीकरणं कुर्यात् । तथाच प्रचेताः—

एकादशेऽह्नि कुर्वीत साग्निकस्तु सपिण्डनम् ।
द्वादशाहादिकालेषु साग्निकोऽनग्निकोपि वा ॥
सपिण्डीकरणं कृत्वा दार्शिकं कर्म चाचरेत् ॥

इति । अत्र विशेषो महाभारते दर्शितः—

अनग्निस्तु यदा वीर भवेत्कुर्यात्तदा गृही ।
प्रेतश्चेदग्निमांश्च स्याद्द्वादशाहे सपिण्डनम् ॥
यजमानोऽग्निमान् राजन् प्रेतश्चानग्निमान् भवेत् ।
एकादशे द्वादशे वा त्रिपक्षे वा त्रिमासि वा ॥
त्रयोविंशदिने वाऽपि षण्मासे वत्सरेऽपि वा ।
प्रमादादकृते तस्मिन् द्वादशैकादशेऽहनि ॥
त्रयोविंशदिने कुर्यात्सपिण्डीकरणं पितुः ।
द्वादशैकादशाहादौ यदि न स्यात्सपिण्डनम् ।
उत्तरोत्तरकाले तु यथासंभवमाचरेत् ॥

इति । गृही श्राद्धकर्ता । गर्गः—

अथापद्यकृतं यत्तु द्वादशाहे सपिण्डनम् ।
त्रयोदशदिने कुर्यात्त्रयोविंशदिनेऽपि वा ॥

इति । बृहस्पतिः—

द्वादशाहादिकालेषु सपिण्डीकरणं यदा ।
तत्र प्रशस्तनक्षत्रे परिशोधय समाचरेत् ॥
सपिण्डीकरणे त्रीणि ऋक्षाण्याहुर्महर्षयः ।
प्राजापत्यं तथा रौद्रं यदृक्षं सौम्यदैवतम् ॥
त्रिपादर्क्षं विना वाऽपि भानुभौमशनैश्चरान् ।
सपिण्डीकरणं यद्वा मासिकाहात्परेऽहनि ॥

इति । आङ्गिराः—

ब्राह्मणक्षत्रियविशां शूद्राणां च सपिण्डने ।
द्वादशाहः प्रशस्तस्स्यात्कर्तुश्चानन्त्यकारणत् ॥

इति । व्यासः—

आनन्त्यात्कुलधर्माणां पुंसां चैवायुषः क्षयात् ।
अस्थिरत्वाच्छरीरस्य द्वादशाहः प्रशस्यते ॥

इति । वृद्धमनुः—

द्वादशेऽहनि विप्राणामाशौचान्ते तु भूभुजाम् ।
वैश्यानां तु त्रिपक्षादावथवा स्यात्सपिण्डनम् ॥

इति । प्रजापतिः—

एकादशेऽह्नि विप्राणां द्वादशेऽहनि वा भवेत् ।
आशौचान्ते भवेद्राज्ञां वैश्यानां च सपिण्डनम् ॥
शूद्राणां द्वादशेऽह्न्येव कर्तुस्तात्कालिकी शुचिः ॥

इति । संवर्तः—

द्वादशेऽहनि विप्राणां सपिण्डीकरणं भवेत् ।
शूद्राणां द्वादशेऽह्नि स्यादाशौचान्तेऽपि वा भवेत् ॥
कुर्यादाशौचमध्येऽपि सच्छूद्राणां सपिण्डनम् ।
कर्तुस्तात्कालिकी शुद्धिरशुद्धिः पुनरेव हि ॥
निजधर्मविहीनानां शूद्राणां तु सपिण्डनम् ।
षष्ठे मासे वत्सरान्ते त्रिपक्षादिषु वा भवेत् ॥
भार्यारतिश्शुचिर्भृत्यभर्ता श्राद्धक्रियापरः ।
द्वादशेऽहनि वा कुर्यादाशौचान्ते सपिण्डनम् ॥

इति । आपस्तम्बः —

शूद्राणां हीनजातीनामाशौचान्ते सपिण्डनम् ।
पक्वान्नेन न कर्तव्यमामेन श्राद्धमाचरेत् ॥
प्रियङ्गुयवगोधूमव्रीहिभिर्वा समाहितः ।
पक्वान्नेनैव सापिण्ड्यं निर्वपेत्पितृपूर्वकम् ।
योजयेत्प्रेतपिण्डं तु नाम्ना पित्रादिषु त्रिषु ॥ इति ॥

इति स्मृतिचन्द्रिकायां सपिण्डीकरणकालः.

## अथ पुनस्सपिण्डीकरणकालः.

तत्र काश्यपः —

व्युत्क्रमेण प्रमीतानां सपिण्डीकृतिरिष्यते ।
अन्तर्हिते मृते पश्चात्पुनः कुर्यात्सपिण्डनम् ॥

इति । दक्षः —

पितामहं च जीवन्तमतिक्रम्य यदा सुतः ।
आतिक्रम्य द्वयं वाऽपि सपिण्डीकरणं चरेत् ॥
तयोरापन्नयोः काले पुनः कुर्यात्सपिण्डनम् ॥

इति । वृद्धवसिष्ठः—

व्युत्क्रमेणापि सापिण्ड्यं कर्तव्यमृषिसंमतम् ।
तत्राप्यूर्ध्वस्य सापिण्ड्ये कृतेऽस्य पुनराचरेत् ॥

औरसः क्षेत्रजो वाऽपि धर्म एवं सनातनः ।
परित्यज्यैव जीवन्तं पुत्रं नान्यैस्तु कारयेत् ॥
भ्राता वा भ्रातृपुत्रो वा सपिण्डश्शिष्य एव वा ।
सपिण्डीकरणं कुर्यात्पुत्रहीनस्य सर्वदा ॥
अथवा प्रेतभूतस्य पत्नी कुर्यादमन्त्रकम् ।
ऋत्विजा कारयेद्वा सपिण्डीकरणं पुनः ॥

इति । प्रजापतिः—

पित्रोस्सपिण्डीकरणं पुत्र एव समाचरेत् ।
अथवा शिष्यसब्रह्मचारिभृत्यपुरोहितैः ।
कारयीत दशाहान्तं सपिण्डीकरणं विना ॥

इति । गालवः—

सपिण्डीकरणश्राद्धं पुत्रैः कार्यं न चापरैः ।
दाहादिकं दशाहान्तं गौणपुत्रैस्तु कारयेत् ॥

इति । अत्र विशेषो गौतमेन दर्शितः—

अग्रजो वाऽनुजो वाऽपि सपिण्डो वाऽपि सोदकः ।
सपिण्डीकरणं कुर्यात्पुत्रो वा वृद्ध्युपस्थितौ ॥
सपिण्डीकरणं हित्वा वृद्धिश्राद्धमुपक्रमेत् ।
अयातयामं मरणं भवेत्तस्य न संशयः ॥
वृद्धिश्राद्धविहीनो यः पुत्रिणोऽस्य सपिण्डनम् ।
कृत्वा तु नरके घोरे पितृभिस्सह मज्जति ॥

इति । वृद्धावुपस्थितायां भ्रातृसापिण्डसोदकादिभिः कृतं सपिण्डीकरणं पुनः पुत्रः पृथक् कुर्यात् । तथा—

अग्रजो वाऽनुजो वाऽपि नवश्राद्धानि षोडश ।
असंसृष्टधनो वाऽपि सर्वैरपि कृतं भवेत् ॥

इति । विष्णुः—

ज्येष्ठो वाऽप्यनुजो वाऽपि सपिण्डस्सोदकोऽपि वा ।
यस्तु संनिहितस्तस्य त्वधिकारस्सपिण्डने ॥
पुनः कुर्युर्यथापूर्वं लेपभाक्त्वप्रसिद्धये ।
श्राद्धाधिकारसिद्ध्यर्थं प्रेतत्वान्मुच्यतेऽपि वा ॥

इति । आपस्तम्बः—

पितुस्सपिण्डीकरणं बन्धुभिर्वा कदाचन ।
प्रेतत्वस्य विमुक्तस्य पुनः कुर्युस्सपिण्डनम् ॥

इति । यत्तु यमः—

देशान्तरस्थितः पुत्रः श्रुत्वा पितृविपर्ययम् ।
कुर्वीत वपनं सद्य आदशाहात्तिलोदकम् ॥
सपिण्डीकरणश्राद्धं कुर्यादेकादशेऽहनि ।

इति, तत् ज्येष्ठविषयम् । शातातपः—

अग्रजो वाऽनुजो वाऽपि पित्रोर्देशान्तरे मृतिम् ।
वापयित्वाऽथ केशादीन् सचेलमवगाहयेत् ॥
अवगाहान्न कुर्वीत भोजनं मैथुनं तथा ।
दशाहान्तेऽनुजः कुर्यात्पार्वणं श्राद्धमादरात् ॥
ज्येष्ठस्सपिण्डीकरणं पुनः कुर्यात्कृतं यदि ।

इति । वृद्धशातातपः—

अग्रजो वाऽनुजो वाऽपि पित्रोर्देशान्तरे मृतिम् ।
श्रुत्वा केशान् वापयित्वा सचेलस्नानमाचरेत् ॥
दशाहं तु ब्रह्मचारी दद्याच्चैव तिलोदकम् ।
सपिण्डीकरणं कुर्यादन्येन च कृतं यदि ॥

इति । गौतमः —

देशान्तरे स्थिते ज्येष्ठे त्वनुजेन कृते सति ।
कृतं श्राद्धं पुनः कुर्यात्सापिण्ड्यं पूर्ववत्सुतः ॥
सपिण्डीकरणं श्राद्धं करिष्य इति कीर्तयेत् ।
उपतिष्ठत्विति स्थाने स्वधाशब्दं प्रयोजयेत् ।
मृतं पितरमुद्दिश्य पार्वणस्यैकदेशवत् ॥

इति । शातातपः —

सपिण्डीकरणश्राद्धं ज्येष्ठेन न कृतं यदा ।
ज्येष्ठः पुनश्च कुर्वीत पिण्डसंयोजने कृते ॥

इति । वृद्धवासिष्ठः—

यवीयसा कृते श्राद्धे प्रेतशब्दं विहाय च ।
तदग्रजेन कर्तव्यं सपिण्डीकरणं पुनः ॥
सपिण्डीकरणश्राद्धं दैवपूर्वं नियोजयेत् ।
पितॄनेवाशयेत्तत्र पुनः प्रेतं विनिर्दिशेत् ॥
कनिष्ठोऽपि विदेशस्थः श्रुत्वा पितृविपर्ययम् ।
दशाहं समतिक्रम्य पार्वणं श्राद्धमाचरेत् ॥

सपिण्डीकरणं नाम श्राद्धं पार्वणवद्भवेत् ।
अर्घ्यसंयोजनं कुर्यात्पिण्डसंयोजनं तथा ॥
प्रेतत्वात्तु विमुक्तस्स्यात्पुनः प्रेतं न निर्दिशेत् ।
प्रेतशब्दं विना सर्वं कार्यमित्याह गौतमः ॥

इति । गालवः —

नवश्राद्धं सपिण्डत्वं श्राद्धान्यपिच षोडश ।
एकेनैव तु कार्याणि संविभक्तधनेष्वपि ॥
सपिण्डीकरणादूर्ध्वं प्रतिसंवत्सरं सुतैः ।
मातापित्रोः पृथक्कार्यं त्वेकोद्दिष्टं मृतेऽहनि ॥

इति । गौतमः —

सर्वैरनुमतिं कृत्वा ज्येष्ठेनैव तु यत्कृतम् ।
धनेन वाऽविभक्तेन तत्सर्वैस्तु कृतं भवेत् ॥

इति । अत्र विशेषो बृहस्पतिना दर्शितः—

सपिण्डीकरणं पित्रोः पितृयज्ञविधानतः ।
पुत्रास्सर्वे पृथक्कुर्युर्यदा ज्येष्ठो न कारयेत् ॥
अग्रजेन कृतं कर्म नानुजेन पुनःकृतिः ॥

इति । लोकाक्षिः —

विभक्तो वाऽविभक्तो वा मातापित्रोस्सपिण्डनम् ।
कथंचिदनुजः कुर्याद्भूयः कुर्यात्तदग्रजः ॥
पितामह्यादिपिण्डेषु मातृपिण्डमिति स्थितिः ॥ इति ॥

इति स्मृतिचान्द्रिकायां पुनस्सपिण्डीकरणकालः.

---

अथ सपिण्डीकरणप्रयोगः । तत्र प्रचेताः —

स्वपितुः प्रेतभूतस्य त्वेकोद्दिष्टविधानतः ।
एषां पितामहादीनां विधिना पार्वणेन तु ॥
श्राद्धद्वयं हि कर्तव्यं सपिण्डीकरणं हि तत् ॥

इति । विष्णुः—

पितुर्मरणमारभ्य द्वादशे दिवसे चरेत् ।
प्रेतभावविनिर्मोकद्वारा प्रेतस्य वै पितुः ॥
पितामहादिभिस्सार्धं सापिण्ड्यस्य प्रसिद्धये ।
समानोदकभावस्य सिद्ध्यर्थं च पितुस्सुतः ॥
एषां पितामहादीनां विधिना पार्वणेन तु ।
स्वपितुः प्रेतभूतस्य त्वेकोद्दिष्टविधानतः ॥
इत्थं च पार्वणात्मैकोद्दिष्टात्मोभयरूपकम् ।
कामकालौ वैश्वदेवे निर्दिष्टौ तु सपिण्डने ॥
पितामहादींश्चोद्दिश्य पितुरुच्चारणं ततः ।
संबन्धगोत्रनामानि वस्वादींश्च प्रकीर्तयेत् ॥
सापिण्डीकरणश्राद्धं पितृपूर्वमुदीरितम् ।
प्रेतपूर्वं वदन्त्येके तदसांप्रतमीरितम् ॥
विश्वेदेवार्चनं कृत्वाऽनन्तरं प्रेतपूजनम् ।
पार्वणस्य हि तन्त्रस्य मध्ये तन्त्रान्तरं भवेत् ॥
अवटत्रितयं वाऽपि कुर्याद्वा मण्डलत्रयम् ।
देवार्थानामुत्तरे तु पित्र्यर्थानां तु मध्यमे ॥

दक्षिणे तु निमित्तस्य पादप्रक्षाळनक्रमः ।
प्राङ्मुखानादितो देवानभ्यर्च्योदङ्मुखान् पितॄन् ॥
प्रत्यङ्मुखनिविष्टं तु प्रेतं विधिमनुस्मरन् ।
तिलगन्धादिसंयुक्तं कुर्यात्पात्रचतुष्टयम् ॥
सादयेत्प्रथमं तत्र पित्र्यं पैतामहं ततः ।
प्रपितामहदैवत्यं ततः पेतार्थमुत्तमम् ॥
पात्रैकदेश उदकं तेभ्यो दद्याद्यथाक्रमम् ।
गन्धपुष्पाणि धूपं च दीपमाच्छादनादिकम् ॥
यथाविभवसारेण दत्त्वा विप्रांस्तु भोजयेत् ।
एकोद्दिष्टे निमित्तेऽपि यदस्यावाहनादिकम् ॥
स्वधाशब्दं धूपदीपं नमश्शब्दं प्रयोजयेत् ।
आवाहनं स्वधाशब्दं धूपदीपौ सपिण्डने ॥
नैव कुर्यान्नमस्स्थान उपातिष्ठत्विदं भवेत् ।
विप्रपाणावथाग्नौ वा चरुं हुत्वाऽऽहुतिद्वयम् ॥
निरूह्य वह्नेरङ्गारान् प्रेताय च यमाय च ।
स्वाहेति जुहुयादन्नमुक्त्वा तद्गोत्रनामनी ॥
प्रेतहस्तेऽपि वा हुत्वा भोजनान्ते यथाक्रमम् ।
संबुद्ध्या निर्दिशेन्नाम पित्रादीनामसाविति ॥
यज्ञशर्मन्निमं पिण्डमुपतिष्ठेति चान्ततः ।
पिण्डं चतुर्थं प्रेताय दद्याद्दक्षिणहस्ततः ॥
प्रेतपात्रस्थमुदकं पित्राद्यर्घेष्वथानयेत् ।

समानो मन्त्र इत्याभ्यां ऋग्भ्यां द्वाभ्यामनुक्रमात् ॥
मधुमन्त्रेण चादाय प्रेतपिण्डं त्रिधा कृतम् ।
संगच्छध्वमिति द्वाभ्यां पितृपिण्डेषु योजयेत् ॥
ये समाना इति द्वाभ्यां पिण्डोपस्थानमिष्यते ।
पिण्डसंयोजनादूर्ध्वं प्रेतत्वस्य निवृत्तितः ॥
मार्जनादिषु सर्वत्र चतुर्थी विनिवर्तते ।
केवलः पितृशब्दस्तु पितृसामान्यवाचकः ॥
पितामहादिसंबन्धं मन्त्रसूत्रादिषूहयेत् ।
देशान्तरस्थिते ज्येष्ठे सपिण्डीकरणे कृते ।
प्रेतशब्दं विहायैव कुर्यादेवं सपिण्डनम् ॥

इति । यत्तु कात्यायनवचनं—

सपिण्डीकरणे वृत्ते पृथक्त्वं नोपपद्यते ।
पृथक्त्वे तु कृते पश्चात्पुनः पितृसापिण्डता ॥

इति, यत्तु वचनं—

यस्सपिण्डीकृतं प्रेतं पृथक्पिण्डे नियोजयेत् ।
विधिघ्नस्तेन भवति पितृहा चोपचायते ॥

इति, तत् ज्येष्ठेन कृतसपिण्डीकरणस्यानुजेन कृतसापिण्डीकरणार्थं पृथगेकोद्दिष्टनिषेधपरं, मृताहे मातापित्रोरेकोद्दिष्टनिषेधपरं च ॥

इति स्मृतिचन्द्रिकायां सपिण्डीकरणप्रयोगः.

# अथानुगमने सपिण्डीकरणकालः.

अनुगमने पत्या सह सपिण्डीकरणं कार्यम् । तत्र यमः—

पत्या चैकेन कर्तव्यं सपिण्डीकरणं स्त्रियाः ।
सा मृताऽपि हि तेनैक्यं गता मन्त्राहुतिव्रतैः ॥

इति । शातातपोपि—

मृता याऽनुगता नाथं सा तेन सहपिण्डताम् ।
अर्हति स्वर्गवासेऽपि यावदाभूतसंप्लवम् ॥

इति । वसिष्ठः—

अनुयाने तु पतिना सपिण्डीकरणं सह ।
अन्तर्धाय तृणं मध्ये भर्तृश्वशुरयोरपि ॥

इति । केचिद्भर्त्रादिभिस्सह सापिण्ड्यमाहुः । यदाह शङ्खः—

मृतं पतिमनुव्रज्य या नारी ज्वलनं गता ।
अस्थिसंचयनान्तेऽस्या भर्तृस्संस्कार एव हि ॥
नवश्राद्धं सपिण्डान्तं भिन्नकालमृतौ यथा ।
सपिण्डीकरणश्राद्धं सह भर्त्रादिभिस्त्रिभिः ॥

इति । अत्र केचिदनुयाने एकचित्यारोहणे एकदिनमरणे स्त्रियाः पृथक्सपिण्डीकरणं नास्ति, भर्तुः कृते स्त्रिया अपि सापिण्ड्यं कृतं भवतीत्याहुः । विष्णुः—

कृते पितरि मातुस्तु कुर्यात्सह सपिण्डनम् ।
पितुरेव सापिण्डत्वे तस्या अपि कृतं भवेत् ॥

इति । सुमन्तुरपि—

दम्पत्योरेककाले तु मृतयोर्वा यदि स्त्रियः ।
चित्यारोहणकाले तु षोडशान्तं पृथक्पृथक् ॥
सपिण्डीकरणं तस्या न च भर्तुः कृतं यदि ।

इति । एवमादीनि वचनान्यप्युक्तान्येकचित्यारोहणे स्त्रियाः पृथक्सपिण्डीकरणासमर्थपराणि वेदितव्यानि, भर्तुः कृते स्त्रिया अपि कृतं भवतीति शास्त्रस्य चरितार्थत्वात् । समर्थस्तु पृथगेव कुर्यात् । तत्र स्मृत्यन्तरं—

या समारोहणं कुर्याद्भर्तुश्चित्यां पतिव्रता ।
द्वादशेऽहनि संप्राप्ते पृथक्पिण्डे नियोजयेत् ॥
एकचित्यां समारूढौ दम्पती निधनं गतौ ।
मासिकानि नवश्राद्धं सपिण्डीकरणं पृथक् ॥

इति । शङ्खः—

पितर्युपरते पत्न्यां क्रियाः कुर्युर्द्वयोरपि ।
अनुवृत्तिं वदन्त्येषां संघातमरणेऽपि च ॥

इति । गौतमः—

पतिव्रता तु या नारी भर्तारमनुगच्छति ।
पिण्डदानादिकं श्राद्धं सपिण्डीकरणं पृथक् ॥

इति । व्याघ्रपादः—

दम्पत्योरेकदा मृत्युर्दहेदौपासनादुभौ ।
पृथक्पुत्रेण कर्तव्याः पिण्डदानोदकक्रियाः ॥

इति। पृथक् श्राद्धादिक्रियास्सपिण्डीकरणं च यदा भर्तुः मरणदिनादुत्तरदिनमृतायाः सहगमने परदिने चितारोहणेनानुगमने वा तत्र द्वादशाहे सपिण्डीकरणं कार्यम्। तदुक्तं स्मृत्यन्तरे—

पित्रोस्संघातमरणे मातुरन्यत्र वा दिने।
अनुयानमृतौ श्राद्धं यथाकालं समाचरेत्॥

इति। पित्रोस्संघातमरणे, पितृमरणदिनादुत्तरदिनमरणे परदिनेऽनुगमनमरणे वा मातुस्तत्तदेकादशाहादिकाले षोडशश्राद्धानि सपिण्डीकरणादीनि कुर्यात्। देवलोपि—

तद्दिने वाऽपरेद्युर्वा भर्तारमनुगच्छति।
नवश्राद्धं षोडशं च सपिण्डीकरणं यथा॥
यथाकाले तु कर्तव्यं प्रतिसंवत्सरं यथा।

इति। वसिष्ठः—

दह्यमानं तु भर्तारं या नारी त्वनुगच्छति।
मरणादि भवेच्छ्राद्धं दहनादि तयोर्न तु॥

इति। वह्निपुराणेऽपि—

दह्यमानं तु भर्तारमनुगच्छति या सती।
तस्याश्श्राद्धं पिण्डदानमुदकं च पृथक्पृथक्॥
सपिण्डनं तु मरणाद्द्वादशाहे समापयेत्॥

इति। एवमादिवचनेभ्यो मातुर्विषमदिने नवश्राद्धानि दत्त्वा मातुरेकादशाहे नवमिश्राण्यपकृष्य दत्त्वा मातुर्द्वादशाहे सापि-

ण्डीकरणश्राद्धं कार्यमित्युक्तं भवति । अन्ये तु पितुश्श्राद्धकाले मातुश्श्राद्धं कर्तव्यमित्याहुः । यदाह शातातपः—

तद्दिने वाऽपरेद्युर्वा भर्तारमनुगच्छति ।
भर्त्रा सहैव शुद्धिस्स्याच्छ्राद्धं चैकदिने भवेत् ॥

इति । प्रचेता अपि—

भर्त्रा सह प्रमीतायां मृतेऽहन्यपरेऽह्नि वा ।
आशौचं मरणादि स्याद्दहनादि तयोर्न तु ॥

इति । भर्तुर्मरणादि भार्याया इत्यर्थः । विश्वादर्शेऽपि—

पतिव्रता त्वन्यदिनेऽनुगच्छेद्या स्त्री पतिं चित्यधिरोहणेन।
दशाहतो भर्तुरघस्य शुद्धिः श्राद्धद्वयं स्यात्पृथगेककाले ॥

इति । स्मृत्यन्तरेऽपि—

भर्तारमनुगच्छन्ती पत्नी चेत्सार्तवा यदि ।
तैलद्रोण्यां विनिक्षिप्य लवणे वा मृतं पतिम् ॥
त्रिरात्राद्दहनं कुर्युः बान्धवास्तु तया सह ।
श्राद्धं चैकदिने कुर्याद्द्वयोरपि हि निर्णयः ॥

इति । गालवः—

एकचित्यां समारूढौ दम्पती निधनं गतौ ।
एकोद्दिष्टं षोडशं च भर्तुरेकादशेऽहनि ॥
द्वादशेऽहनि संप्राप्ते पिण्डमेकं द्वयोः क्षिपेत् ।
पितामहादिपिण्डेषु तं पितुर्विनियोजयेत् ॥

इति । तत्रैकदिनमरणे एकचित्यारोहणे भर्तुर्मरणदिनादुत्तरदिन-

मरणेऽपि वा स्वस्वसबन्धिकाले श्राद्धं कुर्यादित्येकः पक्षः। भर्तुः श्राद्धकाले मातुः श्राद्धं कुर्यादित्यन्यः पक्षः। तत्रैव सपिण्डीकरणे दम्पत्योरेकं पिण्डं क्षिप्त्वा पितामहादिपिण्डेषु तं पिण्डं योजयेदित्यपरः पक्षः। अत्र स्मृतीनां समबलत्वा-द्यथेच्छया विकल्पो द्रष्टव्यः। अत्रैव विशेषः प्रचेतसा दर्शितः—

दम्पत्योरेकदा मृत्युस्स्याच्चित्यारोहणेन वा।
पृथङ्मातुः पितुः श्राद्धं तथा मातुर्यथा पितुः॥

इति। अत्रिः—

एककाले गतौ जायापती यदि तदा पुनः।
पृथक्पाकेन कर्तव्यं पितृश्राद्धपुरस्सरम्॥
दह्यमानं तु भर्तारं दृष्ट्वा नारी पतिव्रता।
अनुगच्छेत्तयोश्श्राद्धं पृथगेकादशेऽहनि॥
द्वादशेऽहनि संप्राप्ते सपिण्डीकरणं पितुः।
निर्वर्त्य मातृपिण्डं तु पितृपिण्डेन योजयेत्॥

इति। तथा—

पितुर्मरणकाले तु माता यस्य प्रमीयते।
षोडशान्तं पृथक्कृत्वा सपिण्ड्यं द्वादशेऽहनि॥
प्रेतत्वात्तु विमुक्तेन सह मातुस्सपिण्डनम्॥

कुर्यादिति शेषः। अन्ये मृताहवत्तन्त्रेण सपिण्डीकरणमाहुः। यदाह काश्यपः—

दशाष्ट द्वादश विप्रान् निमन्त्र्य द्वादशेऽहनि ।
सर्वोपचारैस्संपूज्य यथाविभवसारतः ॥
दक्षिणाग्रान् कुशान् द्वेधा आस्तीर्यैव तु पूर्ववत् ।
पित्रादेः प्राच्यदर्भेषु प्रेतार्थं पश्चिमेषु तु ॥
पितामहादीन्निर्दिश्य त्रीन् पिण्डान् पितृयज्ञवत् ।
यज्ञशर्मन्निमं पिण्डमुपतिष्ठेति पश्चिमे ॥
द्विधाऽऽस्तृतेषु दर्भेषु त्वर्घ्यपात्रं प्रकल्पयेत् ।
पित्रादेश्च पुरश्चैव मातुश्च तदनन्तरम् ॥
पित्रर्घ्यपात्र उदकं क्रमात्पैतामहादिषु ।
ये समाना इति द्वाभ्यां मन्त्राभ्यां योजयेत्क्रमात् ॥
योजयेन्मातुरर्घ्यं च ऋग्भ्यां मात्रादिषु त्रिषु ।
एवं त्रिधाकृतं पिण्डं पिण्डेषु त्रिषु योजयेत् ॥
पित्रोस्संघातमरणे त्वनुयानविधिः स्मृतः ।
पृथगेवान्यथा कुर्यादिति प्राह पितामहः ॥

इति । अत्राष्टब्राह्मणपक्षे मातापित्रोः प्रेतार्थमेकमेकं पित्रादिषु त्रीन् द्वौ वैश्वदेवे विष्ण्वर्थमेकम् । दशपक्षे वैश्वदेवं तन्त्रेण, अन्यत्सर्वं स्पष्टम् । भोजनान्तोपचारैः संपूज्य पिण्डार्घ्ययोजनं तन्त्रेण स्वगृह्यानुसारेण कुर्यादित्यर्थः । सपिण्डीकरणश्राद्धे विष्ण्वर्चनमुक्तं—

आद्यन्ते देवपूजां च सपिण्डीकरणे चरेत् ।

इति । शाण्डिल्योऽपि—

सपिण्डीकरणे तद्वद्विष्णुमभ्यर्चयेदिति ।

इति । अत्र यत्तन्त्रेण मातापित्रोस्सपिण्डीकरणश्राद्धमुक्तं तत् पूर्वोक्तबहुवचनपर्यालोचनयाऽशक्तविषये योजनीयम् ।

उक्तं स्मृतिसंग्रहे—

दम्पत्योरेकदा मृत्युर्देहेदौपासनादुभौ ।
ततः पुत्रेण कर्तव्याः पृथक्पिण्डोदकक्रियाः ॥
एकोद्दिष्टं सपिण्डं च वह्निरेको द्विजः पृथक् ।
पित्रर्थमुदकं पिण्डं क्षिपेत्पैतामहादिषु ॥
मात्रर्घ्यपात्र उदकं पिण्डं पित्रादिषु त्रिषु ।
ब्राह्मणांश्चैव संभोज्य दद्याच्छक्तया च दक्षिणाम् ॥

इति । अत्र विशेषमाह पुलस्त्यः—

दुर्मृतस्सुमृतो वाऽपि पिताऽग्रे यद्यसंस्कृतः ।
कालान्तरे मृता माता तस्या दाहादिकाः क्रियाः ॥
पत्या सहैकचित्यां तु दहेदौपासनादुभौ ॥

इति । संवर्तः—

पिता महीपते! यस्य चिरकालमसंस्कृतः ।
माता प्रमीता यदि हि तयोर्दाहादिकं सह ॥
उदकं पिण्डदानं च नवश्राद्धं सपिण्डनम् ।
पित्रोः पुत्रेण कर्तव्यमेष धर्मस्सनातनः ॥

इति । यमः—

अस्थिसंचयनादर्वाग्भर्तुः पत्नी मृता यदि ।

तस्मिन्नेवानले दह्याद्यदि चाग्निर्न शाम्यति ॥
शान्तेऽग्नौ पुनरेवास्याः पृथक्चित्यादि कारयेत् ।
उदकादि सपिण्डान्तं तयोः कार्यं सहैव तु ॥

इति । स्मृत्यन्तरे—

पत्न्याः कुर्यादपुत्रायाः पतिर्मात्रादिभिस्सह ।
साप्रिण्ड्यमनुयाने तु जनकेन सहात्मजः ॥
पितामह्यादिभिर्ब्राह्मविवाहोढास्त्रियस्सुतः ।
पितृपक्षैर्मातृपक्षैर्वाऽऽसुराद्यागतस्सुतः ॥
विवाहपुत्रभेदेन तद्गोत्रं च व्यवस्थितम् ।
अपुत्रस्यापि कुर्वीत धर्मपत्नी सपिण्डताम् ॥
न तत्संन्यासिनां कुर्यात्पार्वणं द्वादशेऽहनि ।

अस्यार्थः—पतिरपुत्रायाः पत्न्याः सापिण्ड्यं मात्रादिभिः मातृपितामहीप्रपितामहीभिस्सह कुर्यात् । तदाह पैठीनसिः—

अपुत्रायां मृतायां तु पतिः कुर्यात्सपिण्डताम् ।
श्वश्र्वादिभिस्सहैवास्यास्ताभिस्सह मृतेऽहनि ॥

इति । ब्राह्मदैवार्षप्राजापत्यविवाहोढायाः स्त्रियः सुतः पितामह्यादिभिस्सह सपिण्डीकरणं कुर्यात् । तदाह सत्यव्रतः—

मातुस्सपिण्डीकरणं पितामह्यादिभिस्स्मृतम् ।
अपुत्रायां मृतायां तु पतिः कुर्यात्सपिण्डताम् ॥
श्वश्र्वादिभिस्सहैवास्या यदि पूर्वं मृतास्तु ताः ।
भर्ता मृतश्चेत्तेनैव सह तेनैकतां गता ॥

इति । आसुरगान्धर्वराक्षसपैशाचोढायाः स्त्रियस्सुतः पितृपितामहप्रपितामहैर्वा पितामह्यादिभिर्वा (मातामह्यादिभिर्वा) सह सपिण्डीकरणं कुर्यात् । यमः—

मातुस्सपिण्डीकरणं पित्रैकेन त्रिभिश्च वा ।
आसुराद्यागतः पुत्रः पितामह्यादिभिस्सह ॥

इति । अस्मिन्नेव विषये शातातपः—

मातुस्सपिण्डीकरणं मातामह्यादिभिः स्मृतम् ।
पितामह्यादिभिः कुर्याद्यद्वा पित्रादिभिस्स्त्रियः ॥
मातामह्यादिभिर्वाऽपि ह्यासुराद्यागतस्सुतः ।

इति । पुत्रिकापुत्रोऽप्येवमेव । गोत्रनिवृत्त्यनुवृत्ती विवाहप्रकरणे वक्ष्येते ॥

इति स्मृतिचन्द्रिकायामनुगमने सपिण्डीकरणकालः.

---

अथ सपिण्डीकरणनिषेधे कानिचिद्वचनानि लिख्यन्ते । शातातपः—

क्लीबैश्च पतितैरेव दुष्टाभिः स्त्रीभिरेव च ।
सपिण्डीकरणं कुर्यादेकोद्दिष्टं समाचरेत् ॥
नैष्ठिकानां यतीनां च श्राद्धे नारायणार्पणम् ।
उपकुर्वाणकस्यैव सपिण्डीकरणं विदुः ॥
नैष्ठिको ब्रह्मचारी तु देहं त्यक्त्वा परं व्रजेत् ।

तस्य श्राद्धं न कार्यं स्यात्सपिण्डीकरणं न च ॥

इति । वृद्धवसिष्ठः—

सपिण्डीकरणं नैव मृतानां ब्रह्मचारिणाम् ।
दाहादि षोडशाहान्तं निर्वर्त्यैव यथास्मृति ॥
द्वादशेऽहनि संप्राप्ते कृत्वा चैव तु पार्वणम् ।
नारायणं समुद्दिश्य विप्रानष्टौ तु भोजयेत् ॥
एकोद्दिष्टविधानेन श्राद्धं वा कारयेद्द्विजः ॥

इति । अत्रोपकुर्वाणनैष्ठिकानां सपिण्डीकरणं कृताकृतम् । यतिविषये पुलस्त्यः—

कुटीचको बहूदश्च हंसः परमहंसकः ।
चतुर्विधानां भिक्षूणामेकदण्डित्रिदण्डिनाम् ॥
षोडशानि नवश्राद्धं सपिण्डीकरणं च न ॥

इति । उशना—

कुटीचको बहूदश्च हंसः परमहंसकः ।
सपिण्डीकरणं तेषां न कर्तव्यं सुतेन तु ॥
दण्डग्रहणमात्रेण प्रेतत्वं नैव जायते ।
प्रेतत्वस्य विमोकार्थं षोडशश्राद्धको विधिः ॥
पिण्डोदकं नवादीनि क्षुत्तृष्णादिनिवृत्तये ।
सपिण्डीकरणश्राद्धं पितृत्वप्राप्तये विधिः ॥
अवस्थात्रयहीनानां यतीनां द्वादशेऽहनि ।
श्राद्धाधिकारसिद्ध्यर्थं पार्वणं तु सुतश्चरेत् ॥

चतुर्विधानां भिक्षूणां ज्ञातिबन्धुसुतादिभिः ।
द्वादशेऽहनि कर्तव्यं तेषां श्राद्धं तु पार्वणम् ॥

इति । यमः—

सपिण्डीकरणं नैव कुर्यादेवौरसस्सुतः ।
एकोद्दिष्टं न कुर्वीत यतीनां चैव सर्वदा ॥
अहन्येकादशे प्राप्ते पार्वणश्राद्धमाचरेत् ॥

इति । प्रजापतिः—

सपिण्डीकरणं नैव यतीनां चैव सर्वदा ।
अहन्येकादशे प्राप्ते पार्वणं तु विधीयते ॥

इति । बृहस्पतिः—

नवश्राद्धं यतेर्न स्यात्सपिण्डीकरणं न वा ।
अहन्येकादशे प्राप्ते कुर्यात्तस्य हि पार्वणम् ॥

इति । वसिष्ठः—

एकोद्दिष्टं जलं पिण्डमाशौचं प्रेतकर्म च ।
न कुर्यात्पार्वणादन्यद्ब्रह्मभूताय भिक्षवे ॥

ब्रह्मभूतो ब्रह्माहमस्मीत्युपासकः । पुलस्त्यः—

प्रव्रजेद्यदि संसाराद्ब्रह्मविद्यापरायणः ।
कुटीचको भवेद्वाऽपि यद्वा चैव बहूदकः ॥
हंसो भवेत्ततो ज्ञाने परहंसस्ततोऽधिकः ।
एकदण्डी त्रिदण्डी वा मनोदण्डी तु नित्यशः ॥
कुटीचकं तु प्रदहेत्पूरयेच्च बहूदकम् ।

हंसं जले विनिक्षिप्य परहंसं विदारयेत् ॥
सपिण्डीकरणं नैव सर्वेषां स्मृतिशासनात् ।
अहन्येकादशे प्राप्ते पार्वणं श्राद्धमाचरेत् ॥
पिण्डयज्ञं सुतः कुर्याद्दर्शश्राद्धं मृतेऽहनि ।
यतेर्महालये दर्शे वा तस्य मृतवासरे ॥
पार्वणं स्यादितरेषामेकोद्दिष्टं तु वा भवेत् ॥

इति । सुमन्तुः—

औरसः क्षेत्रजो वाऽपि भ्राता वा तत्सुतोऽपि वा ।
कुर्यात्तु पार्वणं श्राद्धं शिष्यान्तेवासिभूमिपाः ॥
कुटीचके तु दर्शादौ पार्वणश्राद्धमाचरेत् ।
नारायणबलिं चैव पार्वणं तु बहूदके ॥
हंसे मृते सुतः कुर्यात्पार्वणं पितृयज्ञवत् ।
नारायणबलिं चैव तथा परमहंसके ॥
विष्णुं संपूज्य विधिवद्दत्त्वाऽर्घ्यं बलिमुत्तमम् ।
चरुं हुत्वा तु सूक्तेन पौरुषेण तु षोडश ॥
द्वादश ब्राह्मणान् भोज्य केशवाद्यैश्च नामभिः ;
यद्वा सर्वेषु कालेषु ब्राह्मणानेव भोजयेत् ॥

इति । स्कन्दपुराणेऽपि—

चतुर्थमाश्रमं गच्छेद्ब्रह्मविद्यापरायणः ।
एकदण्डी त्रिदण्डी वा सर्वसङ्गविवर्जितः ॥
एकादशेऽह्नि संप्राप्ते यदि वा द्वादशेऽहनि ।

पार्वणेन विधानेन श्राद्धं कुर्यात्तदौरसः ॥
प्रत्यब्दे दार्शिके श्राद्धे तीर्थेष्वपि महालये ।
संबन्धं नामगोत्रेण श्राद्धकालेषु नित्यशः ॥

इति । ब्रह्माण्डपुराणे—

क्षत्रियो यदि राजा चेद्विप्रधर्मेण पूजयेत्।
शूद्रो भवति भूपालो द्विजैर्मान्यस्स वैश्यवत् ॥
ब्रह्मचार्यनुपेतस्य मान्यस्तस्य तु नैष्ठिकः ।
द्वयोरपि गृहस्थस्तु त्रयाणां त्ववनीगुरुः ॥
चतुर्णां तु कुटीचस्स्यात्तेषां चैव बहूदकः ।
अधिकारस्तु सर्वेषां यतीनां प्रेतकर्मणि ॥
श्राद्धाधिकारो नैव स्याद्यतीनामौरसं विना ।
एकादशेऽहनि प्राप्ते विष्णुं संपूज्य यत्नतः ॥
ब्राह्मणान् भोजयेच्छक्त्या विष्णुरूपमनुस्मरन् ॥

इति । स्कान्दे नागरखण्डे—

स तथैवोपनीतस्य गृहस्थाश्रममाश्रितः ।
गुरुस्तयोर्व्रती श्रेष्ठस्तेषां संन्यासमाश्रितः ॥
संस्कारेऽपि त्रयो वर्णास्तथैवाश्रमिणश्च ये ।
यतीनां प्रेतकार्ये तु नरकं याति नान्यथा ॥
उदकं नात्र दातव्यं सपिण्डं श्राद्धमेव च ।
नारायणबलिं तस्य कुर्यादेकादशेऽहनि ॥ इति ॥

इति स्मृतिचन्द्रिकायां सपिण्डीकरणनिषेधे कानिचिद्वचनानि.

अथ नवमिश्रैकोद्दिष्टम् । तत्र याज्ञवल्क्यः—

एकोद्दिष्टं दैवहीनमेकार्घ्यैकपवित्रकम् ।
आवाहनाग्नौकरणरहितं ह्यपसव्यवत् ॥
उपतिष्ठतामित्यक्षय्यस्थाने विप्रविसर्जने ।
अभिरम्यतामिति वदेत् ब्रूयुस्तेऽभिरताःस्म ह ॥

इति । तदेतत्प्रकरणबलान्नवश्राद्धनवमिश्रविषयम् । अत्रापि सपिण्डीकरणार्थैकोद्दिष्टे विशेषो बोधायनेन दर्शितः—

एकोद्दिष्टे निषिद्धेऽपि यद्यप्यावाहनादिके ।
तत्सपिण्डागते त्वेकोद्दिष्टे सर्वं समाचरेत् ॥
आवाहनं स्वधाशब्दं प्रेते बोधायनोऽब्रवीत् ।
न स्नेहपक्वगोधूमविकारो धूप उच्यते ॥
एकोद्दिष्टे न तद्दद्यादेतत्सर्वं सापिण्डने ।
एकोद्दिष्टेषु सर्वेषु न च पूर्वं निमन्त्रणम् ।
सापिण्डीकरणार्थे तु पूर्वेद्युस्स्यान्निमन्त्रणम् ॥

इति । अत्र विशेषमाह व्यासः—

नवश्राद्धानि मिश्राणि सपिण्डीकरणं तथा ।
कृत्वा तु विधिवत्स्नायान्नैव स्नायान्मृतेऽहनि ॥ इति ॥

इति स्मृतिचन्द्रिकायां नवमिश्रैकोद्दिष्टनिरूपणम्.



## अथ नवश्राद्धानि.

---

तत्र तावन्नवसंज्ञकानामन्तर्दशाहे क्रियमाणानां नवश्राद्धसंज्ञामभिनिवेशयन्नाश्वलायनो दशाहपर्यन्तं नवश्राद्धं मन्यते । शिवस्वामी—

नवश्राद्धानि पञ्चाहुराश्वलायनशाखिनः ।
आपस्तम्बाष्षडित्याहुर्विभाषामैतरेयिणः ॥

इति । प्रजापतिः—

नवश्राद्धं दशाहान्तं मिश्रं संवत्सरादधि ।
एकादशाहमारभ्य कुर्यात्प्रेतत्वमुक्तये ॥

इति । वसिष्ठः—

सूतकान्तं नवश्राद्धं कुर्यादेकादशे शुचिः ।
नवश्राद्धं दशाहानि नवमिश्रं षडन्वहम् ॥

इति । अत्र षण्णवश्राद्धं केचिदाहुः । आङ्गिराः—

प्रथमेऽह्नि तृतीयेऽह्नि पञ्चमे सप्तमे तथा ।
नवमैकादशे चैव षण्णवश्राद्धमुच्यते ॥

इति । व्यासः—

आद्यादशाहं मरणाद्विषमेषु दिनेषु षट् ।
नवश्राद्धान्यनुतिष्ठेदेकोद्दिष्टविधानतः ॥

इति । स्कन्दपुराणे—

पञ्चमे सप्तमे तद्वत्तृतीये प्रथमे तथा ।

नवमैकादशे चैव नवश्राद्धानि तानि वै ॥
वैतरण्या समं प्राप्तः प्रेतस्तृप्तिमवाप्नुयात् ।

इति । अत्र व्यवस्थामाह काश्यपः—

नवश्राद्धानि पञ्चाहुराश्वलायनशाखिनः ।
आपस्तम्बाष्षडित्याहुष्षड्वा पञ्चान्यशाखिनः ॥
केचित्पञ्चैव नवमं भवेदन्तरितं यदि ।
एकादशेऽह्नि तत्कुर्यादिति स्मृतिकृतो विदुः ॥

इति । अत्र नागरखण्डे विशेषोऽभिहितः—

नव सप्त विप्रां राज्ञां नवश्राद्धान्यनुक्रमात् ।
आद्यन्तयोर्वर्णयोस्तु षडित्याहुर्महर्षयः ॥

इति । स्मृत्यन्तरे—

सूतकान्ते गृहे श्राद्धमेकोद्दिष्टं प्रचक्षते ।

इत्यत्र 'सूतकान्ते गृहे' इति विशेषोपादानान्नवश्राद्धानि मरणस्थाने श्मशाने पिण्डोदकस्थाने वा कार्याणि ॥

इति स्मृतिचन्द्रिकायां नवश्राद्धनिरूपणम्

---

अथ नग्नप्रच्छादनश्राद्धम् । तत्र गोभिलः—

नग्नप्रच्छादनं श्राद्धं स्नानान्ते तु मृतेऽहनि ।
घटे तण्डुलपूर्णे वा वाससा परिवेष्टिते ॥
पिधाय कांस्यपात्रेण तस्मिन्नाज्यं विनिक्षिपेत् ॥

हिरण्यं तत्र निक्षिप्य यथाविभवसारतः ।
कुलीनाय दरिद्राय श्रोत्रियाय कुटुम्बिने ॥
संप्रदद्यात्तदा भक्त्या विष्णुं च मनसा स्मरन् ।
प्रेतमुद्दिश्य संपूज्य ब्राह्मणं तु विसर्जयेत् ॥

इति । व्यासः—

वासस्तण्डुलमृत्पात्रं प्रदीपं कांस्यभाजनम् ।
दहनानन्तरं दद्यान्नग्नप्रच्छादनं हि तत् ॥

इति । संचयनाङ्गमपरं श्राद्धं तथैवोक्तम्—

तृतीयेऽहनि कर्तव्यं प्रेतदाहादिनाद्विजः ।

इति । कूर्मपुराणे विशेषोऽभिहितः—

प्रेताय च गृहद्वारि चतुर्थे भोजयेद्द्विजान् ।
द्वितीयेऽहनि कर्तव्यं क्षुरकर्म च बान्धवैः ॥
चतुर्थे बान्धवैस्सर्वैरस्थिसंचयनं चरेत् ।
पूर्वान् विप्रान् नियुञ्जीत युग्मांस्तु श्रद्धया शुचीन् ।
पञ्चमे नवमे चैव तथैवैकादशेऽहनि ।
युग्मान्विप्रांस्तु भुञ्जयान्नवश्राद्धं ततो विदुः ॥

ब्रह्मपुराणे—

चतुर्थे ब्राह्मणानां च पञ्चमेऽहनि भूभुजाम् ।
नवमेऽहनि वैश्यानां शूद्राणां दशमेऽहनि ॥
प्रेतार्थं सूतकान्ते तु ब्राह्मणान् भोजयेद्दश ।
नवश्राद्धनिमित्तं तु एकमेकादशेऽहनि ॥ इति ॥

इति स्मृतिचन्द्रिकायां नग्नप्रच्छादनश्राद्धनिरूपणम्.

---

## अथ नारायणबलिः.

---

ब्रह्मपुराणे—

नारायणबलिं वक्ष्ये व्यासेनोक्तं यथा पुरा ।
चण्डालोदकसर्पाद्यैर्विद्युज्ज्वालाविषादिभिः ॥
गिरिवृक्षाश्मभिश्शस्त्रैः पशुदंष्ट्रिनखिद्विजैः ।
मृतानां नैष्ठिकानां च यतीनां च तपस्विनाम् ॥
वैष्णवानां विशेषेण चान्येषां मोक्षकाङ्क्षिणाम् ।
मृतानां नैष्ठिकादीनां द्वादशेऽहनि कारयेत् ॥
संवत्सरात्परं कुर्याच्चण्डालाद्यैर्हतस्य च ।
आपत्तौ संकटे रोगे यद्वा देशविपर्यये ॥
कर्तृद्रव्यादिसंदेहे प्राणसंदेहदर्शने ।
यस्मिन्कस्मिन् दिने वाऽपि वत्सराद्बहिरेव चेत् ॥
उत्तरायणगे सूर्ये विषुवे चायनेऽपि वा ।
श्रोणायामथ रोहिण्यामेकादश्यां तु पक्षयोः ॥
पूर्वेद्युर्ब्राह्मणान् षड्वा निमन्त्र्य द्वादशापि वा ।
एकमाचार्यकं वृत्वा कुलशीलगुणान्वितम् ॥
सर्वावयवसंपूर्णं वेदशास्त्रार्थपारगम् ।
तत्र स्नानं मृदाऽद्भिश्च विधानेन समाचरेत् ॥
शुक्लाम्बरधरस्सम्यक्परिधायोत्तरीयकम् ।
उपवासं च संकल्प्य कर्ता तावज्जितेन्द्रियः ॥

प्रक्षाळ्य पादावाचम्य उपविश्यासने शुभे ।
गोचर्ममात्रं संलिप्य गोमयेन च वारिणा ॥
कुण्डं वा स्थण्डिलं कृत्वा रक्तवर्णमृदादिभिः ।
उपलिप्य यथापूर्वं स्वशाखोक्तविधानतः ।
आहूय विप्रान् संपूज्य स्वस्तिवाचनमाचरेत् ॥
शोभोपशोभासंयुक्तं मनोहरतरं परम् ।
तन्मध्ये स्थापयेत्कुम्भं विष्णुं वैवस्वतं यमम् ॥
स्थापयेत्स्वर्णरौप्यादिकृतं तत्र प्रपूजयेत् ।
वस्त्राभ्यां स्वर्णरौप्येण गन्धपुष्पाक्षतैश्शुभैः ॥
पञ्चाङ्गुलं क्रमात्कुर्यादात्मशुद्धिपुरस्सरम् ।
आसाद्य द्रव्यपात्रादि कुर्यान्न्यासादिकं ततः ॥
गन्धपुष्पाक्षतादींश्च आदायावाहयेद्धरिम् ।
ओं नमो नारायणायेति मूलमन्त्रः प्रकीर्तितः ॥
वैवस्वताय च नमो यमाय च नमस्तथा ।
सर्वोपचारैस्संपूज्य गन्धमाल्यैर्मनोहरैः ॥
ऋग्यजुस्साममन्त्रैश्च स्तुत्वा तद्दैवतैर्हरिम् ।
नृत्यगीतादिवाद्यैश्च पुराणैश्चेतिहासकैः ॥
विष्णोर्नामसहस्रेण स्तुत्वा स्तोत्रकथादिभिः ।
त्रिवारं सम्यगभ्यर्च्य कुर्याज्जागरणं निशि ॥
पूर्वादिषु दळेष्वेवं केशवादीन् प्रपूजयेत् ।
मध्वाज्यतिलमिश्रेण पिण्डान् दद्यात्समाहितः ॥

अपसव्यमवाक्पाणिः पञ्च पिण्डान् कुशेषु तु ।
दक्षिणाभिमुखो भूत्वा ब्रह्मणे च शिवाय च ॥
यमाय विष्णवे चैव प्रेतं च मनसा स्मरन् ।
पत्न्यादिभ्यो न दद्यात्तु स्नात्वा गच्छेद्गृहं प्रति ॥
आचार्यः प्रातरुत्थाय स्नात्वा संध्यादि नैत्यकम् ।
कृत्वा चैव तु पूर्वाह्णे विष्णुं वैवस्वतं यमम् ॥
केशवादींश्च संपूज्य ब्रह्माणं शंकरं तथा ।
स्वगृह्यविधिमाश्रित्य होमं पश्चात्समाचरेत् ॥
विष्णोर्नुकं परोमात्रेसाभ्यां हुत्वा तु पक्वतः ।
ओं नमो नारायणायैव यमाय ब्रह्मणे शिवे ॥
सूक्तेन पौरुषेणैव जुहुयात् षोडशाहुतीः ॥
नामभिः केशवाद्यैश्च समिदाज्यैस्समापयेत् ॥
ततो विप्रान् समाहूय देवार्थमुपवेशयेत् ।
प्रथमं चैव विष्ण्वर्थं यमं वैवस्वतं ततः ॥
विध्यर्थं तु ततो रौद्रं प्रेतार्थमपरं स्मृतम् ।
प्राङ्मुखान् देवकार्यार्थान् प्रेतार्थं च उदङ्मुखम् ॥
आवाहनादि यत्प्रोक्तं देवपूर्वं तदाचरेत् ।
अङ्गुलीयकवस्त्रादीन् यथाशक्ति समर्पयेत् ॥
अग्नौ करिष्य इत्येताननुज्ञाप्य प्रचोदितः ।
पितृयज्ञविधानेन कृत्वा संभोजयेद्द्विजान् ॥
तृप्तान् ज्ञात्वा ततो विप्रान् तृप्तिं पृष्ट्वा यथाविधि ।

मध्वाज्यतिलमिश्रेण पिण्डान् दद्यात्तु बर्हिषि ॥
विष्णवे प्रथमं दद्याद्ब्रह्मणे च शिवाय च ।
यमाय पञ्चमं पिण्डं दद्याद्वैवस्वताय च ॥
षष्ठं तु प्रेतमुद्दिश्य नामगोत्रमनुस्मरन् ।
विष्णोर्नाम गृहीत्वैव जलान्ते तान् समुत्सृजेत् ॥
होमान्ते द्वादशपक्षे विष्णुं वैवस्वतं यमम् ।
त्रिभिर्विप्रैस्समभ्यर्च्य पित्रादींश्च त्रिभिः पितॄन् ॥
मातामहादिकानन्यानाचार्यं प्रेतरूपतः ।
पार्वणेन विधानेन केशवाद्यैश्च नामभिः ॥
संपूज्य भोजयित्वा तु पिण्डान्ते बलिमुत्सृजेत् ।
ओंनमो नारायणायैव पित्रे चैव स्वधा नमः ॥
एवं मातामहादीनां बलिमुत्सृज्य नामभिः ।
ब्राह्मणान् भोजयित्वा तान् दद्यात्तेभ्यश्च दक्षिणाम् ॥
वस्त्रगन्धाक्षतैः पुष्पैराचार्यं सम्यगर्चयेत् ।
वृषं धेनुमनड्वाहौ स्वर्णं कांस्यमथापि वा ॥
वासो वा दक्षिणां दद्यात्प्रेतरूपेऽपि शक्तितः ।
गृहीत्वाऽऽशिषमप्येभ्यः प्रणिपत्य क्षमापयेत् ॥
सुताद्यो विधिमेतं तु कृत्वा तु प्राप्नयात्सुतान् ।
अकालमृत्युदोषाच्च मुच्यते नात्र संशयः ॥
इदं कर्म कृतं भक्त्या विष्णुलोकजिगीषया ।
इह कामानवाप्नोति विष्णुलोकं स गच्छति ॥

इति । सर्पहते त्वयं विशेषस्त्वष्टपुराणे दर्शितः—

सौवर्णभारनिष्पन्नं नागं कृत्वा तथैव गाम् ।
विप्राय विविवद्दत्वा पितुरानृण्यमाप्नुयात् ॥

इति । अत्रापवाद आदित्यपुराणे दर्शितः—

प्रमादादपि निश्शङ्कमकस्मान्मृत्युना मृतिः ।
शृङ्गिदंष्ट्रिनखिव्याळविषविद्युज्जलादिभिः ॥
चण्डालैरथवा चोरैर्निहतो यत्रकुत्रचित् ।
तस्य दाहादिकं कार्यं यस्मान्न पतितस्तु सः ॥

इति । अङ्गिराः—

यदि कश्चित्प्रमादेन म्रियतेऽग्न्युदकादिभिः ।
तस्याशौचं विधातव्यं दद्यात्पिण्डोदकक्रियाः ॥

इति । तत्रापि प्रायश्चित्तोत्तरकालमेव । गौतमः—'यस्य तु प्राणान्तिकं प्रायश्चित्तं स मृतश्शुध्येत्सर्वाण्येवोदकानि प्रेतकार्याणि कुर्युः' इति । शातातपः—

वृद्धश्शौचक्रियालुप्तः प्रत्याख्यातभिषक्क्रियः ।
आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनाम्बुभिः ॥
तस्य त्रिरात्रमाशौचं द्वितीयेऽह्न्यस्थिसंचयः ।
तृतीये तूदकं दत्त्वा चतुर्थे श्राद्धमाचरेत् ॥

इति । अस्ति च भृगुपतनादौ विधिः । तथाच पुराणम्—

दुश्चिकित्सैर्महारोगैः पीडितस्तु पुमान् यदि ।
प्रविशेज्ज्वलनं दीप्तं कुर्यादनशनं तथा ॥

अगाधतोयरशिं वा.............................॥

इत्यादि वक्ष्यते।

विप्रामुयदकचण्डालशृङ्गिदंष्ट्र्यभिशस्तितः।
अकामतो मृतानां तु दापयेदैन्दवद्वयम् ॥ इति ॥

इति स्मृतिचान्द्रिकायां नारायणबलिविधिः.

---

रजस्वलामरणे—

ग्राम्यालंकारसंयुक्तां तूष्णीं निर्हृत्य तां मृताम्।
यथोक्तविधिना मन्त्रैस्स्नाप्य गव्यैश्च पञ्चभिः ॥
शतकुम्भोदकैस्स्नानं[1] दश द्वादश वा भवेत्।
मलापनोदनं कृत्वा अलंकारान्तरं तथा ॥
वस्त्रान्तरावृतां कृत्वा दहेदेवं रजस्वलाम्।

गर्भिणीमृतौ संस्कारः—

मृता चेद्गर्भिणी नारी तस्यास्संस्कार उच्यते।
बोधायनभरद्वाजशौनकाद्यैर्यथोदितम् ॥
पितृमेधं तु संकल्प्य कृत्वा दारुचितेः क्रियाम्।
पश्चाद्दारुचितेः प्रेतां दक्षिणे वा यथाविधि ॥
निधाय गृह्यतन्त्राणि कृत्वाऽऽदर्वीदिमार्जनम्।
हिरण्यगर्भमन्त्रेण विलिखेदसिनोदरम् ॥

---

[1] शातकुम्भोदकैस्स्नानं, पा.

आगर्भदर्शनाद्ग्रामे मृतश्चेद्वटे क्षिपेत् ।
दृष्ट्वाऽथ मम पुत्रोऽसीति जीवन्तमभिमन्त्रयेत् ॥
अन्तर्धाय हिरण्यं तमभिषिच्य जलैश्शिशुम् ।
गत्वा ग्रामं शिशोर्दद्याद्यस्ते स्तन इति स्तनम् ॥
सुरक्षितं कुमारं तं कृत्वा गत्वा शवान्तिकम् ।
शतायुधाय स्योनान्तैः पञ्चभिस्तूदरे घृतम् ॥
यजुर्भिश्च प्रयासाय स्वाहेति द्वादशाहुतीः ।
प्राणायेत्यादिभिः पञ्च चक्षुषेत्यादिपञ्चभिः ॥
बोधायनाद्या इत्याहुर्व्याहृतीभिस्तु शौनकः ।
अभिषिच्य पुनर्मन्त्रैः द्विजानुज्ञामवाप्य च ॥
अव्रणं जठरं कृत्वा चितिमारोपयेच्छनैः ।
मृद्भिस्त्रिः कुशगोमूत्रैरापोहिष्ठादिभिस्त्रिभिः ॥
स्नाप्य वाऽऽच्छाद्य वासोभिश्शवधर्मेण दाहयेत् ।
इत्येतच्छौनकः प्राह आहुर्बोधायनादयः ॥
अष्टमे दिवसे दद्याद्धेनुभूम्यादि च द्विजे ।
यथाशक्ति भरद्वाज इ[illegible] स्मृतिसंग्रहः ॥

सूतिकामरणे—

सूतिकायां मृतायां तु कथं कुर्वन्ति याज्ञिकाः ।
कुम्भं सलिलमादाय पञ्चगव्यं तथैव च ॥
पुण्यर्भिरभिषिच्याथ वाचा शुद्धिं लभेत्ततः ।
पौरुषेण च सूक्तेन भविष्योक्ताभिरेव च ।

वामनेन च सूक्तेन शतकुम्भोदकेन च ।
यावदावर्तयेच्छुद्धिस्त्रिवारं न्यूनतोऽशुचिः ॥
दर्भोदुम्बरपर्णैश्च पलाशाश्वत्थपञ्चमैः ।
शतकुम्भोदकैः पश्चात्प्रक्षाल्याहतवाससा ॥
आच्छाद्य गन्धपुष्पाद्यैरलंकृत्य द्विजाज्ञया ।
दाहयेच्छवधर्मेण इति वाजसनेयिनः ॥

इति स्मृतिचन्द्रिकायां रजस्वलादिमरणे
संस्कारविषयाणि.

---

पर्युषितादिदोषे प्रायश्चित्तम्—

दिवा वा यदि वा रात्रौ शवस्तिष्ठति कर्हिचित् ।
तत्पर्युषितमित्याहुर्दहने तस्य का गतिः ॥
पञ्चगव्येन संस्नाप्य प्राजापत्यं समाचरेत् ।
क्लिन्ने छिन्नेऽतिदुर्गन्धे स्नाप्य गोमयवारिणा ॥
तप्तकृच्छ्रं द्विजैर्लब्ध्वा पुण्याद्भिरभिषेचयेत् ।
क्रिमिरुत्पद्यते यत्र स्नाप्य गोमयवारिणा ॥
मृद्भस्मकुशगोमूत्रैः प्रक्षाल्य च पुनःपुनः ।
तप्तकृच्छ्रैस्त्रिभिश्शुद्धिं लब्ध्वा दग्धं पुनर्दहेत् ॥
शवे चण्डालसंस्पृष्टे स्पृष्टो वा म्रियते यदि ।
चान्द्रायणं द्विजैर्लब्ध्वा स्नाप्य मन्त्रैः पुरोदितैः ॥
वस्त्राद्यैर्भूषितं कृत्वा शवधर्मेण दाहयेत् ॥

रजस्वलासूतिकयोः स्पर्शेऽन्त्यजशुनोर्यदि ।
मृतं वा म्रियमाणं वा चान्द्रस्सर्वत्र शोधकः ॥
विधिना तु भृगोःपातं श्वसूकरमृगादिभिः ।
न शोधयेत्तु संस्पृष्टं पुराणेष्वब्रवीन्मुनिः ॥
वृद्धो भिषक्क्रियात्यक्तश्शौचाचाराक्रियाऽक्षमः ।
स्वहस्तब्रह्महा स्तेयी सुरापी गुरुतल्पगः ॥
करीषाग्नौ दहेद्देहं भृगोः प्रपतनेन वा ।
नाशयेद्यावदायुष्यं गङ्गायमुनसंगमे ॥
महानदीं विशेद्वाऽपि न दोषोऽस्त्यत्र दुर्मृतौ ॥

आदिपुराणे—

दुश्चिकित्सैर्महारोगैः पीडितस्तु पुमान् यदि ।
प्रविशेज्ज्वलनं दीप्तं कुर्यादनशनं तथा ॥
अगाधतोयराशिं वा भृगोः पतनमेव वा ।
गच्छेन्महापथं वाऽपि तुषारगिरिमादरात् ॥
प्रयागवटशाखायां देहत्यागं करोति वा ।
गङ्गायमुनमध्यस्थस्सरस्वत्यां विशेन्मुदा ॥
उत्तमानाप्नुयाल्लोकान्नात्मघाती भवेत्क्वचित् ॥
वाराणस्यां मृतो यस्तु प्रत्याख्यातभिषक्क्रियः ।
काष्ठापाषाणमध्यस्थो* जाह्नवीजलमध्यगः ।
अविमुक्तस्थितस्तस्य कर्णमूलं गतो हरः ॥

---

* काष्ठपाषाणभूतस्तु. पा.

प्रणवं तारकं ब्रूते नान्यथा कस्यचित्क्वचित् ॥

इति । ब्रह्मगर्भः—

योऽनुष्ठातुमशक्तोऽपि महाव्याध्युपपीडितः ।
अब्धिवारिमहायात्रां कुर्वन्नामुत्र दुष्यति ॥ इति ॥

इति स्मृतिचन्द्रिकायां पर्युषितादिदोषे
प्रायश्चित्तादिनिरूपणम्.

---

## अथ यतिसंस्कारविधिः.

तत्र यमः—

सर्वसंगनिवृत्तस्य ध्यानयोगरतस्य च ।
न तस्य दहनं कार्यं नाशौचं नोदकक्रिया ॥
शुचौ देशेऽथ गायत्र्या देहं प्रक्षाळ्य वारिणा ।
मधुना सर्पिषाऽभ्यज्य प्रक्षाळ्य च सुगन्धिभिः ।
हिरण्यवर्णा इत्याभिरापोहिष्ठादिभिस्त्रिभिः ।
पवमानानुवाकेन शुद्धवत्या तरत्समैः ॥
शुचीवोऽग्निश्शुचीत्यृग्भिः प्रवदाजातवेदसा ।
पवित्रं तेऽथ चरणं पवित्रमिति च त्रिभिः ॥
अभिषिच्य कुशाग्रैर्वा द्विजानुज्ञामवाप्य च ।
अलंकृत्य च गायत्र्या गन्धमाल्यैस्समन्ततः ॥
दृढे शिक्ये निधायाथ वहेयुर्ब्राह्मणा दृढम् ॥
तेषां हि वहतामत्र सद्यश्शौचं विधीयते ॥

खनित्वा तु शनैर्भूमिं शिरोमात्रं तदन्तरे ।
निक्षिप्य स्नानमात्रेण शुद्धिं स्वायम्भुवोऽब्रवीत् ॥

इति । बोधायनः—

अथ संन्यासिनां धर्मो मृतानां विधिरुच्यते ।
ग्रामात्प्राचीमुदीचीं वा गत्वा यद्वाऽन्यतो दिशम् ॥
ब्रह्मवृक्षस्य वाऽधस्तादश्वत्थस्य शमीतरोः ।
खात्वा वा यज्ञवृक्षस्य नदीतीरे शुचिस्थले ॥
गर्तं सप्तव्याहृतिभिः खातं प्रोक्ष्याथ सप्तभिः ।
आस्तीर्याथ कुशानद्भिः प्रणवेनाभिमन्त्रयेत् ॥
शवं पञ्चामृतैः स्नाप्य सूक्तेन पुरुषेण च ।
गन्धमाल्यैरलंकृत्य शिक्येनादाय धार्मिकः ॥
निदधाति शवं श्वभ्रे प्राङ्मुखोदङ्मुखं च वा ।
विष्णो हव्यं रक्षस्वेति इदं विष्णुर्विचक्रमे ॥
अनेन दक्षिणे हस्ते दण्डं स्थाप्याथ कुण्डके ।
यदस्य पारे रजस इति शिक्यं निधापयेत् ॥
येन देवाः पवित्रेण मुखे जलपवित्रकम् ।
सावित्र्या प्रणवेनैव उदरे ब्रह्मभाजनम् ॥
भूमिर्भूमिमगान्मातेत्यृचा मध्ये* कमण्डलुम् ॥
चित्तिस्स्रुगिति दशभिर्होतृभिश्चानुमन्त्रयेत् ॥
सिकतैः पांसुभिश्श्वभ्रं संपूर्य श्वापदादिभिः ।

---

* गुह्ये. पा.

अभेदनं यथा तद्वत्ततो मार्जनलेपनैः ॥
अलंकृत्य सुगन्धाद्यैस्ततो गर्ते महाजले ।
स्नानमात्रेण शुद्धिस्स्यान्न विधिर्नोदकक्रिया ॥

इति। अत्र ज्ञातिभिरपि सचेलस्नानमात्रं कर्तव्यम्। तथाच स्मृत्यन्तरं—

पुत्रो भ्राताऽथ दौहित्रस्सपिण्डश्शिष्य एव वा ।
यतिं स्पृशन् वहित्वाऽपि सद्यस्स्नानेन शुध्यति ॥
संनिकृष्टैस्तु संन्यस्ते पितर्युपरते सुतैः ।
दहनं चैव कर्तव्यं यच्चान्यच्च स्वशक्तितः ॥
पितृमेधविधानेन दहेदुत्तपनाग्निना ।
अपि होतृविधानेन गायत्र्या प्रणवेन वा ॥
जलावगाहनादेव स्पृष्ट्वा शुद्धास्तु गोत्रिणः ।
अश्वमेधफलं यान्ति दग्ध्वा संबन्धिनो द्विजाः ॥
अहन्येकादशे प्राप्ते पार्वणं तु विधीयते ।
सपिण्डीकरणं तेषां न कर्तव्यं सुतेन तु ।
त्रिदण्डग्रहणादेवामेतमहोशना मुनिः ॥
कुटीचकं च प्रदहेत्पूरयेच्च बहूदकम् ।
हंसो जले विनिक्षेप्यः परं हंसं विदारयेत्* ॥ इति ॥

इति स्मृतिचन्द्रिकायां यतिसंस्कारविधिः

---

*प्रपूरयेत्. पाठान्तरम्.

## अथ गङ्गाम्भस्यस्थिनिक्षेपः.

तत्र शाण्डिल्यः—

द्वारवत्यां सेतुबन्धे गोदावर्यां च पुष्करे ।
अस्थीनि विसृजेद्यस्य स मृतो मुक्तिमाप्नुयात् ॥

इति । शङ्खलिखितौ—

गङ्गायां च प्रयागे च केदारे पुष्करोत्तमे ।
अस्थीनि विधिवत्त्यक्त्वा गयायां पिण्डदो भवेत् ।
पित्रो ऋणात्प्रमुच्येत तौ नित्यं मोक्षगामिनौ ॥

इति । योगयाज्ञवल्क्यः—

गङ्गायां यमुनायां वा कावेर्यां वा शुतुद्रुतौ ।
सरस्वत्यां विशेषेण ह्यस्थीनि विसृजेत्सुतः ॥

इति । शालंकायनः—

अस्थिसंचयनं कृत्वा स्वगृह्योक्तविधानतः ।
कुम्भे निधाय चास्थीनि कुम्भं भूमौ विनिक्षिपेत् ॥
तत्स्पृष्ट्वा शिष्टमन्त्राणां जपतः कर्म सिध्यति ।
अस्थिशुद्धिं विधायैव वृक्षाग्रे वा शुभे स्थले ॥
निधाय यात्रापर्यन्तं रक्षां कुर्याद्विचक्षणः ।
निक्षिपेत्पूर्वतो भूमौ षण्मासं नावलोकयेत् ॥
त्रिपक्षं वा त्रिमासं वा भूमेरुद्धरणं न च ।
अनित्यत्वाच्छरीरस्य कालद्रव्यादिसंभवे ॥

मासादिषु व्यतीतेषु अस्थीन्युद्धर्तुमिच्छति ।
त्र्यब्दमब्दद्वयं चैकं कृच्छ्रं मासाद्यनुक्रमात् ।

कृत्वेति शेषः ।

ततस्तद्दोषशान्तिस्स्यादन्यथा नरकं व्रजेत् ।
महातीर्थे दुर्मरणे दशाहाभ्यन्तरे मृतः ॥
अस्थिसंचयनं शुद्धिं कृत्वाऽम्भसि विनिक्षिपेत् ।
अर्धोदके मृतिर्यस्य तं दग्ध्वा विधिवद्बहिः ॥
अस्थिसंचयनार्थानां मन्त्राणां जपपूर्वकम् ।
तिलैराज्येन मधुना हिरण्यशकलैर्जलैः ॥
दुग्धेनाग्निं प्रशाम्यैव गङ्गाम्भसि विनिक्षिपेत् ॥

इति । आपस्तम्बोपि—'चतुर्थेऽह्न्यस्थिसंचयनं तेषां गङ्गाम्भसि प्रक्षेपः' इति । अस्थ्युद्धरणप्रकारमाह जयन्तः—

कर्तुर्जन्मत्रयं भद्रां त्रिपादृक्षाणि वार्जयेत् ।
भौमभृग्वर्कवारांश्च भद्राख्यं करणं तथा ॥
कीकसोद्धरणार्थाय तद्देशं बन्धुभिस्सह ।
गत्वा तत्र नमस्कृत्य प्राणायामपुरस्सरम् ॥
संकल्प्याप उपस्पृश्य मन्त्रमेतदुदीरयन् ।
सर्वसहे वसुमति त्वयि सर्वं लयं गतम् ॥
त्वं गर्भरक्षितं देहि मत्पित्राद्यस्थि पावने ।
इति संप्रार्थ्य भूदेवीं भूमिर्भूमिं जपेच्छनैः ॥
काष्ठेन खननं कृत्वा ह्यस्थीन्यादाय कुम्भतः

कुम्भो यथा न चलति तथा कार्यं प्रयत्नतः ॥
कुम्भसंपूरणं कुर्याद्गन्धपुष्पफलैर्मृदा ।
भूमिं पूर्वसमां कुर्याद्बलिं तत्र विनिक्षिपेत् ॥
बह्वन्नपानभक्ष्याद्यैर्यथा तृप्तिं प्रयाति सा ।
ततोऽनुमन्त्रयेदेतां बलिस्थेति त्र्यृचेन च ॥
ततो गृहीत्वाऽस्थि सुतो नदीतीरे निधाय तत् ।
प्रक्षाल्य पञ्चगव्येन पञ्चामृतविधानतः ॥
शातकुम्भोदकैस्सम्यगेषाऽन्या शुद्धिरीरिता ।
स्पृष्ट्वा स्पृष्ट्वा तदस्थीनि शतवारं मृदादिभिः ॥
स्नानं कुर्युर्विधानज्ञाः ब्राह्मणा भूतभावनाः ।
अदैवं दैवतं कुर्युर्दैवतं च सुदैवतम् ॥
ब्राह्मणाश्च महाभागास्तेभ्यो दद्याच्च दक्षिणाम् ।
कर्ता स्नानं स्वशुद्ध्यर्थं कुर्याद्वा कारयेत वा ॥
मृत्तिकाख्यं स्वशक्त्या तु त्रिंशद्वा पञ्चविंशतिः ।
ततः कुम्भोदकैः कुर्युरभिषेकं शतादिवत् ॥
श्रीरुद्रपवमानाभ्यां सूक्तैर्विष्ण्वादिसंज्ञितैः ।
तेषु ध्यायेद्वसून् रुद्रानादित्यान् पितृदेवताः ॥
शिवं विष्णुं तथेन्द्रादीन् सर्वांश्चेष्टदेवताः ।
अर्चयेद्गन्धपुष्पाद्यैर्नैवेद्यान्तैर्यथाविधि ॥
नमस्कृत्य विधानज्ञं दक्षिणाभिश्च तोषयेत् ॥
आविकाजिनवस्त्रैश्च क्षौमकौशयवर्णकैः ।

कुशरज्ज्वा दृढं बध्वा गङ्गाम्भसि विनिक्षिपेत् ॥

इति । आदिपुराणे—

गङ्गा भागीरथी यत्र सन्निधानं करोत्यथ ।
अस्थ्नां तत्राम्भसि क्षेपो ब्रह्मलोकाय कल्पते ॥

अस्थीनि मातापितृपूर्वजानां नयन्ति गङ्गाम्भसि ये कदा
तद्बान्धवस्यापि दयाभिभूतास्तेषां च तीर्थानि फलप्रदा
स्नात्वा ततः पञ्चगव्यैर्निषिच्य हिरण्यमध्वाज्यतिलै
अस्थीनि मृत्पिण्डपुटे निधायपश्यन् दिशं पितृराजोप
नमोऽस्तु धर्माय इति प्रविश्य जले स मे प्रीत इति क्षि
उत्थाय भास्वन्तमवेक्ष्य सूर्यं स दक्षिणां विप्रमुख्याय द
एवं कृते प्रेतपुरे स्थितस्य स्वर्गे गतिस्स्याच्च महेन्द्रतुल्या ।

इति । महाभारते—

यावदस्थि मनुष्यस्य गङ्गातोयेषु तिष्ठति ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥

इति । ब्रह्मपुराणे—

अस्थीनि मातापितृपूर्वजानां दशाश्वमेधे तु नरो नभस्ये
कृष्णाष्टम्यां पञ्चगव्यैर्निषिच्य हिरण्यमध्वाज्यतिलैर्विकीर्य ।
पुण्ये तु मृत्पिण्डपुटे निधाय नमोऽस्तु धर्माय इति ब्रुवंश्च ।
क्षिपेज्जले पितृतीर्थेन भक्त्या नत्वाऽथ सूर्यं प्रयतः प्रपश्येत्
यथाशक्त्या दक्षिणां चापि दत्वा पितॄन् सर्वान् ब्रह्मलोकं-
नयेत्तः ॥

नभस्यस्यापरे पक्षे अष्टम्यां मध्यगे रवौ ।
ब्राह्मणानुज्ञयाऽस्थीनि गङ्गाम्भसि विनिक्षिपेत् ॥
एवं कृते महापापी सुरापी गुरुतल्पगः ।
सर्वपातकयुक्तोपि मुक्तस्स्यान्नात्र संशयः ॥

इति । पद्मपुराणे—

अस्थ्नां कृत्वा तु संशुद्धिं केशवाद्यैश्च नामभिः ।
पञ्चगव्येषु निक्षिप्य गन्धाद्यैस्संप्रपूजयेत् ॥
द्विजानुज्ञामवाप्यैव गङ्गायां सुसमाहितः ।
संकल्पप्रयतस्तस्य चोच्चरन् गोत्रनामनी ॥
अघमर्षणसूक्तेन धर्मायैव नमोस्त्विति ।
विसर्जयेत्ततोऽस्थीनि यावदस्थीनि तज्जपेत् ॥ इति ॥

इति स्मृतिचन्द्रिकायामस्थिनिक्षेपप्रकारः.

---

## अथ गयाश्राद्धविधिः.

तत्रादिपुराणम्—

उद्यतस्तु गयां गन्तुं श्राद्धं कर्तुं विधानतः ।
विधाय कर्पटीवेषं ग्रामस्यापि प्रदक्षिणम् ॥
ततो ग्रामान्तरं गत्वा श्राद्धशेषस्य भोजनम् ।
कृत्वा प्रदक्षिणं गच्छेत्प्रतिग्रहविवर्जितः ॥

स्वगृहे घृतप्रधानद्रव्यं श्राद्धं नवदेवत्यं निर्वर्त्य श्राद्धशेषघृतं गृहीत्वा ग्रामं प्रदक्षिणीकृत्य ग्रामान्तरं गत्वा तत्र भुक्त्वा तमपि

प्रदक्षिणीकृत्य प्रतिग्रहादिविवर्जितो गच्छेदित्यर्थः । प्रतिग्रहविसर्जनं चागयाश्राद्धपरिसमाप्तेः ।

अनेनैव विधानेन गत्वा चोत्तरमानसम् ।
आचम्य कुशहस्तस्तु शिरस्यभ्युक्ष्य वारिणा ।
अब्रुवन् स्थानमध्ये तु गच्छेत्कनकसंज्ञितम् ॥

अब्रुवन्निति व्यर्थवाग्व्यवहारनिषेधः ।

तत्राचम्य शिरस्सिक्त्वा ब्रूयादादित्यमीक्ष्य च ।
गयायां सरसो मध्ये स्नात्वा पैतामहं परम् ॥
दृष्ट्वा स्थानं प्रविश्याथ श्राद्धं कुर्याद्यथाविधि ।
पितृव्यमातुलादीनां तथैकोद्दिष्टमेव च ॥
वाप्यां स्नानं मतङ्गस्य धर्मपृष्ठे परेऽहनि ।
श्राद्धपिण्डौ ततः कार्यौ मध्याह्ने कूपयूपयोः ॥

पिण्डदानस्य पृथगुपादानं गयायां तस्य प्राधान्यद्योतनार्थम् ।

ब्रह्मणस्सरसि स्नात्वा कृत्वा यूपप्रदक्षिणम् ।
तृतीयदिवसे कुर्याच्छ्राद्धं पिण्डावसेचनम् ॥
महानद्यामुपस्पृश्य तर्पयेत्पितृदेवताः ।
अक्षयान् लभते लोकान् कुलं चैव समुद्धरेत् ॥
गयाशिरसि तत्कुर्याच्छ्राद्धपिण्डौ चतुर्थके ।
पञ्चमे दिवसे गच्छेद्वटमक्षयसंज्ञकम् ॥
गयायां मुण्डपृष्ठे च सर्वपापैः प्रमुच्यते ।
गयाशीर्षे यदा श्राद्धं नाम्ना येषां तु निर्वपेत् ॥

नरकस्था दिवं यान्ति स्वर्गस्था मोक्षमाप्नुयुः ।
स्वर्गपातालमध्ये तु नास्ति तीर्थं गयासमम् ।
पितरो यान्ति देवत्वं दत्ते पिण्डे गयाशिरे ॥
मुण्डपृष्ठे पदं न्यस्तं महादेवेन धीमता ।
बहून्यब्दसहस्राणि तपस्तप्त्वा सुदुष्करम् ॥
अल्पेनाप्यत्र कालेन नरो धर्मपरायणः ।
पापाद्विमोचयत्याशु जीर्णां त्वचमिवोरगः ॥
गयाकूपे नरस्स्नात्वा कृत्वा तर्पणमेव च ।
वटवृक्षतले श्राद्धं ततः कुर्याद्विधानतः ॥
तत्राक्षयवटो नाम त्रिषु लोकेषु विश्रुतः ।
पितॄणां तत्र यद्दत्तमक्षय्यं तद्भवेद्ध्रुवम् ॥
वटमूलं समाश्रित्य शाकेनाप्युदकेन वा ।
एकस्मिन् भोजने विप्रे कोटिर्भवति भोजिता ॥
तीर्थानामुत्तमं तीर्थं गया त्रैलोक्यविश्रुता ।
दत्त्वा पिण्डोदके तत्र दृष्ट्वा च प्रपितामहम् ॥
अक्षयान् लभते लोकान् कुलं चैव समुद्धरेत् ।
उद्धृताः पितरस्सर्वे धर्मेण किमतः परम् ॥
श्रूयते पितृभिश्चैव गीता गाथा महामुने ॥
अपि नस्ते भविष्यन्ति कुले सन्मार्गगामिनः ।
गयामुपेत्य ये पिण्डान् दास्यन्त्यस्माकमादरात् ॥
शुक्लकृष्णावुभौ पक्षौ गयायां यो वसेन्नरः ।

पुनात्यासप्तमं चैव कुलं नास्त्यत्र संशयः ॥
गयां प्राप्तं सुतं दृष्ट्वा पितृणामुत्सवो भवेत् ।
पद्भ्यामपि जलं स्पृष्ट्वा अस्मभ्यं किं न दास्यति ॥
गृहाच्चलितमात्रस्य गयाया गमनं प्रति ।
स्वर्गारोहणसोपानं पितृणां तु पदेपदे ॥
ब्रह्मघ्नस्य सुरापस्य बालघ्नस्य गुरुद्रुहः ।
नाशमायाति वै पापं गयां समनुयाति यः ।
ब्रह्महा च कृतघ्नश्च गोघाती पञ्चपातकी ।
सर्वे ते निष्कृतिं यान्ति गयायां पिण्डपातनात् ॥
मकरे वर्तमाने तु ग्रहणे चन्द्रसूर्ययोः ।
दुर्लभं त्रिषु लोकेषु गयायां पिण्डपातनम् ॥
गयायामक्षयं श्राद्धं जपहोमतपांसि च ।
पितृक्षयो हि तत्पुण्यं तस्माच्चत्राक्षयं भवेत् ॥
भरतस्याश्रमे पुण्ये नित्यं पुण्यतमैर्वृते ।
मतङ्गस्य पदं पुण्यं दृश्यते सर्वमानुषैः ॥
ततो गयां समाश्रित्य ब्रह्मचारी जितेन्द्रियः ।
अश्वमेधमवाप्नोति गमनादेव भारत ॥

ब्रह्मचर्यं ऋतुकालादन्यत्र बोद्धव्यम् ।

ततो गच्छेत्तु राजेन्द्र धेनुकं लोकविश्रुतम् ।
तत्र चिह्नं महाराज अद्यापि सुमहाद्भुतम् ॥
कपिलायास्सवत्साया दृश्यन्ते कुरुनन्दन ।

विचरन्त्याः पदानि स्म कर्दमे नृपसत्तम ॥
तेषूपस्पृश्य राजेन्द्र पदेषु भरतर्षभ ।
यत्किंचिदशुभं पुंसां तत्प्रणश्यति भारत ॥
ततो गृध्रवटं गच्छेत् स्थानं देवस्य धीमतः ।
स्नात्वा तु भस्मना तत्र अभिगम्य वृषध्वजम् ॥
ब्राह्मणेन भवेच्चीर्णं व्रतं द्वादशवार्षिकं ।
इतरेषां तु वर्णानां सर्वपापक्षयो भवेत् ॥
ततो गच्छेत्तमुद्यन्तं पर्वतं लोकविश्रुतम् ।
सावित्र्यास्तत्र दृश्यन्ते पदानि भरतर्षभ ॥
तत्र संध्यामुपासीत ब्राह्मणश्शंसितव्रतः ।
उपासिता भवेत्संध्या तेन द्वादशवार्षिकी ॥
योनिद्वारं तु तत्रैव विद्यते भरतर्षभ ।
तत्र गत्वा विमुच्यन्ते पुरुषा योनिसंकटात् ॥
ततः पक्वादृते राजन् तीर्थसेवी यथाक्रमम् ।
विपुलां धनसिद्धिं च सिद्धिं च महतीं लभेत् ॥
ततो गच्छेत राजेन्द्र धर्मपृष्ठं समाहितः ।
तत्र धर्मो महाराज नित्यमास्ते युधिष्ठिर ॥
तत्राधिगम्य राजेन्द्र हयमेधफलं लभेत् ।
ततो विशल्यमासाद्य नरस्त्रैलोक्यविश्रुतम् ॥
अग्निष्टोममवाप्नोति स्वर्गलोकं च गच्छति ।
तथा माहेश्वरं धाम समासाद्य नरश्शुचिः ।

पितृमेधमवाप्नोति कुलं चैव समुद्धरेत् ॥
दिवौकसान्धंकरणीं समासाद्य जितेन्द्रियः ।
न दुर्गतिमवाप्नोति वाजपेयं च विन्दति ॥
अथ माषपदं गच्छेत् ब्रह्मचारी दृढव्रतः ।
तत्र माषपदे स्नात्वा वाजपेयफलं लभेत् ॥
तत्र कोटिस्तु तीर्थानां विश्रुता भरतर्षभ ।
तत्राभिषेकं कुर्वीत तीर्थकोट्यां श्रितव्रतः ॥
पुण्डरीकमवाप्नोति विष्णुलोकं च गच्छति ॥

पुण्डरीकशब्देन पौण्डरीकयागोऽभिधीयते ।

गोप्रचार.......................ब्रह्मप्रकल्पिताः ।
तेषु संसक्तमात्रेषु पितरो मोक्षमाप्नुयुः ॥
एको ह्यृषिस्तु प्रवराग्रहस्त आम्रेषु मध्ये सलिलं ददाति ।
आम्राश्च सिक्ताः पितरश्च तृप्ता एका क्रिया द्व्यर्थकरी बभूव ॥

या सा वैतरणी नाम नदी त्रैलोक्यविश्रुता ।
साऽवतीर्णा महाभागा पितॄणां तारणाय वै ॥
तत्र गत्वा नरः स्नात्वा गोदानं प्रकरोति यः ।
एकविंशतिवंश्यान्वै तारयेन्नात्र संशयः ॥
महानदी ब्रह्मसरोऽक्षयो वटः प्रभासमुद्यन्तमथो गयाशिरः ।
सरस्वती धेनुकधर्मपृष्ठे एते कुरुक्षेत्रसमा गयायाम् ॥
यदि पुत्रो गयां गच्छेत्कदाचित्कालपर्ययात् ।

तानेव भोजयेद्विप्रान् ब्रह्मणा ये प्रकल्पिताः ॥
येषां ब्रह्मसदः स्थानं[1] सोमपानं तथैव च ।
ब्रह्मकल्पितसंस्काराः विप्रा ब्रह्मसमाः स्मृताः ॥
वासो देहपरित्यागो गयायां तु विधीयते ।
श्राद्धं पिण्डोदके चैव गयायां परिकीर्तितम् ॥
यः करोति वृषोत्सर्गं गयाक्षेत्रे ह्यनुत्तमे ।
अग्निष्टोमसमं पुण्यं लभते नात्र संशयः ॥
तत्कूपयूपयोर्मध्ये पिण्डं दद्यान्महीतले ।
कूपोदकेन तत्कृत्वा पितॄणां दत्तमक्षयं ॥
ब्रह्मणा सदसि ब्राह्मे यूपः पुण्यः प्रकल्पितः ।
यूपं प्रदक्षिणीकृत्य वाजपेयफलं लभेत् ॥
नाम्ना कनकनन्देति तीर्थं चातिपवित्रकम् ॥
उदीच्यां मुण्डपृष्ठस्य ब्रह्मर्षिगणसेवितम् ।
तत्र स्नात्वा दिवं यान्ति स्वशरीरेण मानवाः ॥
दत्तं चापि सदा श्राद्धमक्षय्यं समुदाहृतम् ।
तत्र पुष्करिणी रम्या सुषुम्ना नाम नामतः ॥
स्नात्वा ऋणत्रयात्तत्र मुच्यते क्षीणकल्मषः ।
श्राद्धं भवति चानन्तं तत्र दत्तं महोदयम् ॥
तारयेच्च सदाश्राद्धी दश पूर्वान् दशापरान् ॥
मानसे सरसि स्नात्वा श्राद्धं निर्वर्तयेत्ततः ।

[1] ब्रह्मसरस्स्नानम्.

तीरे तु तस्य सरसो देवस्यायतनं महत् ॥
आरुह्य तु विमानं च सद्यो याति दिवं नरः ।
उत्तरं मानसं गत्वा सिद्धिं प्राप्नोति चोत्तमाम् ॥

तस्मिन्निर्वर्तयेच्छ्राद्धं यथाविभवमादरात् ।
कामांश्च लभते दिव्यान् मोक्षोपायं च विन्दति ॥

मानसे सरसि श्रेष्ठे दृश्यते महदद्भुतम् ।
दिव्यश्रुतश्च नक्षत्रग्रहशब्दो निशाम्यते ॥

गयायां गृध्रवटे च श्राद्धं दत्वा महाफलम् ।
गोगयायाश्शिरो यत्र तत्र पुण्या महानदी ॥

ऋषिदेवैस्सदा जुष्टं तीर्थं ब्रह्मसरस्तथा ।
यत्फलं संनिहत्यायां राहुग्रस्ते दिवाकरे ।
फलं तदखिलं प्रोक्तं गयायां तु दिनेदिने ॥

नन्दन्ति पितरस्तस्य सुवृष्टैरिव कर्षकाः ।
गयागतोऽन्नदाता यः पितरस्तेन पुत्रिणः ॥

यद्ददाति गयास्थश्च सर्वमानन्त्यमश्नुते ।
तथा वर्षत्रयोदश्यां मघासु च न संशयः ॥

इति स्मृतिचन्द्रिकायां गयाश्राद्धविधिनिरूपणम्.

## अथ गयाश्राद्धाधिकारिणः

तत्र पुत्रादयोऽधिकारिणो ज्ञेयाः । विशेषस्तूच्यते—

'पुत्रेषु विद्यमानेषु नान्यं वै कारयेत्स्वधाम् ।'

इति ऋश्यशृङ्गवचनस्यायमपवादः—

आत्मजो वाऽन्यजो वाऽपि गयाकूपे यदाकदा ।
यन्नाम्ना पातयेत्पिण्डं तं नयेद्ब्रह्म शाश्वतम् ॥

इति । तथाऽन्योपि विशेषः—

आत्मनस्तु महाबुद्धे गयायां तु तिलैर्विना ।
पिण्डनिर्वापणं कुर्यात्तथाऽन्या अपि गोत्रजाः ॥

अन्या इति छान्दसम् । अस्मादेव वचनादन्यत्र आत्मनः पिण्डदानं न कार्यमित्यवगम्यते । तथा—

सवर्णा ज्ञातयो मित्रा बान्धवास्सुहृदस्तथा ।
तेऽपि भूप गयाकूपे पिण्डान् दद्युर्विधानतः ॥

इति । मित्रा इति छान्दसम् ।

'न पुत्राय पिता दद्यान्न ज्येष्ठस्तु कनीयसे ।
न पत्न्यै च पतिर्दद्यादेष धर्मस्सनातनः' ॥

इत्यस्यापि गयायामपवादमाह गोभिलः—

पुत्रेभ्योपि पिता दद्यात्कनिष्ठेभ्योपि पूर्वजः ।
दद्यात्पिण्डं प्रयत्नेन गयायां तु समाहितः ॥

इति । अपिशब्दात्पत्न्या अपि भर्ता पिण्डं दद्यात् । तथा—

पित्रोस्तु जीवतोर्दद्याद्गयायां पिण्डमेव च ।
बदरेण च तद्दद्याद्यवान्नेन फलेन वा ॥
उपवीत्येव तत्कुर्याद्दाधियुक्तैस्तथा तिलैः ।
अतस्सर्वे दिवं यान्ति पिण्डदानादिति श्रुतिः ॥
तस्मात्तेभ्योपि यत्नेन दद्यात्पिण्डं विधानतः ।

इति । वृद्धशातातपः—

प्रीत्या गयायां पिण्डांस्तु सर्वेषां वर्णलिङ्गिनाम् ।
स्वयं कुर्वन्नरस्सम्यङ्महतीं श्रियमाप्नुयात् ॥

इति । मरीचिः—

न कर्तव्यं हि विप्रेण शूद्राणामौर्ध्वदैहिकम् ।
शूद्रेण ब्राह्मणस्यापि विना पापवशात्क्वचित् ॥ इति ॥

इति गयाश्राद्धाधिकारिनिरूपणम् ॥

इति श्री सकलविद्याविशारद श्रीकेशवादित्यभट्टोपाध्याय-
सूनु याज्ञिकदेवणभट्टोपाध्यायसोमयाजि-
विरचितायां स्मृतिचन्द्रिकायां
आशौचकाण्डः
समाप्तः.

